दधाति (तां० ब्रा० ६. ६. १२) इत्यन्तब्राह्मणोक्तस्य क्लृप्तिमाह—

**श्रैष्ठ्यकामस्याग्निवतो प्रतिपद्। बार्हतान्याज्यानि। बृहत्पृष्ठं श्यैतं ब्रह्मसाम। श्रुध्यमुष्णिहि। समानमितरं ज्योतिष्टोमेन ॥ ७ ॥**

इति। स्पष्टोऽर्थः। पवस्व वाचो-दवि-पवेति बहिष्पवमानम्। अग्निं दूतं-मित्रं वयम्-इन्द्रमिद्गा-इन्द्रे अग्नेत्याज्यानि। चतुर्ऋचेऽन्त्याया उद्धारः। अत्र सूत्रम्—चतुर्ऋचानामावृत्तिष्वन्त्यमुद्धरेत् (ला० श्रौ० ६. ४. १०) इति। स्वासु श्यैतयम्। इन्द्रमच्छेति श्रुध्यम्। अन्यत् सर्वं प्रकृतिवत्। ज्योतिष्टोमस्तोमः ॥ ७ ॥

[ मिथःशत्रुभूतबहुयजमानकयज्ञः ]

अथ मिथःशत्रुभूतबहुयजमानकयज्ञः। एते असृग्रमिन्दवः इति बहुभ्यः प्रतिपदं कुर्याद् (तां० ब्रा० ६.६.१३) इत्यादि इडावत् पशुमत् करोति (तां०ब्रा० ६.६.२३) इत्यन्तब्राह्मणोक्तस्य क्लृप्तिमाह—

**बहूनाम् असखीनां यजमानानाम्—एते असृग्रमिन्दव (सा० ८३०) इति स्तोत्रीयः। सप्तास्थिता सप्तदशस्य विष्टुतिः पृष्ठानाम्। समानमितरं ज्योतिष्टोमेन ॥ ८ ॥**

इति। [प्रथमे पर्याये सप्तसंख्याके] सति सा सप्तास्थितेत्यर्थः। अस्य क्लृप्तिः—एते असृग्रमिन्-दवि-पवेति बहिष्पवमानम्।

5. M¹My. in all places इतरत् instead of इतरं

21. M¹⁻³. Om. वा

अन्यत् सर्वं प्रकृतिवत् । ज्योतिष्टोमस्तोमः । सप्तदशस्य—सप्तभ्यो हिंकरोति । स तिसृभिः स तिसृभिः स एकया तिसृभ्यो हिंकरोति । स पराचीभिः । सप्तभ्यो हिंकरोति । स एकया स तिसृभिः स तिसृभिः (तां० ब्रा० २.६.१) इति ॥ ८ ॥

[ मिथःसुहृद्बहुयजमानकयज्ञः ]

अथ मिथःसुहृद्बहुयजमानकयज्ञः । दवि-द्युतत्या-रुचेति व्राताय प्रतिपदं कुर्याद् (तां० ब्रा० ६. ६. २४) इत्यादि वीर्येण समर्थयति (तां०ब्रा० ६.६.२६) इत्यन्तब्राह्मणोक्तस्य क्लृप्तिमाह—

**सखीनां यजमानानां-दविद्युतत्या रुचे-(सा० ६५४-६)ति स्तोत्रिय-उपास्मै गायता नर (सा० ६५१-३) इत्यनुरूपः । सप्तास्थिता सप्तदशस्य विष्टुतिः पृष्ठानाम् । समानमितरं ज्योतिष्टोमेन ॥ ६ ॥**

इति । स्पष्टोऽर्थः । क्लृप्तिश्च ॥ ६ ॥

[ दीक्षितमहायज्ञः ]

अथ दीक्षितमहायज्ञः । अग्न आयूंषि पवस इति प्रतिपदं कुर्याद् ( तां० ब्रा० ६. १०. १ ) इत्यादि तेष्वायुर्दधाति (तां० ब्रा० ६.१०.३) इत्यन्तब्राह्मणोक्तस्य क्लृप्तिमाह—

**दीक्षिते मृते-अग्न आयूंषि पवस (सा० १५१८-२०) इति प्रतिपदमन्यत्र व्यूढेभ्यो अहोभ्यः ॥१०॥**

इति । स्पष्टम् ॥ १० ॥

---

1. M[1]. °स्तोम° for स्तोमः ।
5. M[1-2] My[1]. प्राताय for व्राताय
16. P. प्रेते for मृते
18. M[1]. स्पष्टः for स्पष्टम्

**व्यूढेषु चेत् प्रेयात् । यदैव तदा गायत्री-प्रतिपत्कमहः स्यात्तस्यैषा प्रतिपत् ॥११॥**

इति । व्यूढेषु गायत्रीप्रतिपत्कानि आदितस्त्रीणि अहानि तेषु यदा यस्मिन्नहनि मृतः स्यात् तदा तस्य अह्नि एषा अग्न आयूंषि (सा० १५१८-२०) इति बहिष्पवमानस्य प्रतिपदित्यर्थः ॥

अन्येषु चतुर्थादिष्वहःसु प्र त आश्विनीर् (सा० ८८६-८) इत्यादि प्रतिपद एव कार्याः । न तु अग्न आयूंषी-(सा०१५१८)ति । दशमे तु अग्न आयूंषीत्येव प्रतिपत् ॥११॥

उदयनीयस्यापि गायत्रीप्रतिपत्कत्वात् तस्याप्यग्न आयूंषीति प्रतिपत् स्यादित्यत आह—

**अन्यत्रोदयनीयादतिरात्रात् । समानमितरं ज्योतिष्टोमेन ॥१२॥**

इति स्पष्टोऽर्थः । क्लृप्तिश्च । उदयनीये तु उपास्मै गायता नरः (सा०६५१-३) इत्येव प्रतिपत् । क्लृप्तिस्तु द्वितीयाध्याये प्रायश्चित्तप्रकरणे वक्ष्यते ॥१२॥

इति प्रथमप्रपाठके प्रथमः खण्डः ॥१॥

---

## द्वितीयः खण्डः

### [ ज्योगामयावियज्ञः ]

अथ ज्योगामयावियज्ञः । आ नो मित्रा वरुणा (सा० ६६३) इति ज्योगामयाविने प्रतिपदं कुर्याद् (तां० ब्रा० ६. १०. ४)

---

4. My[1] M[8] अह्नः for अह्नि

7. M[1] कार्यम् for कार्याः

12. P तेन for ज्योतिष्टोमेन

13. SMy[2] M[2]. Om. स्पष्टोऽर्थः

19. M[1] °यावी for °यावि

इत्यादि-प्राणापानावेवास्मिन् दधाति (तां० ब्रा० ६. १०. ५) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**ज्योगामयाविन आ नो मित्रावरुणा (सा० ६६३-५) दविद्युतत्या रुचा (सा० ६५४-६) पवमानस्य ते कव (सा० ६५७-९) इति तृचक्लृप्तं बहिष्पवमानम्। आ नो मित्रावरुणा (सा० ६६३-५) पवस्व वाचो अग्रिय (सा० ७७५-७) उपास्मै गायता नरः (सा० ६५१-३) इति संभार्यस्तोत्रीय इति वा। अग्न आयाहि वीतय (सा० ६६०-२) इति राथन्तरम्। त्रीणि बार्हतानि। अग्निं दूतं वृणीमह (सा० ७९०-२) इति पूर्वे बार्हते। उत्तरे राथन्तरे इति वा। पुनानः सोम धारये-(सा० ६७५-६)ति रौरवं यौधाजयं दैर्घश्रवसमुद्वद्वा प्राजापत्यम्। त एकर्चाः। रथन्तरं तिसृषु। बृहत्पृष्ठं त्रैशोकं ब्रह्मसाम। इन्द्रं विश्वा अवीवृधन्नि-(सा० ८२७-९)ति कालेयम्। उप शिक्षापतस्थुष (सा० ७६१-३) इति सफं श्रुध्यमुष्णिहि ॥१॥**

इति। स्पष्टोऽर्थः ॥१॥

**ककुभावुत्तरे रथन्तरस्य करोति ॥२॥**

इति। बृहतीकारस्तवने उत्सो देव इत्यस्य पादस्याभ्यासवदत्राभ्यासो न कार्यः। एवं कृते ककुभावुत्तरे उत्सो देवः प्रत्नं सधस्थम् इत्येते स्याताम् इत्यर्थः ॥२॥

---

5. $M^1$ तृचः क्लृप्तिः, $MyM^{2-3}$ तृचक्लृप्तिः for तृचक्लृप्तं

21. $B^2M^3$ नाकार्यः for न कार्यः

**ब्रह्मायतनीया सप्तदशस्य विष्टुतिर्होतुः पृष्ठस्य ॥३॥**

इति । एष एव व्यूहः सप्तैकमध्ये (तां० ब्रा० २.८.१) इति खण्डोक्ता विष्टुतिः कार्या । होतुः पृष्ठस्येति वचनान्न प्रशास्त्रादिपृष्ठेष्वेषा ॥३॥

**उद्यत्येकविंशस्य विष्टुतिरग्निष्टोमसाम्नः । समानमितरं ज्योतिष्टोमेन ॥४॥**

इति । पसनोद्यतीत्यर्थः ॥४॥

**तस्य संपत् । षोडशाक्षराणि रथन्तराल्लुप्यन्ते । तावद्ब्रह्मायतनीयागर्भिणीभ्यामतिरिच्यन्ते । तत्संपन्नम् ॥५॥**

इति । उत्सः-प्रत्नमित्येतयोः ककुप्त्वेन स्तुतत्वात् बृहतीच्छन्दोऽपेक्षया षोडशाक्षराणि लुप्यन्ते । होतुः पृष्ठस्य बृहतः सप्तदशस्तोमस्योत्तमे पर्याये प्रथमे विष्टावे प्रकृत्यपेक्षया कुशाद्वयाधिक्येन बृहत्या स्तुतत्वात् प्राकृतमध्यमविष्टावककुब्द्वयापेक्षया षोडशाक्षराणि वर्धन्ते । प्रकृतौ सप्तदशस्य विष्टुतेः पञ्चदशाधिकसंख्यामध्यवर्त्तिविष्टावत्वात् गर्भिणीत्वम् । ततः उत्तमे पर्याये मध्यमविष्टावात्

---

1. M[1] विष्टुती for विष्टुतिः

2. M[1] व्यूढः for व्यूहः

7. M[1]B[1]My वसीनो°, B[2]M[2-3] बसनो° for पसनो

8. M[1]B[1] तत्र for तस्य

9. गर्भिणीम् for गर्भिणीभ्याम् ; PS. °रिच्यते for °रिच्यन्ते

13. M[1-3] My[1-2] B[1-2] om. प्रकृत्यपेक्षया and trans. ,प्राकृतमध्यमविष्टाव ककुब्द्वयापेक्षया after विष्टावे ; M[2-3]. Om. कुशा°

14. M[3] °मध्य° for °मध्यम°

15. M[1] विष्टुतोऽधिक° for विष्टुतेः पञ्चदश°; My[1] B[1] om. पञ्चदश°

16. M[1]. उत्तम° for उत्तमे

कुशाद्वयमुद्धृत्य प्रथमविष्टावनिवेशनात् ब्रह्मायतनीयत्वम् । कुशाद्वयस्य च बृहतीकारेण स्तुतत्वात् षोडशाक्षरातिरेकः ॥५॥

**सप्ततिरक्षराणि त्रैशोकादतिरिच्यन्ते । तावत् सफकालेयाभ्यां लुप्यन्ते । तत् संपन्नम् ॥६॥**

इति । त्रैशोकस्याद्यया स्तोत्रीयया त्रिषु पर्यायेषु पञ्चधावृत्तयातिजगत्या स्तुतत्वात् बृहत्यपेक्षया सप्ततिरक्षराणि वर्धन्ते । कालेयस्यानुष्टुभेन स्तुतत्वात् बृहत्यपेक्षया सप्तदशानां स्तोत्रीयाणाम् अष्टषष्टिरक्षराणि । सफाच्च द्वे । आहत्य सप्ततिर्लुप्तानि । अत्र निदानम्— ज्योतिर्विचारेष्वक्षरतः प्रकृतेर्य्यावद्वर्धन्ते तावदन्यस्माद्ध्रसन्ते । तस्मादिति निर्देशो वृद्धिह्रासयोस्तदिति ह्रास इति ज्योगामयाविसंसवसाहस्रप्रतिरूपेषु रथन्तरात् षोडशह्रासस्तद्वृद्धं ब्रह्मायतनीयाया (उ० ग्र० सू० १.४) इति ॥

अस्य क्लृप्तिः—आ नो मित्रा-दवि-पवेति बहिष्पवमानम् । आ नो मित्रा-पवस्व वाचः-उपास्मै इत्येकर्चाः । दवि-पवेति तृचाविति वा । बहिष्पवमानस्य मित्रावरुणसोमदेवताः । अग्न आयाहि-मित्रं वयम्-इन्द्रमिद्गा-इन्द्रे अग्नेत्याजानि । अग्निद्-मित्रं वयम्-आयाहीन्द्राग्नीति वा । पुनानः सोमेति रौरवयौधाजयदैर्घश्रवसानि सामतृचः । रौरवयौधाजयोद्वत्प्राजापत्यानि वा सामतृचः । रथन्तरं तिसृषु । स्वास्वौशनमन्त्यम् । बृहच्च वामदेव्यं च स्वासु त्रैशोकं चेन्द्रं विश्वा इति कालेयं चेति पृष्ठानि । उप शिक्षा-इन्द्रमच्छेति सफश्रुध्ये । गायत्रेषु आ इति निधनस्थाने तत्सदृशस्वरम् आयुरिति निधनं कुर्यात् । आयुरामयाविने (तां० ब्रा० ७.१.११) इति श्रुतेः ।

4. P. लुप्यते for लुप्यन्ते

5. $M^1$ $M^3$ त्रिष्टुप्° for त्रिषु ; $M^3$ प्रवृत्तया for (आ) वृत्तया

15. $M^3$ °सोमो for °सोम°

18. $My^1$. °तृचम् for °तृचः

19. $M^1$ $B^1$ $My^1$. Om. स्वासु

अन्यत् सर्वं प्रकृतिवत् । ज्योतिष्टोमस्तोमः होतुः पृष्ठस्य—पञ्चभ्यो हिंकरोति । स तिसृभिः स एकया स एकया । पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया । सप्तभ्यो हिंकरोति । स तिसृभिः स एकया स तिसृभिर् (तां० ब्रा० २.७.१) इति । अग्निष्टोमस्यैकविंशस्य पसनोद्यती विष्टुतिरिति ॥६॥

[ अभिशस्यमानयज्ञः ]

अथाभिशस्यमानयज्ञः । अपघ्नन् पवते मृध इत्यादि-निष्कृतं गमयति (तां०ब्रा० ६.१०.६-८) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह--

**अनृतमभिशस्यमानस्य-अपघ्नन् पवते मृधो (सा० १२१३-५)इति स्तोत्रीयो नौधसस्यर्क्षु शुद्धाशुद्धीयं ब्रह्मसाम यत्पदनिधनम् । सूर्म्येकविंशस्थ विंशति-रग्निष्टोमसाम्नः । समानमितरं ज्योतिष्टोमेन ॥७॥**

इति । न तिन(!) सूर्म्युभयत (तां० ब्रा० २.१७.१) इति विष्टुति-रित्यर्थः । स्पष्टमन्यत् । उपसरणे शुद्धाशुद्धीयं साम उपधावामि । इन्द्रमृषिमिति विशेषः ॥७॥

[ राजयज्ञः ]

अथ राजयज्ञः । वृषा पवस्व धारयेत्यादि-कामुकाऽस्माद्विड् भवति (तां० ब्रा० ६.१०.६-१०)इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह —

**राज्ञो यजमानस्य वृषा पवस्व धारये-(सा० ८०३-५) ति स्तोत्रीयः । श्यैतस्यर्क्षु वृषा ब्रह्मसाम । एकवृषं यद्येकराजः । समानमितरं श्रैष्ठ्यकामेन ॥८॥** 12

---

3. M[1] My[1]. Om. सप्तभ्यो ··· स एकया

5. M[1] व° supra प° in पसनो°

11. M[1] स्तूर्म्ये°, M[3] B[1-2] My[1] स्यूर्म्ये° for सूर्म्ये°

13. M[3] B[1-2] स्यूर्म्यु° for सूर्म्यु

20. °वृषा for °वृषं

इति । चक्रवर्तिनो राज्ञः एकवृषं ब्रह्मसाम । देशाधिपस्य राज्ञस्तु वृषा ब्रह्मसामेत्यर्थः ॥८॥

[ राज्ञ ऋद्धिकामयज्ञः ]

अथ राज्ञः ऋद्धिकामयज्ञः । पवस्वेन्दो वृषा सुतेत्यादि-ऋध्यते-( तां० ब्रा० ६. १०. १२ )त्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**जन ईर्त्संतः पवस्वेन्दो वृषा सुत (सा०७७८-८०)**
**इति स्तोत्रीयः । समानमितरं श्रैष्ठ्यकामेन ॥६॥**

इति । जने राष्ट्रे ईर्त्संतः ऋद्धिरिच्छोरित्यर्थः । ऋधु वृद्धावित्यस्माद्धातोः सनि आप्ज्ञप्यृधामित् (पा० सू० ७.४.५५) इति सूत्रेण ईत्वे अत्र लोपोऽभ्यासस्य (पा० सू० ७.४.५८) इत्यभ्यासलोपे शतरि षष्ठ्यन्तः । स्पष्टमन्यत् ॥६॥

इति प्रथमप्रपाठके द्वितीयः खण्डः ॥२॥

---

## तृतीयः खण्डः

[ द्वियजमानयज्ञः ]

अथ द्वियजमानयज्ञः । युवं हि स्थः स्वः पती इत्यादि-यज्ञयशसेनार्पयति ( तां० ब्रा० ६.१०.१४ ) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**द्वयोर्यजमानयोर् युवं हि स्थः स्वःपती (सा०१००१)**
**इति स्तोत्रीय आवृत्तस्तृचः । पुनानः सोमधारये-**
**(सा० ६७५-६)ति रौरवं यौधाजयं दैर्घश्रवसमुद्वद्वा**

---

4. B[2] राष्ट्रे ऋद्धिकरः for राज्ञः ऋद्धिकाम°; M[1] M[1-3] राष्टे for राज्ञः

10. My[1] सनः for सनि

प्राजापत्यम् । त एकर्चाः । अश्विनोर्व्रतं तिसृषु यत्पूर्वम् । पुरोजितो वो अन्धस (सा० ६९७-९) इति श्यावाश्वमान्धीगवमौदलम् । त एकर्चाः । अश्विनोर्व्रतं तिसृषु यदुत्तरम् । समानमितरं ज्योतिष्टोमेन ॥१॥

इति । अस्य क्लृप्तिः । युवं हि स्थो-वृषा पुनानो-यत्सोम चित्रम्-दवि-पवेति बहिष्पवमानम् । पुनानः सोम धारयेति रौरव-यौधाजयदैर्घश्रवसानि सामतृचः । रौरवयौधाजयोद्वत्प्राजापत्यानि वा । अश्विनोर्व्रताद्यं तिसृषु । आर्भवे पुरोजिती वो अन्धस इति श्यावाश्वान्धीगवौदलानि सामतृचः । अश्विनोर्व्रतोत्तरं तिसृषु । अन्यत् सर्वं प्रकृतिवत् ॥

ज्योतिष्टोमस्तोमः । इयं क्लृप्तिः मरुत्स्तोमविषयिणी । या ज्योतिष्टोमस्य सा मरुत्स्तोमस्य (आ० क० ५.१५) इति वचनात् । एतेन द्वौ त्रीन् वा याजयेत् (आ० श्रौ० २२. १३. ५) इत्यापस्तम्बसूत्रान्मरुत्स्तोमस्य द्विकत्रिकत्वेऽग्निष्टोमोऽयमेव कार्यः ॥१॥

[ वृष्टिकामयज्ञः ]

अथ वृष्टिकामयज्ञः । प्रास्य धारा अक्षरन्नित्यादि-दिवो वृष्टिं प्रयच्छति (तां० ब्रा० ६. १०. १६-८) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

वृष्टिकामस्य प्रास्य धारा अक्षरन्न् (सा० १७६५-७) इति स्तोत्रीयः । पुनानः सोम धारये-(सा० ६७५-६)ति रौरवं यौधाजयं दैर्घश्रवसमुद्वद्वत् प्राजापत्यम् । त एकर्चाः । अपांव्रतं तिसृषु यत्

3. B[3] M[8] च for त°

पूर्वम् । नौधसस्यर्क्षु सौभरं ब्रह्मसाम । तस्य हीषीति निधनम् । पुरोजिती वो अन्धस (सा० ६९७-९) इति श्यावाश्वमान्धीगवमौदलम् । त एकर्चाः । अपांव्रतं तिसृषु यदुत्तरम् । समानमितरं ज्योतिष्टोमेन ॥२॥

इति । स्पष्टोऽर्थः । क्लृप्तिश्च । सौभरमधिकृत्य हीषीति वृष्टिकामाय निधनं कुर्याद् ( तां० ब्रा० ८. ८. १९ ) इति श्रुतेः तद्विहितं गार्ग्यमशकाचार्येण ॥२॥

[ गोकामयज्ञः ]

अथ गोकामयज्ञः । तया पवस्व धारयेत्यादि-विन्दते मे जन्या गा राष्ट्रम् ( तां० ब्रा० ६. १०. १९ ) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

जन्या गा विवित्समानस्य तया पवस्व धारया यया गाव इहागमन्न् (सा०१४३६)इति स्तोत्रीयः। पुनानः सोम धारये-(सा० ६७५-६)ति रौरवं यौधाजयं दैर्घश्रवसमुद्वद्वा प्राजापत्यम् । त एकर्चाः। गवांव्रतं तिसृषु यत् पूर्वम् । त्रैककुभं ब्रह्मसाम-त्वमङ्ग प्रशँसिष ( सा० १७२३-४ ) इत्येतासु। स्वादिष्ठया मदिष्ठये-(सा० ६८९-९१) ति गायत्रं संहितं सत्रासाहीयम् । त एकर्चाः। गवांव्रतं तिसृषु यदुत्तरम् । समानमितरं ज्योतिष्टोमेनेति प्रतिपदाः ॥३॥

8. B[1] गार्ग° for गार्ग्य°

इति। जन्याः शत्रुजनसंबन्धिन्यः। विवित्समानस्य लब्धुमिच्छोरित्यर्थः। विदिर्लाभ इत्यस्मात् सन्। पवस्व वृष्टि-पञ्चर्चे आद्यन्ते उद्धृत्य मध्यमस्तृचः प्रतिपत् कार्यः। स्पष्टमन्यत्। गायत्रेषु आ इति निधनस्थाने तत्सदृशस्वरम् इडेति निधनं कार्यम्। इडां पशुकामाय निधनं कुर्याद् (तां० ब्रा० ७. १. ११) इति श्रुतेः। ज्योतिष्टोमस्तोमः ॥३॥

इति प्रथमप्रपाठके तृतीयः खण्डः ॥३॥

---

## चतुर्थः खण्डः

### [ अभिचारयज्ञः ]

अथाभिचारयज्ञः। [आष्कारणिधनं काण्वं] वषट्कारणिधनमभिचरणीयम्(स्य?) (तां०ब्रा० ८.१.१) इत्यादि-देवेष्वावषट्कारेण विध्यति (तां० ब्रा० ८.१.२) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**अथातो ब्रह्मसामिकाः। क्लृप्तौ श्यैतनौधसब्रह्मसामानौ ॥१॥**

इति। पूर्वमेवार्षेयकल्पे एकाहाहीनसत्रेषु रथन्तरबृहत्पृष्ठेष्वहस्सु नौधसश्यैते बृहत्सामनी क्लृप्ते इत्यर्थः ॥१॥

**अभिचरतः श्येनस्य प्रतिपच्चाज्यानि च। पुनानः सोम धारये-(सा० ६७५.६)ति रौरवमेकस्याम्।**

---

2. M[1] सनः for सन्

13. M[1] °सामिका, M[3] °सामिक्याः for °सामिकाः M[1-3] B[1-2] क्लृप्ताः for क्लृप्तौ

14. B[2] M[3] °सामानः for °सामानौ

17. B[2] M[3] श्यैतस्य for श्येनस्य

**अभिनिधनं काण्वमेकस्याम् । दैर्घश्रवसमेकस्याम् । उद्वद्धा प्राजापत्यम् । यौधाजयं तिसृषु । वषट्कारणिधनं ब्रह्मसाम । एष ब्रह्मा य ऋत्विय (सा० १७६८-७०) इति कालेयम् । अभिचरणीया विष्टुतयः । समानमितरं ज्योतिष्टोमेन ॥२॥**

इति । अत्र षड्विंशब्राह्मणोक्ता विष्टुतयः कार्या इत्यर्थः ॥२॥

**तस्य संपत् । सप्तदशविंशत्यक्षराणि वषट्कारणिधनादतिरिच्यन्ते । तत् कालेयाल्लुप्यते । तत् संपन्नम् ॥३॥**

इति । वषट्कारणिधनस्य सप्तदशानां स्तोत्रीयाणां प्रथमपादाभ्यासेनाष्टाक्षराणि । द्वितीयतृतीयचतुर्थेषु पादेषु चत्वारि चत्वार्यक्षराणि । आहत्य विंशतिः । एतस्य सप्तदशधावृत्त्या चत्वारिंशदधिकत्रिशताक्षराणि अतिरिक्तानि । कालेयस्य द्विपदात्वात् एकैकस्य स्तोत्रीयस्य बृहत्यपेक्षया विंशत्यक्षरन्यूनत्वात् सप्तदशधावृत्तौ चत्वारिंशदधिकत्रिशताक्षराणि लुप्तानि । तेन संपदुपपन्नेत्यर्थः । तदुक्तं निदाने—षष्टिरभिचरतो वषट्कारणिधनाद्विभ्रष्टापहारयोः श्रायन्तीयाच्चतुर्विंशतिस्तत्त्रयाणां कालेयात् (उ० ग्र० सू० १.४) इति । अस्य क्लृप्तिः—पवमानस्य जिघ्नतोदविद्युतत्यारुचा-पवमानस्य ते कव इति बहिष्पवमानम् । अग्निर्वृत्राणि-मित्रंहुवे-उ त्वा मन्दन्तु-ता हुवे ययोरिदम्—इत्याज्यानि । गायत्रेषु आ इति निधनस्थाने हंसीति निधनं कुर्यात् । हँसीत्यभिचरते (तां० ब्रा० ७.१.११) इति श्रुतेः । उच्चा त—गायत्रामहीयवे । पुनानः सोमेति रौरवाभिनिधनंकाण्वदैर्घश्रवसानि

---

1. B[3] after °श्रवसम् om. एकस्याम्
5. P. Om. ज्योतिष्टोमेन ··· इति
8. B[1-3] M[1] My[1] लुप्यन्ते for लुप्यते
10. My[1] वषण° for वषट्कार°
11. M[1] पदेषु for पादेषु

सामतृचः। रौरवाभिनिधनंकाण्वोद्वत्प्राजापत्यानि वा। यौधाजयं तिसृषु। स्वास्वौशनमन्त्यम्। रथन्तरं च वामदेव्यं च। अभि त्वा पूर्वपीतय इति वषट्कारणिधनं च। एष ब्रह्मेति कालेयं चेति पृष्ठानि। उपसरणे वषट्कारणिधनं सामोपधावामि। अभित्वापूर्वं प्रजापतिः ऋषिः। अभ्यासेनातिजगती छन्दः। इति विशेषः। अन्यत् सर्वं प्रकृतिवत्। ज्योतिष्टोमस्तोमः। पञ्चदशस्य विष्टुतिः। तिसृभ्यो हिंकरोति। स पराचीभिः। तिसृभ्यो हिंकरोति। स पराचीभिः। नवभ्यो हिंकरोति। स तिसृभिः स तिसृभिर् इति॥

सप्तदशस्य—तिसृभ्यो हिंकरोति स पराचीभिः। पञ्चभ्यो हिंकरोति। स एकया। स तिसृभिः स एकया। नवभ्यो हिंकरोति। स तिसृभिः। स तिसृभिः। स तिसृभिर् (तां०ब्रा० २.१२.१) इति॥

एकविंशस्य—तिसृभ्यो हिंकरोति। स पराचीभिः। नवभ्यो हिंकरोति। स तिसृभिः। स तिसृभिः। स तिसृभिः। नवभ्यो हिंकरोति। स तिसृभिः। स तिसृभिः। स तिसृभिर् इति॥३॥

[ पशुकामयज्ञः ]

अथ पशुकामयज्ञः। त्रैककुभं पशुकामाये- (तां० ब्रा० ८.१.३) त्यादि—वीर्य एव प्रतितिष्ठति (तां० ब्रा० ८.१.७) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**क्लृप्तः पशुकामस्य॥४॥**

इति। पूर्वोक्तगोकामयज्ञवत् क्लृप्तिरित्यर्थः॥४॥

[ ज्योगामयावियज्ञः ]

अथ ज्योगामयावियज्ञः। त्रैशोकं ज्योगामयाविने (तां० ब्रा० ८.१.८) इत्यादि-ज्येवास्मै वासयति (तां० ब्रा० ८.१.१३) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

---

4. My[1]. Om. अभित्वा पूर्वं ; My[1] °पतिमृषिम् for पतिः ऋषिः ; M[1] पूर्वचं for पूर्वं

8. M[3] after इति adds नव

19. M[1] B[1-2] M[3] My[1] क्लृप्तिः for क्लृप्तः

**क्लृप्तो ज्योगामयाविनः ॥५॥**

इति । स्पष्टम् ॥५॥

[ प्रतिष्ठाकामयज्ञः ]

अथ प्रतिष्ठाकामयज्ञः । आष्कारणिधनं काण्वं प्रतिष्ठाकामाये-(तां० ब्रा० ८.२.१)त्यादि-यदेतत् साम भवति प्रतिष्ठित्यै (तां० ब्रा० ८.२.२) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**प्रतिष्ठाकामस्य नौधसस्यद्वाष्कारणिधनं काण्वं ब्रह्मसाम। समानमितरं ज्योतिष्टोमेन ॥६॥**

इति । स्पष्टोऽर्थः ॥६॥

[ प्रजाकामयज्ञः ]

अथ प्रजाकामयज्ञः । वसिष्ठस्य जनित्रं प्रजाकामाये-(तां० ब्रा० ८.२.३)त्यादि-यदेतत् साम भवति प्रजात्यै (तां० ब्रा० ८.२.४) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**क्लृप्तः प्रजाकामस्य ॥७॥**

इति । स्पष्टोऽर्थः ॥७॥

[ लोककामयज्ञः ]

अथ लोककामयज्ञः । आथर्वणं लोककामाये-(तां०ब्रा० ८.२.५)त्यादि-प्रजात्यै (तां०ब्रा०८.२.६) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**लोककामस्य नौधसस्यद्वाथर्वणं ब्रह्मसाम । उद्यत्यो विष्टुतयः । समानमितरं ज्योतिष्टोमेनेति । इति रथन्तरपृष्ठः ॥८॥**

इति । स्पष्टम् ॥८॥

---

10. M[3]. Cm. अथ प्रजा ··· स्पष्टोऽर्थः (L. 14)

13. B[1] M[1]. क्लृप्तिः for क्लृप्तः

20. P. यदि for इति and connects यदि रथन्तरपृष्ठः with the next sentence.

अस्यैव बृहत्पृष्ठपक्षे क्लृप्तिमाह—

**अथ यदि बृहत्पृष्ठोऽग्नियवती प्रतिपत् । बार्हतान्याज्यानि । बृहत्पृष्ठम् । श्यैतस्याथर्वणं ब्रह्मसाम । अध्यमुष्णिहि । उद्यत्यो विष्टुतयः । समानमितरं ज्योतिष्टोमेन ॥९॥**

इति। स्पष्टम्। उद्यत्यो विष्टुतय इति पञ्चदशस्य तिपसोद्यती। सप्तदशस्य तिपनोद्यती। एकविंशस्य पसनोद्यती ॥९॥

[ भ्रातृव्यवद्यज्ञः ]

अथ भ्रातृव्यवद्यज्ञः। अभीवर्तं भ्रातृव्यवत (तां० ब्रा० ८.२.७) इत्यादि—भ्रातृव्यस्याभिवृत्त्यै (तां० ब्रा० ८. २. ७) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**भ्रातृव्यवतोऽभीवर्तो ब्रह्मसाम । अभिचरणीया विष्टुतयः । समानमितरं ज्योतिष्टोमेन ॥१०॥**

इति। स्पष्टम् ॥१०॥

[ विभ्रष्टयज्ञः ]

अथ विभ्रष्टयज्ञः। आयन्तीयं यज्ञविभ्रष्टाय (तां० ब्रा० ८.२.९) इत्यादि-सच्च करोति (८.२.११) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**यज्ञविभ्रष्टस्य आयन्तीयं ब्रह्मसाम । वयमु त्वामपूर्व्ये-(सा० ७०८-९)ति कालेयम् । समानमितरं ज्योतिष्टोमेन ॥११॥**

इति। यज्ञस्य विभ्रष्टः विभ्रंशनम्। भावे क्तप्रत्ययः। यज्ञस्य विभ्रंशनं पञ्चधा भवति। उद्गातुरपच्छेदात्, सोमापहरणात्,

---

6. B[2] adds इति after each उद्यती

7. B[2] वसनो° for पसनो°

सोमाभिदाहात्, सोमातिपवनात् क्रतुविलोपाच्च। तदुक्तं निदाने—पञ्चैव विभ्रंशा भवन्तीत्यौद्गाहमानिः। उद्गातुरपच्छेदः। सोमापहरणम्। सोमाभिदाहः। सोमातिपवनम्। क्रतुविलोपः। एतेषु हि पुनःसूतिराम्नाता संयुक्ता खलु। पुनःसूतिर्विभ्रंशेत हि यस्मिन्नेव यज्ञक्रतौ विभ्रंशेत सैव तस्य प्रायश्चित्तिरिति हि भवति (उ० ग्र० सू० १.७) इति। एतेषु निमित्तेषु आयन्तीयं ब्रह्मसाम। वयमु त्वेति कालेयं च। एतेषु निमित्तेषु प्रारब्धं यज्ञं समाप्य पुनश्च स एव यागः कर्तव्यः। पूर्वस्मिन् यागे आयन्तीयकालेये। उत्तरस्तु यथाप्रकृत्येव। अहर्गणे तु यस्मिन्नहनि उद्गातुरपच्छेदादिविभ्रंशस्तस्मिन्नेवाहनि आयन्तीयकालेये। न त्वन्येष्वहस्सु। अत्र निदानम्—एतेन (?आहितेन) मन्यन्ते आयन्तीयमप्येकस्मिन्नेवाहनि स्याद् (उ० ग्र० सू० १.७) इति ॥११॥

**तस्य संपत्। सप्तदशाष्टाक्षराणि आयन्तीयादतिरिच्यन्ते। तावत् कालेयाल्लुप्यते। तत् संपन्नम् ॥१२॥**

इति। आयन्तीयस्यैकैकस्य स्तोत्रीयस्योत्तमपादाभ्यासेनाष्टाक्षराण्यतिरिक्तानि। आहत्य षट्त्रिंशं शतमक्षराण्यतिरिक्तानि। कालेयस्य ककुप्छन्दस्त्वात् एकैकस्य स्तोत्रीयस्य बृहत्यपेक्षया अष्टाक्षराणि न्यूनानि। आहत्य षट्त्रिंशतं शतमक्षराणि न्यूनानि।

---

1. $M^1$ °वचनात् for °पवनात्
5. $My^1$ om. इति हि ; $B^2$ $M^1$ इति for इह
8. $B^2$ $M^3$ काले for यागे
14. $B^1$ $M^1$ My लुप्यन्ते for लुप्यते
16. $M^1$ om. एकैकस्य
17. $B^2$ त्रिश° for त्रिशं
19. $B^1$ $My^1$ अष्टाक्षराणि ऊनानि for अष्टाक्षराणि न्यूनानि ; $B^2$ °त्रिश° for °त्रिशतं

तेन संपदुपपन्ना। अत्रैवं निर्णयः। उद्गातुरपच्छेदादिनिमित्तपञ्चके तस्मिन्नेव यज्ञे आयन्तीयकालेये कृत्वा तं यज्ञं समाप्य स एव यागः सदीक्षोपसत्कः पुनः कार्यः। ब्रह्मसाम्नः पूर्वं चेदेतानि निमित्तानि तदा आयन्तीयम्। ततः ऊर्ध्वं चेत् सर्वप्रायश्चित्तमेव। न पुनर्यागः। अहर्गणे तु ब्रह्मसाम्नः प्रागप्येतेषु निमित्तेषु न पुनर्यागः। आयन्तीयकालेये भवत एव। विरोधाभावात्। तदुक्तं निदाने—न हि नित्येन [प्रायश्चित्तार्थमुपपद्यत इति तत्र दक्षिणावन्ति] प्रायश्चित्तान्यहर्गणेष्वनुपपद्यमानानि मन्यन्त एकं ह्यहः क्रतुभूतमविकृतानि भवन्ति। न पुनरहर्गणेष्वेकमहः क्रतुभूतं विद्यते। तत्रैकस्याह्नो भेष इतरेषामभेषे भेषजः कल्पो नोपपद्यतेऽथाप्यूर्ध्वं प्रथमादह्नो नैवादाक्षिण्यमुपद्यते। न पाश्वदक्षिण्यमिति। तदु चेद् ब्रूयुरथवैतदेवाहरदक्षिणं स्यात्तस्य चैव पुनःसूतिः स्यादिति सदीक्षोपसत्कस्य वै ते क्रतोः प्रकृतौ पुनःसूतिमामनन्ति इति ब्रूयात्तेनैतन्नोपपद्यते इति (उ० ग्र० सू० १.६) इति ॥

सोमातिपवनं नाम यागानन्तरं यष्टुः नष्टश्रीकृतादिवमनं वा विरेचनं वा। ज्येष्ठे इष्टिनि कनिष्ठस्य तस्य यज्वता। यद्वा। कनिष्ठे इष्टिनि ज्येष्ठस्य तस्य यज्वता चेति। तदुक्तं सूत्रकारेण—तीव्रसुति सोमातिपवितं याजयेत् (ला० श्रौ० ८.१०.७) इति। य इष्ट्वा

3. M[1] after यागः trans. न पुनर्यागः (L. 5)...नोपद्यते इति (L. 14); B[2] °दीक्षितो° for °दीक्षो°

4. B[1] om. एव। न ··· नोपद्यते इति (L. 14)।

15. M[1] यागान्तरं यष्ट्वा for यागानन्तरं यष्टुः; B[2] नष्टा श्रीकतादि, M[3] नष्टा श्रीकतमि for नष्टश्रीकृतादि

16. B[2] M[3] My[1] अनिष्टिनि for इष्टिनि

17. M[3] अतिप्रसुत for तीव्रसुति; B[2] °सुत for °सुति

पापीयान् स्यात् स सोमातिपवित इति शाण्डिल्यः । यः सोमं पीत्वा छर्दयेत विरिच्येत वेति धानंजय्यः (ला० श्रौ० ८.१०.६-९) । ज्येष्ठो (?ष्ठे) वा अनिष्टिकनीयसि इष्टिनीति वृष्टिरसीत्येतस्मात् पूर्वं सोमातिपवने जाते स एव भागः सदीक्षोपसत्कः पुनः कार्यः ॥

क्रतुविलोपशब्दार्थो निदानकारेणोक्तः — यत्र वा कृत्स्नं सौत्यमहः परस्याह्नः स्थानमापद्येतैकाहे अपरमहर् (उ० ग्र० सू० १.७) इति । अहर्गणेषु क्रतुविलोपे जाते परस्मिन्नहनि लुप्तं पूर्वमहः आयन्तीयब्रह्मसामपूर्वकं समापयेत् । एकाहे तु क्रतुविलोपे सति परस्मिन्नहनि । महारात्रे बुद्ध्वेत्याद्युदवसनीयान्तं आयन्तीयं ब्रह्मसामकं समाप्य प्राक् द्वादशाहात् पुनस्तस्यैव यज्ञस्य दीक्षाद्यवभृथान्तं यथाप्रकृति कार्यम् । अत्र क्रतुविलोपे वृद्धैरेवमुक्तं सर्वथा—महारात्रानारम्भ एव क्रतुविलोपः । महारात्राद्यारभ्य सुत्यायां क्रियमाणायां मध्ये यद्यपरमहरागच्छेत् तदा न सुत्योत्कर्ष इति । एवमहर्गणेऽपि । सुत्योत्कर्ष इति क्रतुविलोपस्य पर्यायनाम । अत्र आयन्तीयं यज्ञविभ्रष्टाय ब्रह्मसाम कुर्यादिति ॥

ज्योतिष्टोमेनाग्निष्टुता यज्ञविभ्रष्टो यजेत । यस्मिन् वा यज्ञक्रतौ विभ्रंशेत (तां० ब्रा० १७.८.१-२) इति ब्राह्मणम् । षड्विंशे—यज्ञो वाव यज्ञस्य प्रायश्चित्तिरिति पुनर्यज्ञ एव स एते उ ह त्वेवाहुतीर्यज्ञविभ्रष्टस्य प्रायश्चित्तिरिति ॥ (ष० विं० ब्रा० ३.२.४) इति । अत्रैव क्षुद्रकल्पसूत्रे षष्ठाध्याये—सौर्येषु प्रगाथेषु छन्दोमानां ब्रह्मसामानि कल्पयेत् बार्हतेषु स सूर्यस्तुत् । तेनैतेन

---

3. B[2] M[3] ज्येष्ठो वा कनिष्ठकनीयसी for ज्येष्ठो (ष्ठे?) वा अनिष्टिकनीमसि
4. B[2] My[1] B[1] कर्तव्यः for कार्यः
9. B[2] M[1] आयन्तीय° for आयन्तीयं
12. B[2] M[3] M[1] °रात्रप्रयोगानारम्भः for रात्रानारम्भः
13. M[1] My[1] before om. इति एवम्
20. M[3] B[2] उत्तर° for क्षुद्र°
21. M[1] साम्नि for सामानि ; M[3] सूर्यस्य सकृत् for सूर्यस्तुत् ; B[2] सूर्यस्य for सूर्य°

यजेत यो वा यज्ञे मुह्येद् यस्य वा यज्ञः सामि विलुप्येत सूर्योऽप्रज्ञातस्य प्रज्ञातेति हि भवतीति (क्षु० सू० ६.१४.७-८) इति ।

एवं यज्ञविभ्रष्टस्य प्रायश्चित्तानि गुरुलघून्याम्नातानि । तत्रेयं व्यवस्था । यदा यज्ञमध्ये उद्गातुरपच्छेदादिनिमित्तपञ्चकं तदा यज्ञस्य विभ्रष्टो यज्ञविभ्रष्ट इत्यर्थो द्रष्टव्यः । तेषु पञ्चसु निमित्तेषु आयन्तीयबृहत्सामकं तं यज्ञम् उदवसनीयान्तम् अहर्गणेषु तदहः पत्नीसंयाजान्तं आयन्तीयब्रह्मसामकं कुर्यात् । एकाहे सदीक्षोपसत्कः स एव यागो यथाप्रकृति पुनः कार्यः । यद्वा मध्येयज्ञम् ऐन्द्रवायवादिप्रधानग्रहबहिष्पवमानादिस्तोत्राज्यादिशस्त्राणां यस्य कस्यचित् प्रमादाल्लोपस्तदा यज्ञे विभ्रष्ट इत्यर्थो द्रष्टव्यः ॥

तत्र लुप्तानां यज्ञशञ्चम इत्यस्मात् प्राक् स्मरणं चेत् सर्वप्रायश्चित्तपूर्वकं लुप्तं ग्रहस्तोत्रशस्त्रं कुर्यात् । तत ऊर्ध्वं स्मृतं चेत् तमेव यज्ञं तत्स्तोमयुक्तम् अग्निष्टुद्गुणकं सदीक्षोपसत्कं कुर्यात् । तस्मिन् पूर्वयज्ञे सप्तदशस्तोमाधिकस्तोमयुक्ते सति अग्निष्टुत्साम्नां तत्रापर्याप्तत्वात् ज्योतिष्टोमोऽग्निष्टुदेव तदा कार्यः । आपस्तम्बमतात्

3. B[1] My[1] M[1] °विभ्रष्ट° for °विभ्रष्टस्य

6. My[1] om. तं

7. B[2] M[3] °गणे for °गणेषु

8. B[2] यदा for यद्वा

9. My[1]. Om. °आज्य° for °आज्यादि°; M[1]B[1] (आ) ज्यानि for (आ) ज्यादि

10. B[1] M[1] लोपाद्वा for लोपस्तदा

11. B[1] M[1] अस्याः for अस्मात्

12. B[1] लुप्तो ग्रहो, My[1] लुप्तं ग्रहो for लुप्तं ग्रहस्तोत्रशस्त्रं

13. B[2] °सत्कत्वं for सत्कं

14. B[1] M[1] अस्मिन् for तस्मिन्

15. B[1] My[1] पर्याप्तत्वात् for अपर्याप्तत्वात् ; B[2] My[1] °ष्टोमाग्नि° for °ष्टोमोऽग्नि°

सप्तदशाग्निष्टुद्वा अहर्गणेषु ग्रहस्तोत्रशस्त्राणां लोपे यदा स्मृतिस्तदा कार्यम् । यज्ञशञ्चम इत्यत ऊर्ध्वं स्मृतं चेत् तदा सूर्यस्तुद्द्वादशाहः दीक्षोपसत्कः कार्यः । यदा दैवान्मानुषाद्वा भयात् सर्वात्मना प्रारब्धयज्ञस्याकरणं स्यात् तदा यज्ञाद्विभ्रष्ट इत्यर्थो द्रष्टव्यः । तत्र तमेव यज्ञं तत्सोमयुक्तम् अग्निष्टुद्गुणकं कुर्यात् । तस्मिन् सप्तदशस्तोमादधिकस्तोमे ज्योतिष्टोमाग्निष्टुत् सप्तदशाग्निष्टुद्वा कार्यम् । अहर्गणेषु यस्य वा यज्ञः सामि विलुप्येत (क्षु० सु० ३. १४. ११) इति वचनात् सुर्यस्तुद्द्वादशाहः कार्यः । यदा यज्ञानन्तरं संवत्सरात् प्राक् पञ्चाद्यरिष्टं स्याद् तदाहवनीये नमः प्राणाय । वाचस्पतये स्वाहा ॥ नमो वाचे । प्राणपत्न्यै स्वाहा ॥ इत्याहुतिद्वयं कार्यम् । अहर्गणे ब्रह्मसाम्नः प्राक् उद्गातुरपच्छेदादिनिमित्तपञ्चके सति आयन्तीयं ब्रह्मसामक्रमे वा तदहः पत्नीसंयाजान्तं कार्यम् । तत ऊर्ध्वं चेत् सर्वप्रायश्चित्तमेव । उद्गातुरपच्छेदे पुनस्स्तुतिरूपप्रायश्चित्तं कुर्याद्वा । लोपेन दीक्षोपसदोमध्ये असंभवात् परस्मिन्नहनि आवर्तमाने द्वादशाहादिष्वह्नां द्वादशत्वसंख्यालोपप्रसङ्गात् यस्मिन्नहनि उद्गात्रपच्छेदादिनिमित्तपञ्चकं तस्मिन्नेव दिने तदहः पत्नीसंयाजान्तं कृत्वा पुनरावर्त्यमाने आमीक्षामहारात्रबोधाद्यनुपपत्तेः साद्यस्क्रवत् तदैव करणे वचनाभावात् उदवसनीया-

---

1. B[3] M[3] My[1] °ष्टुद्वत् for °ष्टुद्वा
4. M[1] Om. तत्र
5. M[1] तद् for तम्
10. My[1] °पत्यै for °पत्न्यै
11. M[1] निमित्तादि for निमित्त
12. M[1] आयन्तीय for आयन्तीयं
13. B[2] उद्गात्रप° for उद्गातुरप°
14. B[1] M[1] My[1] °श्चित्तो for °श्चित्तं ; B[2] M[3] न कुर्यात् । द्वारलोपेन for कुर्याद्वा । लोपेन
15. My[1] द्वादशकृत्व for द्वादशत्व
17. M[3] °वर्तमाने for °वर्त्यमाने ; B[1] M[1] °ऽन्यमीक्षा for आमीक्षा
18. M[1] °कारणे for °करण

नन्तरं तस्यैवाह्नः सदीक्षोपसत्कस्य पुनःकरणे द्वादशदीक्षोपसत्कत्वं वा एकदीक्षात्र्युपसत्कत्वं वेति विप्रतिपत्तेः । अहर्गणेषु विभ्रष्टाहस्यादक्षिणत्वेऽपि इतरेषामह्नां सदक्षिणत्वेन क्रतोरदक्षिणत्वानुपपत्तेश्च । अतः इदं पुनःस्तुतिरूपं प्रायश्चित्तम् एकाहविषयमेव नाहर्गणविषयम् । एतत्सर्वं विवृतमुपग्रन्थकृता भगवता कात्यायनेन—अहर्गणेष्वनुपपद्यमानानि मन्यन्त एकं ह्यहः क्रतुभूतमविकृतानि भवन्ति । न पुनरहर्गणेष्वेकमहः क्रतुभूतं विद्यते । तत्र एकस्याह्नो भ्रेष इतरेषाभ्रेषात् भ्रेषजः कल्पो नोपपद्यते । इतरथाप्यूर्ध्वं प्रथमादह्नो नैवादक्षिण्यमुपपद्यते इति । न पाञ्चदक्षिण्यम् इति । तदु चेत् ब्रूयुरथैतदेवाहरदक्षिणं स्यात्तस्य चैव पुनःस्तुतिः स्यादिति सदीक्षोपसत्कस्य वै क्रतोः प्रकृतौ पुनःस्तुतिमामन्तीति ब्रूयात्तेनैतन्नोपपद्यते । (उ०ग्र० सू० १.६) इत्येवं व्यवस्था विद्यारण्यकपर्दित्रयीविद्यावृद्धयज्ञपूरुषधूर्तस्वामिश्रीराममिश्रैः कृता ॥१३॥

[ योनौ यज्ञः ]

अथ योनौ यज्ञः । तस्माद्वा एतेन पुरा ब्राह्मणा बहिष्पवमानमस्तौषत । योनेर्यज्ञं पृतनवामहा इति यज्ञन्ततः स्तुवन्ति योनौ यज्ञं प्रतिष्ठापयन्ति (तां०ब्रा० ८.६.४) इति ब्राह्मणोक्तस्य क्लृप्तिमाह—

**योनेर्यज्ञं तन्वानस्य यज्ञायज्ञीयं बहिष्पवमाने-स सुन्वेयो वसूनाम् (१०६६-७) उप शिक्षापतस्थुष (सा० ७६१-३) इति सफपौष्कले । यज्ञायज्ञीयस्यर्क्षु गायत्रमग्निष्टोमसाम । समानमितरं ज्योतिष्टोमेन ॥१४॥**

---

2. B[2] before विप्रति° ins. प्रति

4. M[1] M[3] °रूप° for °रूपं.

9. B[1] om. इति । न पाञ्च ··· तेनैतन्नोपपद्यते (L. 11)

13. My[1]. Om. °यज्ञ°

16. M[1] यद्वदन्तः for यज्ञं ततः

18. प्रतन्वानस्य for तन्वानस्य

इति। स्पष्टोऽर्थः। अस्य क्लृप्तिः—उप-दवि-पवेति यज्ञायज्ञीयं बहिष्पवमानम्। स्वादिष्ठया मदिष्ठयेति। गायत्रसंहिते। स सुन्वे य उप शिक्षेति सफपौष्कले। यज्ञायज्ञीयस्यर्क्षु गायत्रम्। तस्य यक्ज्ञां-यज्ञा वो अग्नयो इति प्रस्तावः। आकाशरांचक्षसे पप्रि वयम-मृतं। जातवेदासाप्रें। प्रियमित्रं सुशा। इत्यद्गीथः। हिंका आप्रे इति प्रतिहारः। सा इषो इत्युपद्रवः। आ इति निधनम्। प्रिय मित्र सुशंमिषोम्। ऊर्जोनपातं सहिनायमस्मायूप्रेः। दशेम हव्यदा। हिं आप्रे। तायो। आ इत्यग्निष्टोमसाम। एवमुत्तरत्र। अन्यत् सर्वं प्रकृतिवत्। अत्र सूत्रम्—मनसा स्वभक्तिमोंकारं तथा स्वरं वाचा (ला० श्रौ० ७.१०.२०) इति। अत्र बहिष्पवमाने रेतस्यारथन्तरवर्णे न कार्ये। अत्र निदानम्—योनौ यज्ञं तन्वानस्य कथं रेतस्यारथन्तरवर्णे स्याताम् इति। उभे यथास्थानं स्यातामिति (नि० सू० २.७)। बहिष्पवमाने चोत्पन्ने भवतः। न चातिनिर्वर्तयति। अथापि यथागायत्रं यज्ञायज्ञीयधर्मान् प्रतिपद्यते। एवमपि यज्ञायज्ञीयं गायत्रधर्मान् प्रतिपद्यते। गायत्रस्य बहिष्पवमान एष धर्मो भवतीत्यपरम्। नान्यत्र गायत्रान्न चान्यत्र बहिष्वमानाद् इति ॥१४॥

**तस्य संपत्। षडक्षराणि बहिष्पवमानादति-रिच्यन्ते। तावदुष्णिक्ककुभ्यां लुप्यते। तत् संपन्नम् ॥१५॥**

इति। बहिष्पवमाने तृचत्रयेऽपि उत्तरस्तोत्रीययोः एकाक्षराधि-क्यात् षण्णां षडक्षराण्यतिरिक्तानि। सफे चत्वारि। पौष्कले द्वे।

1. My[1]. Om. अस्य क्लृप्तिः

9. M[3] after मनसा adds : तु

12. M[3] B[2] °स्वारं for °स्थानं

14. B[2] यज्ञीयधर्मान् for यज्ञायज्ञीयधर्मान्

15. B[2] °पद्येत for पद्यते

आहृत्य षडक्षराणि लुप्तानि । तेन संपदुपपन्ना । अत्र निदानम्—यज्ञायज्ञीयबहिष्पवमानषडक्षरसंसर्गात्तदुष्णिक्ककुभ्याम् ( उ० ग्र० सू० १. ४ ) इति ॥१५॥

इति प्रथमप्रपाठके चतुर्थः खण्डः ॥४॥

---

## पञ्चमः खण्डः

### [ ऋद्धिकामोक्थ्यः ]

अथोक्थ्याः । आष्टादंष्ट्रे ऋद्धिकामाय कुर्यात् इत्यादि-ऋद्ध्या एव (तां०ब्रा० ८.६.२०-२२) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**अथात उक्थ्यान्तस्य भवतः आष्टादंष्ट्राच्छावाकसाम्नः ॥१॥**

इति । उक्थ्यस्यान्तः । तस्य सामनी भवतः । सप्तम्यर्थे षष्ठी । उक्थ्यान्तविषये प्राकृतात् अन्ये हारिवर्णाष्टादंष्ट्रे सामनी भवत इत्यर्थः । तादृशोक्थ्यस्य संज्ञामाह-आष्टेति । आष्टादंष्ट्रम् अच्छावाकसाम यस्य स तथोक्तः । आगन्तुकसाम्ना व्यपदेशे कर्तव्ये हारिवर्णस्य ऋद्धिकामपशुकामयज्ञयोः साधारणत्वात् विशेषभूताष्टादंष्ट्रसाम्ना संज्ञा कृता ॥१॥

**मत्स्यपायि ते मह (सा० १४३२-४) इति कालेयम् । परि प्र धन्वे-(सा० १३६७-६)ति सफम् । साकमश्वम् । हारिवर्णमाष्टादंष्ट्रमित्युक्थानि । समानमितरं ज्योतिष्टोमेन ॥२॥**

इति । स्पष्टोऽर्थः । अत्र पूर्वोत्तरयोराष्टादंष्ट्रयोर्विकल्पः । तदुक्तं प्रतिहारसूत्रे—ज्योतिष्टोमे च विकल्पः (प्र० हा० सु० ६. १६) इति ॥२॥

---

2 M¹. ततः for तद्

**तस्य संपत्। चतुर्दश चतुरक्षराणि आष्टादंष्ट्रादतिरिच्यन्ते। तावत् सफकालेयाभ्यां लुप्यते। तत्संपन्नम् ॥३॥**

इति। आष्टादंष्ट्रस्यानुष्टुप्त्वात् प्रथमद्वितीययोः स्तोत्रीययोः ककुबपेक्षया एकैकस्य स्तोत्रीयस्य सप्तधावृत्तत्वात् षट्पञ्चाशदक्षराण्यतिरिक्तानि। कालेयस्योत्तरयोः स्तोत्रीययोः अनुष्टुप्त्वात् बृहत्यपेक्षया द्वितीयायाः सप्तधा तृतीयायाः पञ्चधावृत्तत्वात् अष्टाचत्वारिंशदक्षराणि। आहत्य षट्पञ्चाशत्। तेन संपदुपपन्ना ॥३॥

अथ द्वितीयः। तदुद्वंशीयमभवद् इत्यादि—पशुषु प्रतितिष्ठति (तां० ब्रा० ८.९.६-१९) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**अथात उक्थ्यान्तस्यैव भवत उद्वंशीयाच्छावाकसाम्नः ॥४॥**

इति। पूर्ववद् व्याख्येयम् ॥४॥

**नौधसस्य षट् ककुभः ॥५॥**

इति। ब्रह्मसाम्न उत्तमे पर्याये स तिसृभिः स तिसृभिरिति विष्टावद्वये उत्तरस्तोत्रीयाद्वयं ककुबुत्तराकारत्वेन गेयमित्यर्थः ॥५॥

**आ त्वा रथं यथोतय (सा० १७७१-३) इति कालेयम्। स सुन्वे यो वसूनाम् (सा० १०९६-७) परि प्र धन्वे(सा० १३६७-९)ति सफपौष्कले।**

---

1. M[3] B[1-2] उत्तराणि for अक्षराणि

9. M[3] Om. अथ द्वितीयः

12. P. उक्थान्तस्य for उक्थ्यान्तस्य

साकमश्वं हारिवर्णमुद्वंशीयमित्युक्थानि । समानमितरं ज्योतिष्टोमेन ॥६॥

इति । स्पष्टोऽर्थः ॥६॥

तस्य संपत् । चतुर्दश द्वादशाक्षराणि सप्त चाष्टाक्षराणि उद्वंशीयादतिरिच्यन्ते । तावत् पृष्ठानां ब्रह्मसामाच्छावाकसामाभ्यामुष्णिक्ककुब्भ्यां च लुप्यते । तत् संपन्नम् ॥७॥

इति । नौधसे ककुष्षट्केऽपि बृहत्यपेक्षया अष्टाचत्वारिंशदक्षराणि कालेयस्य । प्रथमाया अनुष्टुप्त्वात् बृहत्यपेक्षया पञ्चधावृत्त्या विंशतिरक्षराणि । उत्तरयोर्गायत्रीत्वात् द्वादशधावृत्तौ बृहत्यपेक्षया चतुश्चत्वारिंशं शतम् । सफस्य चत्वारि । पौष्कलस्य पङ्क्तित्वात् अष्टाक्षराणि । आहत्य चतुर्विंशत्यधिकद्विशताक्षराणि न्यूनानि । उद्वंशीयस्योत्तमपादाभ्यासेन पङ्क्तित्वात् पूर्वयोः स्तोत्रीययोः ककुबपेक्षया एकैकस्य सप्तधावृत्त्या अष्टषष्टिशतमक्षराणि । उत्तमायाः अनुष्टुबपेक्षया सप्तधावृत्त्या षट्पञ्चाशत् । आहत्य चतुर्विंशत्यधिकद्विशतमक्षराणि अतिरिक्तानि । तेन संपदुपपन्ना ॥७॥

[ ब्रह्मवर्चसकामोक्थ्यः ]

अथ ब्रह्मवर्चसकामोक्थ्यः । गायत्रेषु ब्रह्मवर्चसकामाये-(तां० ब्रा० ८. १०. १ )त्यादि—ब्रह्मवर्चसमवरुन्धे ( तां० ब्रा० ८.१०.२) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

ब्रह्मवर्चसकामस्य-स्वादिष्ठया मदिष्ठये-( सा० ६८९-९१ )ति गायत्रं संहितं सत्रासाहीयम् । त एकर्चाः । ऐडकौत्सं तिसृषु । पुरोजिती वो अन्धस (सा० ६९७-९) इति श्यावाश्वमेकस्याम् । क्रौञ्चमेकस्याम् । अयं पूषे-(सा०

८१८-२०)ति यद् द्वितीयमौदलमेकस्याम् । आन्धीगवं तिसृषु । साकमश्वम् । एवा ह्यसि वीरयुर् (सा० ८२४-६) इति सौभरम् । इन्द्रं विश्वा अवीवृधन्न (सा०८२७-६) इति नार्मेधम् ॥८॥

इति । स्पष्टम् ॥८॥

दशास्तूयमाना गायत्र्यः । सप्ततिः स्तूयमानाः ॥९॥

इति । एह्यूष्विति तिस्रः । एवाह्यसि वीरयुर् इति तिस्रः । तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोतीति न्यायेन इन्द्रं विश्वा इति तिसृभिरनुष्टुद्भिश्चतस्रो गायत्र्यः । आहत्य दश गायत्र्यः एताः ऋग्रूपेण पठ्यमानत्वादस्तूयमाना इत्यर्थः । एकविंशं साकमश्वम् । तथैव सौभरम् । अत्रापि नार्मेधे एकविंशतिरनुष्टुभः । अष्टाविंशतिर्गायत्र्यः । आहत्य सप्ततिरेता गीयमानत्वात् स्तूयमाना इत्यर्थः । एतदेव विवृतं निदाने—कल्पेनोक्थ्यप्रणया व्याख्याताः । तासां सिद्धि नार्मेधात् त्रीण्यष्टाक्षराण्यभ्यस्तादेकविंशतिर् (उ० ग्र० सू० १.५) इति । अस्यार्थः । तासां गायत्र्युष्णिक्-ककुब्विराडनुष्टुभां सिद्धिर्भवतीत्यर्थः । आनुष्टुभे तृचे एकविंशतिधा-भ्यस्तान्नार्मेधादेकैकस्य स्तोत्रीयस्याष्टाक्षराधिक्येन एकविंशतिरष्टा-क्षराण्यतिरिक्तानि । ताः सप्त गायत्र्यः । साकमश्वसौभराभ्यां द्विचत्वारिंशत् । नार्मेधादष्टाविंशतिः । ऋग्जपाद् दश । एवं कल्पोक्ता अशीतिर्गायत्र्यः संपन्ना इति ॥९॥

---

9. M[3]. °ष्टुभः for °ष्टुद्भिः

10. M[1]. एतादृशरूपेण for एताः ऋग्रूपेण; B[1]. स्वरूपेण for °रूपेण

11. My[1]. Om. नार्मेधे

16. M[3]. संधिः for सिद्धिः ; MyB[1] after °विंशतिधा adds : ऋग्जपाद्दश । कयोः

17. B[1] My[1]. विंशत्यष्टा° for विंशतिरष्टा°

**समानमितरं ज्योतिष्टोमेन ॥१०॥**

इति। क्लृप्तिः स्पष्टा। गायत्रेषु आ इति निधनस्थाने तत्सदृशस्वरं यश इति निधनं कुर्यात्। यशो ब्रह्मवर्चसकामाये-(तां० ब्रा० ७.१.११)ति श्रुतेः ॥१०॥

**तस्य संपत्। एकविंशतिश्चतुरक्षराण्युक्थानां ब्रह्मसाम्नो लुप्यन्ते। तावत् कौत्सक्रौञ्चाभ्यां च नार्मेधाच्चातिरिच्यते। तत् संपन्नम् ॥११॥**

इति। सौभरस्य गायत्रत्वात् ककुबपेक्षया एकैकस्य चतुरक्षराणि। आहत्य चतुरशीत्यक्षराणि न्यूनानि। कौत्सस्य मध्यमपादाभ्यासेन अनुष्टुप्त्वात् गायत्र्यपेक्षयैकैकस्याष्टाक्षराणि। क्रौञ्चस्यादौ चतुरक्षराधिक्येन बृहतीत्वात् अनुष्टुबपेक्षया चत्वारि। नार्मेधस्यानुष्टुप्त्वात् पूर्वयोः स्तोत्रीययोः उष्णिगपेक्षयैकैकस्य सप्तधावृत्त्या षट्पञ्चाशत्। आहत्य चतुरशीत्यक्षराण्यतिरिक्तानि। तेन संपदुपपन्ना ॥११॥

इति प्रथमप्रपाठके पञ्चमः खण्डः ॥५॥

---

षष्ठः खण्डः

[ पशुकामोक्थ्यः ]

अथ पशुकामोक्थ्यः। गायत्रीषु पशुकामाये-(तां० ब्रा० ८.१०.५)त्यादि-पशूनेवावरुन्धे (तां० ब्रा० ८.१०.६) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

---

2. B[1] My[1] M[1] गायत्रीषु for गायत्रेषु

3. B[1]. My. Om. यश इति निधनं ; B[2]M[3]. Om. यशः ; B[2]M[3]. Om. यशो ब्रह्मवर्चसकामायेति श्रुतेः

18. B[2]. before उक्थ्यः ins. यज्ञ

पशुकामस्य मत्स्यपाथि ते मह (सा० १४३२-४) इति कालेयम् । परि प्र धन्वे-(सा० १३६७-९)ति-सफम् । साकमश्वम् । तं ते मदं गृणीमसी-(सा० ८८०-८८२)ति सौभरम् । इन्द्रं विश्वा अवीवृधन्न् (सा० ८२७-९) इति नार्मेधम् ॥१॥

इति । स्पष्टम् ॥१॥

नवास्तूयमाना उष्णिहः । त्रिषष्टि स्तूयमानाः ॥२॥

इति । इन्द्रं विश्वा इत्यानुष्टुभे तृचे एकैकस्मात् स्तोत्रीयात् चतुर्षु चतुर्षु अक्षरेषूद्धृतेषु एह्यूष्विति गायत्रतृचे निहितेष्वस्तूयमाना नवोष्णिहः ऋचः । एवमेवैकविंशस्तोमेन प्रत्येकं साकमश्वसौभरनार्मेधेषु गीयमानेषु त्रिषष्टि स्तूयमाना इत्यर्थः । एतदेव विवृतं निदाने—चतुरक्षराणि परयोर् (उ० ग्र० सू० १.५) इति । परयोः पशुकामोक्थ्यपुरुषकामोक्थ्ययोः ॥२॥

समानमितरं ज्योतिष्टोमेन ॥३॥

इति । स्पष्टा क्लृप्तिः । गायत्रेषु आ इति निधनस्थाने तत्सदृशस्वरम् इडेति निधनं कुर्यात् । इडां पशुकामाय निधनं कुर्यात् (तां० ब्रा० ७.१.११) इति श्रुतेः ॥३॥

[ पुरुषकामोक्थ्यः ]

तस्य संपद्यथाष्टादंष्ट्राच्छावाकसाम्नः ॥४॥

इति । प्रथमोक्थ्येऽस्माभिरपि व्याख्यातम् ॥४॥

अथ पुरुषकामोक्थ्यः । गायत्रीषु पुरुषकामाये-(तां० ब्रा० ८.१०.५)त्यादि-पुरुषानेवावरुन्धे (तां० ब्रा० ८.१०.६) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

7. B[2]M[3]. before नवा° adds : गायत्रस्य

10. M[1]. Om. एव

**पशुकामस्य मत्स्यपायि ते मह (सा० १४३२-४) इति कालेयम् । परि प्र धन्वे-(सा० १३६७-६)ति सफम् । साकमश्वम् । सौभरम् । इन्द्रं विश्वा अवीवृधन्न् (सा० ८२७-८) इति नार्मेधम् ॥५॥**

इति । स्पष्टोऽर्थः ॥५॥

**नवास्तूयमानाः ककुभः । त्रिषष्टि स्तूयमानाः ॥६॥**

इति । पशुकामोक्थ्ये व्याख्यातम् ॥६॥

**समानमितरं ज्योतिष्टोमेन ॥७॥**

इति । क्लृप्तिः स्पष्टा ॥७॥

**तस्य संपद्यथा पूर्वस्य ॥८॥**

इति । स्पष्टम् ॥८॥

[ अन्नाद्यकामोक्थ्यः ]

अथ अन्नाद्यकामोक्थ्यः । विराट्स्वन्नाद्यकामाये-(तां० ब्रा० ८.१०.७)त्यादि-अन्नाद्यमेवावरुन्धे (तां० ब्रा० ८.१०.८) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**अन्नाद्यकामस्य-इन्द्रायाहि धियेषित (सा. ११४७) इति मध्यमां तृचस्य प्रभृतिं कृत्वा तासु कालेयम् ॥९॥**

इति । मध्यमाम् ऋचं तृचस्य आद्यां कुर्यादित्यर्थः । यथा इन्द्रायाहि धिया-इन्द्रायाहि चित्रभानो-इन्द्रायाहि तूतूजान इति ॥९॥

**आ यः पुरं नार्मिणीमदीदेद् (सा० १७७४-६) इति साकमश्वम् । तं ते मदं गृणीमसी-(सा० ८८०-२)**

ति सौभरम् । इन्द्रं विश्वा अवीवृधन्न् (सा० ८२७-९) इति नार्मेधम् ॥१०॥

इति । स्पष्टम् । अत्र सौभरस्य ऊर्गिति निधनं कुर्यात् । ऊर्गिति अन्नाद्यकामाये-(तां० ब्रा० ८.८.१९)ति श्रुतेः ॥१०॥

नवास्तूयमाना विराजः । त्रिषष्टि स्तूयमानाः ॥११॥

इति । इन्द्रं विश्वा इत्यानुष्टुभे तृचे एकैकस्मात् स्तोत्रीयात् द्वे द्वे अक्षरे उद्धृत्य तं तेमदमिति तृचे प्रत्यृचं निधाय ऋग्जपे कृते आ यः पुरम्-इन्द्रं विश्वा इति तृचाभ्यां सह नवास्तूयमाना विराजः । एवं कृत्वा त्रिभिरुक्थ्यस्तोत्रैः त्रिषष्टि स्तूयमाना विराज इत्यर्थः । तदुक्तं निदाने द्व्यक्षराण्युत्तरे (उ० ग्र० सू० १.५) इति । उत्तरे अन्नाद्यकामोक्थ्य इत्यर्थः ॥११॥

समानमितरं ज्योतिष्टोमेन ॥१२॥

इति । क्लृप्तिः स्पष्टा ॥१२॥

तस्य संपत् । पञ्च दशाक्षराणि द्वादश चैकादशाक्षराण्युक्थेभ्योऽतिरिच्यन्ते । तावत् कालेयाल्लुप्यते । तत् संपन्नम् ॥१३॥

इति । साकमश्वस्य विराट्त्वात् गायत्र्यपेक्षया प्रत्यृचं षडक्षराणि नार्मेधस्य पूर्वयोः स्तोत्रीययोः ककुबपेक्षया प्रत्यृचं चत्वार्यक्षराणि । आहत्य द्व्यशीत्यधिकशतमक्षराण्यधिकानि । कालेयस्य गायत्रत्वात् बृहत्यपेक्षया प्रथमस्य स्तोत्रीयस्य संयुक्ताक्षराभ्यां सह षड्विंश-

---

10. B[1-2] उत्तरत इति for उत्तर इति

18. M[1] My[1] चतुर् for चत्वारि

त्यक्षरत्वात् तस्य पञ्चधावृत्त्या दशाक्षराणि पञ्च । उत्तरयोः संयुक्ताक्षरेण प्रत्येकं पञ्चविंशत्यक्षरत्वात् तयोर्द्वादशधावृत्त्यैकादशाक्षराणि द्वादश । आहत्य द्व्यशीत्यधिकशतमक्षराणि न्यूनानि । तेन संपदुपपन्ना । अत्र सूत्रे लोपातिरेकयोरक्षरसंख्यासाम्यमङ्गीकृत्यातिरेकेऽपि लोपक्रम एवोक्तः । उक्थ्येष्वतिरेकक्रमस्य तथाविधात्वाभावात् ॥१३॥

[ ज्यैष्ठ्यकामोक्थ्यः ]

अथ ज्यैष्ठ्यकामोक्थ्यः । अक्षरपङ्क्तिषु ज्यैष्ठ्यकामायेत्यादि- ज्यैष्ठ्यमेवावरुन्धे (तां० ब्रा० ८.१०.९-१०) इत्यन्तब्राह्मणोक्तस्य क्लृप्तिमाह—

**ज्यैष्ठ्यकामस्य गायन्ति त्वा गायत्रिण (सा० १३४४-६) इति कालेयम् । स सुन्वेयो वसूनाम् (सा० १०६६-७) इति सफम् । अग्ने तमद्याश्वं न स्तोमैर् (सा० १७७७-९) इति साकमश्वम् । तं ते मदं गृणीमसी(सा० ८८०-२)ति सौभरम् । इन्द्रं विश्वा अवीवृधन्न् (सा० ८२७-९) इति नार्मेधम् ॥१४॥**

इति । स्पष्टम् ॥१४॥

**अष्टावस्तूयमाना अनुष्टुभः । षट्पञ्चाशत् स्तूयमानाः ॥१५॥**

इति । अग्ने तमद्येति तृचे प्रथमस्तोत्रीये पञ्चविंशतिरक्षराणि । द्वितीये षड्विंशतिः । तृतीये पञ्चविंशतिः । आहत्य षट्सप्तति-

---

4. My[1] Om. °संख्या°

19. P, °शत for °शत्

रक्षराणि । तं तेमदमिति तृचे चतुरशीत्यक्षराणि । आहत्य षष्टिशतम् अक्षराणि । पञ्चानुष्टुभः । इन्द्रं विश्वा अवीवृधन्निति तिस्रोऽनुष्टुभः । ऋग्जपे एता अस्तूयमानाः अष्टावनुष्टुभः । एवमक्षरसंपत्याष्टास्वनुष्टुप्सु एकविंशस्तोमेन प्रत्येकं सप्तधावृत्त्या गाने षट्पञ्चाशत् स्तूयमाना अनुष्टुभः संपन्ना इति । तदुक्तं निदाने—समानोऽभ्यास उत्तमे त्रीण्युष्णिग्भ्यश्चतुरक्षराणि लुप्यन्ते । सप्ताक्षराणि पङ्क्तिभ्यः । तदेकया पङ्क्तचा संपादयेदभ्यस्ते चैवम् (उ०अ०सू० १.५) इति । अस्यार्थः—उत्तमे ज्यैष्ठयकामोक्थ्ये ऋग्जपे स्तोत्रे चाभ्यासः । अभ्यस्यमाना अनुष्टुभः । तृचः समानः । पूर्वोक्तोक्थ्यचतुष्टयवत् गायत्र्यादिच्छन्दोऽन्तरसंपत्याक्षरातिरेकरहित इत्यर्थः । उष्णिग्भ्यश्चतुरक्षराणीत्यादि । उष्णिग्भ्यस्तं तेमदमिति तृचगाभ्य ऋग्भ्यो मिलित्वा त्रीणि चतुरक्षराणि । अग्ने तमद्येति तृचगाभ्यः पङ्क्तिभ्यो मिलित्वा त्रीणि सप्ताक्षराणि लुप्यन्ते । अनुष्टुप्छन्दोऽपेक्षया द्वयोस्तृचयोर्यथाक्रमं त्रीणि चतुरक्षराणि त्रीणि सप्ताक्षराणि लुप्यन्त इत्यर्थः । तदेकया पङ्क्तचा संपादयेदिति । उभयोस्तृचयोरक्षराणि एकोनषष्टिशतसंख्यानि एतानि एकाक्षरन्यूनाः पञ्चानुष्टुभः । तत्र पञ्चम्यामनुष्टुभि ऊनमेकाक्षरं तदित्यनेन गृह्यते । तत् एकया पङ्क्तचा अग्ने तमद्येति तृचे द्वितीयया एकया एकाक्षराधिकतया । तस्यामधिकेन षड्विंशेनाक्षरेण संपादयेदित्यर्थः । इत्थं पञ्चानुष्टुभः । इन्द्रं विश्वा इति तिस्रश्च

---

7. B². संपत्त्या for पङ्क्त्या

8 B². तस्य for अस्य

9. B². °जप° for °जपे ; B²M¹. °मानः for °मानाः

10. B² °न्तरा संपत्त्याक्षराक्षरा° for °न्तरसंपत्त्याक्षरा°

12. B¹ Om. अग्ने तमद्य······त्रीणि (L. 15).

15. B¹. Om. त्रीणि

17. B¹. °क्षरण्यूनाः, B². °क्षरान्यूनाः for °क्षरन्यूनाः

18. B¹ Om. तत्

20. B². तिसृभिः for तिस्रः

मिलित्वा अष्टावस्तूयमाना अनुष्टुभः। अभ्यस्ते चैवमिति। स्तोत्रकाले तृचे एवमनुष्टुप्संपत्त्येकविंशस्तोमेन सप्तधावृत्ते च गीयमानाः षट्पञ्चाशत् स्तूयमाना इत्यर्थः ॥१५॥

**समानमितरं ज्योतिष्टोमेन ॥१६॥**

इति। क्लृप्तिः स्पष्टा ॥१६॥

**तस्य संपत्। षट् चतुरक्षराणि द्वादश च पञ्चाक्षराण्युक्थेभ्योऽतिरिच्यन्ते। तावत् सफकालेयाभ्यां लुप्यते। तत् संपन्नम् ॥ तत् संपन्नम् ॥१७॥**

इति। कालेयस्यानुष्टुप्त्वात् बृहत्यपेक्षया प्रथमायाः एकाक्षरन्यूनत्वात् पञ्चधावृत्त्या पञ्चविंशतिरक्षराणि लुप्यन्ते। द्वितीयायाः एकाक्षरन्यूनत्वात् सप्तधावृत्त्या पञ्चत्रिंशदक्षराणि। तृतीयायाः पञ्चधावृत्त्या विंशतिरक्षराणि। सफे चतुरक्षराणि। आहत्य चतुरशीत्यक्षराणि न्यूनानि। साकमश्वस्य पङ्क्तित्वात् गायत्र्यपेक्षया प्रथमोत्तमयोः एकमेकमक्षरमधिकम्। मध्यमस्य द्वे। प्रत्येकं सप्तधावृत्त्या अष्टाविंशतिरक्षराणि। नार्मेधस्यानुष्टुप्त्वात् पूर्वयोः स्तोत्रीययोः ककुबपेक्षया चतुरक्षराधिक्यात् प्रत्यृचं सप्तधावृत्त्या षट्पञ्चाशदक्षराणि। आहत्य चतुरशीत्यक्षराणि अतिरिक्तानि। तेन संपदुपपन्ना। पूर्ववल्लोपातिरेकक्रमो व्याख्येयः। अभ्यासोऽध्यायसमाप्तिद्योतनार्थः ॥१७॥

इति प्रथमे प्रपाठके षष्ठः खण्डः ॥६॥

---

शतक्रतुचतुर्वेदि श्री निवासाख्ययज्वना।

12. M[1]. Om. सफे चतुरक्षराणि

21. B[2]. °वासाचार्य for °वासाख्य°

क्षुद्रकल्पादिमाध्यायो व्याख्यायि प्रीतये हरेः ॥

इति श्रीरामानुजसिद्धान्तस्थापनाचार्यशतक्रतुताताचार्यतनय-शतक्रतुचतुर्वेदिश्रीनिवासार्यविरचिते क्षुद्रकल्पसूत्रभाष्ये प्रथमोऽध्यायः ॥१॥

इति आर्षेयक्षुद्रकल्पे प्रथमोऽध्यायः ॥१॥

---

1. $B^2$. उत्तर° for क्षुद्र°
2. $B^2$. श्रीमद्° for श्री°; $B^2$. °वासाचार्य° for °वासार्य°

अथ

# द्वितीयोऽध्यायः

## प्रथमे प्रपाठके सप्तमः खण्डः

श्रीकल्पसूत्रोपग्रन्थकृतो गुरुवरान् भजे ।
श्रीगार्ग्यमशकद्राह्यायणकात्यायनाह्वयान् ॥

[ प्रतिष्ठाकामयज्ञः ]

अथातिरात्राः । प्रतिष्ठाकाम[यज्ञः]—रथन्तरम् प्रतिष्ठाकामाय संधिं कुर्यात् । इयं वै रथन्तरमस्यामेव प्रतितिष्ठति (तां० ब्रा० ९.१.२८-२९) इति ब्राह्मणोक्तस्य क्लृप्तिमाह—

**प्रतिष्ठाकामस्य क्लृप्तं रथन्तरं संधिषाम ॥१॥**

इति । स्पष्टम् ॥१॥

[ स्वर्गकामयज्ञः ]

अथ स्वर्गकामयज्ञः । बृहत्स्वर्गकामाय संधिं कुर्यात् । स्वर्गो वै लोको बृहत् । स्वर्ग एव लोके प्रतितिष्ठति (तां० ब्रा० ९.१.३०-३१) इति ब्राह्मणोक्तस्य क्लृप्तिमाह—

**स्वर्गकामस्य बृहत् संधिषामैतेष्वेव प्रगाथेषु ॥२॥**

इति । एना-प्रत्यु-इमा उवाम् इति प्रगाथेष्वित्यर्थः । अत्र गायत्रेषु आ-इति निधनस्थाने स्वरिति निधनं कुर्यात् । स्वः स्वर्गकामाय (तां० ब्रा० ७.१.११) इति श्रुतेः ॥२॥

---

4. My[1] Om. श्रीकल्प······भजे । श्रीगार्ग्य······°ह्वयान् and begins with श्रीगणेशाय नमः

8. M[1]. इमाम् for अस्याम्

10. B[1] My[1] क्लृप्ति for क्लृप्तं

[ पशुकामयज्ञः ]

अथ पशुकामयज्ञः । वारवन्तीयं वे-(तां० ब्रा० ६.१.३२) त्यादि-प्रतितिष्ठती( तां० ब्रा० ६. १. ३२ )त्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**वारवन्तीयं वा वामदेव्यं वा श्रुध्यं वैतेषामेकम् । पशुकामाय संधिं कुर्यादेतेष्वेव प्रगाथेषु ॥३॥**

इति । स्पष्टम् ॥३॥

अत्र कौत्सस्यैडत्वात् वारवन्तीयश्रुध्ययोः संधित्वे जामि स्यादित्यत आह—

**ऐडं चेत् संधिषाम स्यात् कौत्सस्य लोक उद्वंशीयम् । आ त्वा विशन्त्विन्दव (सा० १६६०-२) इत्येतासु ॥४॥**

इति । स्पष्टम् । इदमेकाहाहीनसत्रेषु सर्वत्र कार्यमित्याचार्यस्याशयः । निदानकारमते तु इन्द्र सुतेष्वित्येतास्वेवोद्वंशीयं कार्यम् एकाहसत्रयोः । अहीने तु आ त्वा विशन्त्विन्दव इत्येतासूद्वंशीयम् इति । तदुक्तं निदाने—विधृतीनामयनप्रकरणे ऐडं चेत् संधिषाम स्यात् कौत्सस्य लोक उद्वंशीयम् । एतेनेडाकामस्य सिद्ध्यत्यजामिकल्पश्च ( नि० सू० १०.२ : १७-१८ ) इति । तद्यदेतास्वा त्वा विशन्त्विन्दव इत्येता रात्रेर्विकृतौ दृष्टा इति नित्यासु चेति विचारयन्त्यर्थकारितमुद्वंशीयम् । स किमर्थो नित्याश्च्यावयेदिती-(नि० सू० १०.२:२२)ति । वामदेव्यपक्षे प्रकृतिवदाच्छावाकसाम । अत्र गायत्रेषु सर्वत्र आ इति निधनस्थाने इडेति निधनं कुर्यात् ।

8. B[1]My[1]. after °श्रुध्ययोः ins. [ऐ]डयोः

14. B[1-2] ऐके[ऽ]तासु for एतासु

17. M[1]. लोकम् for लोके ; सिद्ध्यतु for सिद्ध्यति

19. B[2]. वेति for चेति

इडो पशुकामाय निधनं कुर्याद् ( तां० ब्रा० ७.१.११ ) इति श्रुतेः ॥४॥

[ साम्युत्थानप्रायश्चित्तम् ]

अथ प्रायश्चित्तानि । यदि सत्राय दीक्षेरन् इत्यादि-ताभिरतिप्रयुङ्क्त (तां०ब्रा० ९.३.१-२) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**सत्रात् साम्युत्तिष्ठतः क्लृप्तो विश्वजिदतिरात्रः सर्ववेदसदक्षिणः ॥५॥**

इति । स्पष्टम् । इदं च सत्रमध्यादुत्थानप्रायश्चित्तम् । दैवाद्वा मानुषाद्वा भयादार्तस्य सत्रिभिः अतिपीडितस्य वा महारोगैरुपद्रुतस्य वा । कामादुत्थितस्य प्रायश्चित्तमेव नास्ति । तदुक्तं निदानसूत्रे— स खलु विश्वजिन्न कामादुत्तिष्ठतः स्याद्यत्र त्वेनं ससत्रिणो बाधेरन्। यत्र वा भयजो विलोपः स्यात् । यत्र वैनं तद्रूपो व्याधिः स्पृशेत् । येनान्तःसत्रं प्रयाणाच्छङ्केत । तदुत्थाय विश्वजितातिरात्रेण यजता कामापत्तिषु हिप्रायश्चित्तं विधीयत (उ० ग्र० सू० १.८) इति । अयं विश्वजिदतिरात्रः सत्रमध्यादेकस्य द्वयोर्बहूनां वा कतिपयोत्थाने । न तु सर्वेषाम् । सर्वेषामुत्थाने तु सूर्यस्तु द्वादशाह एव । यद्वा । सर्वेषामुत्थानेऽपि इदमेव विश्वजित्करणम् । तदुक्तं निदाने—स खल्वेकस्योत्तिष्ठतः आम्नातस्तं त्वर्थसामान्यात् सर्वेषामप्युत्तिष्ठतां प्रतीमः प्रतीमः (उ० ग्र० सू० १.९) इति ॥५॥

---

7. P. °वेदसं दक्षिणा for °वेदसदक्षिणः

8. B[1]. तु for च

9. B[2]. °भृतस्य for °द्रुतस्य

10. M[1]B[2]. निदाने for निदानसूत्रे

11. B[2] after खलु adds : न

13. B[2]. प्रायणात् for प्रयाणात्

14. B[2]M[1]. यजेत for यजता ; M[1] °पत्तिष्वहि for °पत्तिषु हि ; B[2] अभि° for अहि°

18. M[1]. लोकस्य for एकस्य ; M[1] कत्वर्थ for तत्वर्थ°

अथ पर्यायकालातिक्रमप्रायश्चित्तम् । यदि पर्यायैरस्तुतमभिव्युच्छेत् ( तां० ब्रा० ६. ३. ३ ) इत्यादि—संवत्सरमाप्नोति (तां० ब्रा० ६.३.६) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**अभिविवासाच्छङ्कमानाः ॥६॥**

इति । अभिविवास इति उषःकालस्य नाम ॥६॥

**पञ्चदशभिर्होत्रे स्तुयुः पञ्चभिः पञ्चभिरितरेभ्योऽग्ने विवस्वदुषस ( सा० १७८०-१ ) इति संधिना स्तुयुस्त्रिकेण स्तोमेन ॥७॥**

इति । स्पष्टम् ॥७॥

**ते निकामात् सोममतिरिच्य ॥८॥**

इति । निकामात् बुद्धिपूर्वकं सोमातिरेकं कृत्वेत्यर्थः ॥८॥

**त्रिकद्रुकेषु महिषो यवाशिरम् (सा० १४८६-८) इति बृहताष्टाचत्वारिंशेन स्तुवीरन् ॥९॥**

इति । स्पष्टम् ॥९॥

**उपोत्तमयोर्द्वयोः प्रचेतनप्रचेतयेत्युपसर्गावुद्धरति ॥१०॥**

इति । उत्तमस्य समीपमुपोत्तमम् । प्रचेतनेति प्रचेतयेति चैतावुपसर्गौ । त्रिकद्रुकेष्विति तृचे बह्वृचैः प्रचेतनप्रचेतययोरनध्ययनात् अस्माभिरध्ययनात् एतयोरुपसर्गत्वम् । उप समीपे सृजति निधत्त इति खलु प्रपरादीनामुपसर्गत्वम् । तद्वदत्रापि । ऋतु

---

11. B². °पूर्वं for °पूर्वकं

15. P. Om. प्रचेतन°

19. B². अनध्ययनात् for अध्ययनात् ; M¹. Om. उप समीपे······°सर्गत्वम्

सामगैर्निधायाध्ययनात् एतयोरुपसर्गत्वम् । अत्राष्टाचत्वारिंशस्तोमे स्तोत्रीयाणां प्रत्येकं पर्यायत्रयेऽपि यथाकथंचित् षोडशधाभ्यासात् । तत्र द्वितीयतृतीययोः स्तोत्रीययोः पञ्चदशे कुशाविधाने प्रचेतयेति च चतुरक्षरयोः उच्चार इत्यर्थः ॥१०॥

**समानमितरं ज्योतिष्टोमेन ॥११॥**

इति ॥११॥

**तस्य संपत् । नवतिरनुष्टुभो रात्रेर्लुप्यन्ते । द्वे च बृहत्यौ । चतस्रश्च ककुभः । संधेरष्टाचत्वारिंशमेतत् स्तोत्रम् । तत् संपन्नम् ॥१२॥**

इति । त्रिकद्रुकेष्विवति तृचे एकैकस्मिंस्तोत्रीये द्वे अनुष्टुभौ । चतुःषष्ट्यक्षरत्वात् । स्तोत्रीयाणामाहत्य षण्णवतिरनुष्टुभः । रात्रिपर्यायेषु पञ्चदशभिर्होत्र इत्यादिक्रमेण पर्यायत्रयेऽपि नवतिरनुष्टुभः स्तुताः । तावत्यो लुप्ताः । अस्मिन्नष्टाचत्वारिंशे बृहत्स्तोत्रे पञ्चचत्वारिंशता स्तोत्रीयैर्नवतिरनुष्टुभः संपन्नाः । संधिस्तोत्रे बृहतीद्वयं ककुप्चतुष्टयं लुप्तम् । तत्र लुप्तानि चतुरशीत्यधिकशताक्षराणि तानि त्रिभिः स्तोत्रीयैः संपन्नानि । अष्टाक्षराण्यतिरिक्तानि । तेषामुपोत्तमयोर्द्वयोः स्तोत्रीययोः प्रचेतनप्रचेतययोरुद्धारात् संपदुपपन्ना । तस्यैवं प्रयोगः । यदि सर्वेषु रात्रिपर्यायेषु अनुपक्रान्तेषु उषो व्यक्तं पश्येत् तदा प्रथमे पर्याये होतृषाम पञ्चदशेन स्तुत्वा मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकसामसु

8. B³. चत्वारिंशत् for चत्वारिंशमेतत् ; M¹ इतरत् for एतत्

10. M¹. after °ष्टुभौ adds : च

11. M¹ after (अ)क्षर ins. युक्त

15. B². Om. संधि°

16. B¹My. Om. तानि

18. B³. Om. यदि सर्वेषु

20. B¹. Om. स्तुत्वा

पञ्चदशस्य विष्टुतेः पर्यायेण स्तुयुः । तद्यथा—तिसृभ्यो हिंकरोति । स प्रथमया । एकस्यै हिंकरोति । स मध्यमया । एकस्यै हिंकरोति । स उत्तमया इति । प्रथमे पर्याये स्तुते द्वितीये पर्याये पञ्चदशेन होतृषाम स्तुत्वा प्रशास्तृब्रह्माच्छावाकसामसु पञ्चदशस्य विष्टुतेः मध्यमेन पर्यायेण स्तुयुः । तद्यथा—एकस्यै हिंकरोति । स प्रथमया तिसृभ्यो हिंकरोति । स मध्यमया । एकस्यै हिंकरोति । स उत्तमया इति । मध्यमे पर्याये स्तुते उत्तमे पर्याये होतृषाम पञ्चदशेन स्तुत्वा प्रशास्तृब्रह्माच्छावाकसामसु पञ्चदशस्य विष्टुतेस्तृतीयपर्यायेण स्तुयुः। तद्यथा—एकस्यै हिंकरोति । स प्रथमया । एकस्यै हिंकरोति । स मध्यमया । तिसृभ्यो हिंकरोति । स उत्तमया इति । अत्र सूत्रम्-पञ्चदशपर्यायैः पृथगनुपूर्वं रात्रिपर्यायान् विदध्यात् (ला० श्रौ० ६.६.१५) इति । अग्ने विवस्वदुषस (सा० १७८०-१) इति त्रिकेण स्तोमेन संधिना स्तुयुः । प्रतिष्ठादि यथाकामं कल्पकारोक्तप्रकारेण रथन्तरबृहद्वारवन्तीयवामदेव्यश्रुध्यैः स्तुयुः। त्रिकस्तोमस्य विष्टुतिः—एकस्यै हिंकरोति । स प्रथमया । एकस्यै हिंकरोति । स मध्यमया । एकस्यै हिंकरोति । स उत्तमया । इति । अत्र तृचभागास्थानेषु कुशाविधानम् । तदुक्तं सूत्रे-तदभावे तृचभागास्थानेषु पर्यायाणां पर्यायाः स्युः । नैकिनि पर्याया विद्यन्ते ॥ तथा त्रिके विष्टावाः ( ला० श्रौ० ६.५.७ ; ९-१० ) इति । यद्वा । प्रथमपर्याय एव तृचभागात्रापपरिचरास्थानेषु कुशाविधानम् । तदुक्तं सूत्रे—यथा वैकः पर्यायः (ला० श्रौ० ६.५.८) इति । निदानसूत्रे च—त्रिवृत उद्यत्याः कुशाविधाने विप्रतिपद्यन्ते । यथैकः पर्याय इत्येके । तृचभागास्थानेषु पर्यायाणां पर्याया स्युरित्येके (नि०

---

2. B². Om. स प्रथमया एकस्यै हिंकरोति

3. B¹. Om. प्रथमे पर्याये……उत्तमया । इति (L. 16)

5. B². Om. स प्रथमया । तिसृभ्यो हिंकरोति

10. M¹. before तिसृभ्यो adds : स्तोत्रीयस्य

22. B². प्रतिपद्यन्ते for विप्रतिपद्यन्ते

सू० १.११ : ३१-३३) इति। आश्विनानन्तरं बुद्धिपूर्वं सोममतिरिच्यन्ते । न चमसानुन्नीय त्रिकद्रुकेष्विति बृहताष्टाचत्वारिंशस्तोमेन स्तुयुः । अस्य त्रिःषोडशान्ता इति विष्टुतिः कार्या । एतस्य स्तोत्रस्य द्वितीये पर्याये तिसृभिरिति मध्यमे विष्टावे तृतीये कुशाविधाने प्रचेतनेति चतुरक्षरमुद्धृत्य स्तुयुः । यथामिथं वसुसंनं सश्चद्देवोदा इवां । तृतीये पर्याये स तिसृभिरिति उत्तमे विष्टावे द्वितीये कुशाविधाने प्रचेतयेति चतुरक्षरमूद्धृत्य स्तुयुः । यथा अरिच्यत सैनं सश्चद्देवोदा इवाम् इति स्तोत्रस्य । अत्रैवं निर्णयः । प्रभाते उदिते वा सूर्ये पञ्चदशभिर्होत्रे स्तुयुः । पञ्चभिः पञ्चभिरितरेभ्य इति । अग्ने विवस्वदुषस इति त्रिकस्तोमेन संधिस्तवनं नित्यम् । संधिस्तोत्रार्थं त्रिकद्रुकेष्वित्यत्र स्तोत्रीयात्रयं नित्यम् । अवशिष्टेषु पञ्चचत्वारिंशेषु स्तोत्रीयेषु रात्रौ पर्यायत्रयेऽपि यावत्यः स्तोत्रीया लुप्तास्तावतीनां स्तोत्रीयाणां स्तोत्रीयाद्वयस्य अस्मिन् बृहत्स्तोत्रे एका स्तोत्रीया । इत्थं गणनया आलोच्य निश्चित्य तावतीभिः स्तोत्रीयाभिः संध्यर्थस्तोत्रीयात्रयेण सह स्तवनं कुर्युः । प्रथमे पर्याये प्रशास्तृषामणि यथाप्रकृति पञ्चदशस्तोमेन स्तुते ब्रह्मसामारम्भात् पूर्वं यद्युषः पश्येत् तदा आश्विनानन्तरं त्रिकद्रुकेष्विति

---

2. M[1]. °रिच्यते for °रिच्यन्ते

3. My B[2]M[1]. तस्य for अस्य

4. M. Om. स्तोत्रस्य

5. M[1]My. °मियं for °मिथं ; B[2]. सश्चदेवो° for सश्चद्देवो

8. B[2]. सश्चि° for सश्च°

10. B[1-2] स्तवं for °स्तवनं

14. B[2]. Om. निश्चित्य

16. B[1]. Om. प्रथमे पर्याये......समञ्जसम् (p. 55. L. 17) ; M[1]. श्रुते for स्तुते

17. M[1]. तथा for तदा

बृहत्साम्ना त्रिचत्वारिंशत्स्तोमेन स्तुयुः । तत्र जातिसंहारपक्षे त्रिचत्वारिंशस्य त्रयोदशभ्यो हिंकरोति । स तिसृभिः स नवभिः स एकया । पञ्चदशभ्यो हिंकरोति । स एकया स तिसृभिः स एकादशभिः । पञ्चदशभ्यो हिंकरोति । स एकादशभिः स एकया स तिसृभिरिति । तदुक्तं सूत्रे—विषमाः समपर्यायैर्वर्धन्ते । यावभितोऽनन्तरौ समौ तयोः पर्यायान् संहरेत् ॥ पूर्वस्यैकमेकातिशयेषु (ला० श्रौ० ६.५.२०-२३) इति ॥

यथास्थानं पर्यायान् कुर्यादिति च युग्मायुक्संहारपक्षे चतुर्दशभ्यो हिंकरोति । स तिसृभिः । स दशभिः । स एकया । चतुर्दशभ्यो हिंकरोति । स एकया स तिसृभिः स दशभिः । पञ्चदशभ्यो हिंकरोति । स एकया स दशभिः । स एकया । स तिसृभिरिति । तदुक्तं सूत्रे—युग्मायुग्भ्यो वा (ला० श्रौ० ६. ५.२६) इति । विपर्ययो युग्मायुजामयुक्षु ( ला० श्रौ० ६. ५. २-९) इति । ब्रह्मसामनि स्तुते यद्युषः पश्येत् अष्टात्रिंशस्तोमः कार्यः । तस्य जातिसंहारपक्षे द्वादशभ्यो हिंकरोति । स तिसृभिः । सोऽष्टाभिः । स एकया । द्वादशभ्यो हिंकरोति । स एकया स तिसृभिः सोऽष्टाभिः । चतुर्दशभ्यो हिंकरोति । स दशभिः । स एकया स तिसृभिरिति । तदुक्तं सूत्रे—द्वौ द्व्यतिशयेषु (ला० श्रौ० ६. ५. २४) इति । युग्मायुक्संहारपक्षे—द्वादशभ्यो हिंकरोति । स तिसृभिः सोऽष्टाभिः स एकया । त्रयोदशभ्यो हिंकरोति । स एकया स तिसृभिः स नवभिः । त्रयोदशभ्यो हिंकरोति । स नवभिः स एकया स तिसृभिरिति । तदुक्तं सूत्रे—उत्तरौ द्व्यतिशयानाम्

---

2. $B^2$. तिसृभिः for नवभिः

6. $M^1$. एकादशेषु for एकातिशयेषु

11. $M^1$. एकादशभिः for एकया स दशभिः

18. ला. श्रौ. द्व्यधि° for द्व्यति

(ला० श्रौ० ६.५.२८) इति। अच्छावाकसामनि स्तुते यद्युषः पश्येत् त्रयस्त्रिंशत्स्तोमेन स्तुयुः। मध्यमे पर्याये प्रशास्तृषामभिः स्तुते यद्युषः पश्येत् अष्टाविंशस्तोमेन स्तुयुः। तस्य जातिसंहारपक्षे—अष्टभ्यो हिंकरोति। स तिसृभिः। स चतसृभिः स एकया दशभ्यो हिंकरोति स एकया स तिसृभिः स षड्भिः दशभ्यो हिंकरोति। स षड्भिः स एकया स तिसृभिरिति। तदुक्तं सूत्रे—दाशरात्रिकेभ्यः पर्यायकृतौ पर्यायानेव संहरेत् (ला० श्रौ० ६.६.६) इति। पूर्वस्यैकमेकातिशयेषु (ला० श्रौ० ६.५.२३) इति च। युग्मसंहारपक्षे—नवभ्यो हिंकरोति। स तिसृभिः। स पञ्चभिः स एकया। नवभ्यो हिंकरोति। स एकया स तिसृभिः स पञ्चभिः। दशभ्यो हिंकरोति। स षड्भिः स एकया स तिसृभिरिति। तदुक्तं सूत्रे—दाशरात्रिकेभ्य एकया ज्यायःसु तस्मात् पूर्वस्योत्तमे पर्याय आवपेत्। ब्रह्मायतनीया तु तेषु क्षत्रायतनीया वा॥ (ला० श्रौ० ६.६.१७-१८) इति। तत्र युञ्जामेकातिशयानामयुजः पूर्वौ पर्यायौ (ला० श्रौ० ६.५.२७) इति च। आवापस्य क्षत्रायतनीयपक्षे उत्तमः पर्यायस्य स पञ्चभिः स द्वाभ्यां स तिसृभिरिति। तदुक्तं सूत्रे—क्षत्रायतनीया वा (ला० श्रौ० ६.६.१८) इति। धानंजय्यमतेन स्कन्दपक्षे त्रिणवेन स्तुत्वा शिष्टां कुशामहिंकृत्य मध्यमस्तोत्रीयया उत्तमस्य मध्यमविष्टावे निदध्यात्। तदुक्तं सूत्रे—धानंजय्य इतरेषु (ला० श्रौ० ६.६.२०) इति। चतुर्विंशेन वा स्तुत्वा मध्यमां हिंकृतां तृचस्य प्रस्तुयात्। स आस्कन्दो नामेति ब्रह्मसामनि स्तुते

2. M[1]. °षामणि for °षामभिः

13. M[1]. कृतेषु for तु तेषु and Om. क्षत्रायतनीयावा

17. M[1]. च for वा

18. M[1]. स्तव° for स्कन्द°

19. M[1]. °स्तोत्रीयायाः for स्तोत्रीयया

यद्युषः पश्येत् त्रयोविंशस्तोमेन स्तुयुः। तस्य जातिसंहारपक्षे—सप्तभ्यो हिंकरोति। स तिसृभिः। स तिसृभिः। स एकया। सप्तभ्यो हिंकरोति। स एकया। स तिसृभिः। स तिसृभिः। नवभ्यो हिंकरोति। स पञ्चभिः। स एकया। स तिसृभिः। इति। तदुक्तं सूत्रे—रूढपर्याया वा (ला० श्रौ० ६. ७. ७) इति। युग्मायुक्संहारपक्षे—सप्तभ्यो हिंकरोति। स तिसृभिः। स तिसृभिः। स एकया। अष्टाभ्यो हिंकरोति। स एकया। स तिसृभिः। स चतसृभिः। अष्टाभ्यो हिंकरोति। स चतसृभिः। स एकया। स तिसृभिरिति। यद्वा। अष्टाभ्यो हिंकरोति। स तिसृभिः। स चतसृभिः। स एकया। सप्तभ्यो हिंकरोति। स एकया। स तिसृभिः। स तिसृभिः। अष्टाभ्यो हिंकरोति। स चतसृभिः। स एकया। स तिसृभिरिति। तदुक्तं सूत्रे—त्रयोदशत्रयोविंशयोश्च पञ्चविंशे च मध्यमः पर्यायो ज्यायानेकज्यायःसु कनीयानेककनीयःसु (ला० श्रौ० ६. ७. ५) इति। अच्छावाकसामनि स्तुते यद्युषः पश्येत् अष्टादशस्तोमेन स्तुयुः। धानंजय्यमते—षड्भ्यो हिंकरोति। स तिसृभिः। स द्वाभ्याम्। स एकया। षड्भ्यो हिंकरोति। स एकया। स तिसृभिः। स द्वाभ्याम्। षड्भ्यो हिंकरोति। स द्वाभ्याम्। स एकया। तिसृभिरिति। तदुक्तं सूत्रे—न्यायविहितः स्यादिति धानंजय्यः॥ (ला० श्रौ० ६. ७. १३) इति। गौतममते—पञ्चभ्यो हिंकरोति। स तिसृभिः। स एकया। स एकया। पञ्चभ्यो हिंकरोति। स एकया। स तिसृभिः। स एकया। अष्टाभ्यो हिंकरोति। स एकया। स चतसृभिः। स तिसृभिरिति। यद्वा। स द्वाभ्यां स तिसृभिः। स तिसृभिः। इति। तदुक्तं सूत्रे—अष्टादशं सप्तदश एवावपेदिति गौतमः (ला० श्रौ० ६. ७. १२) इति। उत्तमे पर्याये प्रशास्तृषामणि स्तुते यद्युषः पश्येत् त्रयोदशस्तोमेन स्तुयुः। तस्य जातिसंहारपक्षे—तिसृभ्यो हिंकरोति। स

13. M[1]. Om. च after °विंशयोः

पराचीभिः । पञ्चभ्यो हिंकरोति । स एकया । स तिसृभिः । स एकया । पञ्चभ्यो हिंकरोति । स एकया । स एकया । स तिसृभिरिति । युग्मायुक्संहारपक्षे—चतुर्भ्यों हिंकरोति । स द्वाभ्याम् । स एकया । स एकया । चतुर्भ्यों हिंकरोति । स एकया । स द्वाभ्याम् । स एकया । पञ्चभ्यो हिंकरोति । स एकया । स एकया । स तिसृभिरिति । यद्वा । चतुर्भ्यों हिंकरोति । स एकया । स द्वाभ्याम् । स एकया । चतुर्भ्यों हिंकरोति । स एकया । स एकया । स द्वाभ्याम् । पञ्चभ्यो हिंकरोति । स एकया । स एकया । स तिसृभिरिति । तदुक्तं सूत्रे—द्वादशे तृचभागास्थानेषु द्विकाविष्टावाः आवापस्थानेष् वा (ला० श्रौ० ६. ७. ४) इति । यद्वा । चतुर्भ्यों हिंकरोति । स द्वाभ्याम् । स एकया । स एकया । पञ्चभ्यो हिंकरोति । स एकया । स तिसृभिः । स एकया । चतुर्भ्यों हिंकरोति । स एकया । स एकया । स द्वाभ्याम् इति । यद्वा । चतुर्भ्यों हिंकरोति । स एकया । स द्वाभ्याम् । स एकया । पञ्चभ्यो हिंकरोति । स एकया । स तिसृभिः । स एकया । चतुर्भ्यों हिंकरोति । स द्वाभ्याम् । स एकया । स एकया । इति । ब्रह्मसाम्नि स्तुते यद्यृषः पश्येत् अष्टिस्तोमेन स्तुयुः । तस्य जातिसंहारपक्षे—द्वाभ्यां हिंकरोति । स प्रथमया । द्वाभ्यां हिंकोरति । स मध्यमया । चतुर्भ्यों हिंकरोति । स एकया । स एकया । स द्वाभ्याम् । युग्मायुक्संहारपक्षे—द्वाभ्यां हिंकरोति । स प्रथमया । तिसृभ्यो हिंकरोति । स पराचीभिः । तिसृभ्यो हिंकरोति । स पराचीभिरिति । अच्छावाकसाम्नि स्तुते यद्यृषः पश्येत् त्रिकस्तोमेन स्तुयुः । एकस्यै हिंकरोति । स प्रथमया । एकस्यै हिंकरोति । स मध्यमया । एकस्यै हिंकरोति । स उत्तमया ।

---

3. B². चतुर्दशभ्यो for चतुर्भ्यों

10. ला. श्रौ. सू. Om. आवापस्थानेषु वा

21. B². after प्रथमया । adds सः

23. B². before एकस्यै add सः

इति । त्रिवृत्पञ्चदशसप्तदशैकविंशतिरात्रेषु सर्वैकस्तोमेषु रात्रि-पर्यायणां त्रिवृदादिस्तोमकत्वेन वा प्राकृतपञ्चदशस्तोमकत्वेन वाचार्यैर्विधानात् तत्र पर्यायकालातिक्रमनिमित्ते ज्ञाते प्राकृत-पञ्चदशस्तोमकत्वपक्ष एव नियतः । त्रिवृदादिस्तोमपक्षमाश्रित्य रात्रिपर्यायेषु आरब्धेषु मध्ये यद्युषः पश्येत् तदा होतृषाम्णां त्रिवृदादिस्तोमकत्वं प्रशास्तृब्रह्माच्छावाकसाम्नां त्रिवृदतिरात्रे त्रिक-स्तोमेन स्तवनम् । पञ्चदशातिरात्रे संधिस्तोत्रस्य पञ्चदशकत्वात् तत्र पञ्चिस्तोमेन स्तवनम् । तत्र जातिसंहारपक्षमाश्रित्य विष्टुतिः कार्या । तदुक्तं सूत्रे—जातिसंहारः पञ्चिनि (ला० श्रौ० ६. ६. १४) इति । सप्तदशातिरात्रे पूर्वपर्याययोः पञ्चिस्तोमेन उत्तमे तु सप्तदशस्तोमेन स्तवनम् ; एकविंशातिरात्रे पर्यायत्रये संधिस्तोत्रेऽपि सप्तिस्तोमेन स्तवनं कार्यमिति तन्नयः । तत्र सप्ति-स्तोमस्य तिसृभ्यो हिंकरोति । स पराचीभिः । तिसृभ्यो हिंकरोति स पराचीभिः एकस्यै हिंकरोति । स उत्तयया । इति प्रथमः पर्यायः । एकस्यै हिंकरोति । स प्रथमया । तिसृभ्यो हिंकरोति । स पराचीभिः । तिसृभ्यो हिंकरोति । स पराचीभिः । इति मध्यमः । तिसृभ्यो हिंकरोति । स पराचीभिः । एकस्यै हिंकरोति । स मध्यमया । तिसृभ्यो हिंकरोति । स पराचीभिः । इत्युत्तमः । संधिस्तोमस्य मध्यमपर्यायवत् कुशाविधानम् । त्रिवृदतिरात्रे प्रथम-पर्यायारम्भात् पूर्वं यद्युषः पश्येत् तदा आश्विनानन्तरं त्रिकद्रुकेषु (सा० १४८६-८) इति बृहत्साम्ना त्रिंशत्स्तोमेन स्तुयुः । तस्य— दशभ्यो हिंकरोति । स तिसृभिः । स षड्भिः । स एकया । दशभ्यो हिंकरोति । स एकया । स तिसृभिः । स षड्भिः । दशभ्यो

5. M[1]. पश्येयुः for पश्येत्

8. M[1]. पञ्चस्तोमेन for पञ्चिस्तोमेन

9. M[1] aftet °संहारः adds तु

10. M[1] पञ्चिस्तोमे तु सप्तिस्तोमेन स्तवनम् for पञ्चिस्तोमेन······स्तवनम्

12. M[1] °निर्णयः for °नयः

हिंकरोति । स षड्भिः । स एकया । स तिसृभिरिति । प्रशास्तृषामणि यद्युषः पश्येत् त्रिणवस्तोमेन स्तुयुः । अच्छावाकसामारम्भात् पूर्वं चेन् चतुर्दशस्तोमेन; द्वितीयपर्याये प्रशास्तृषामारम्भात् पूर्वं चेत् एकविंशस्तोमेन, ब्रह्मसामारम्भात् पूर्वं चेत् अष्टादशस्तोमेन, अच्छावाकसामारम्भात् पूर्वं चेत् पञ्चदशस्तोमेन, तृतीयपर्याये प्रशास्तृषामारम्भात् पूर्वं चेत् द्वादशस्तोमेन, बृहत्सामारम्भात् पूर्वं चेत् त्रिवृत्स्तोमेन, अच्छावाकसामारम्भात् पूर्वं चेत् षट्स्तोमेन, सन्धिस्तोत्रात् पूर्वं चेत् त्रिकस्तोमेन च स्तुयुः ॥

पञ्चदशातिरात्रे प्रथमपर्यायारम्भात् पूर्वं यद्युषः पश्येत् तदा आश्विनानन्तरं त्रिकद्रुकेषु (सा० १४८६–८) इति ब्रह्मसाम्ना अष्टाचत्वारिंशस्तोमेन स्तुयुः । नात्र प्रचेतनप्रचेतययोरुद्धारः । ब्रह्मसामारम्भात् पूर्वं चेत् पञ्चचत्वारिंशस्तोमेन । इत ऊर्ध्वं प्रचेतनप्रचेतययोर्द्विस्त्रिरुद्धारः । अच्छावाकसामारम्भात् पूर्वं चेत् चत्वारिंशस्तोमेन, द्वितीयपर्याये प्रशास्तृषामारम्भात् पूर्वं चेत् पञ्चदशस्तोमेन, ब्रह्मसामारम्भात् पूर्वं चेत् त्रिंशस्तोमेन, अच्छावाकसामारम्भात् पूर्वं चेत् पञ्चविंशस्तोमेन, तृतीयपर्याये प्रशास्तृषामारम्भात् पूर्वं चेत् त्रिंशस्तोमेन, ब्रह्मसामारम्भात् पूर्वं चेत् पञ्चदशस्तोमेन, अच्छावाकसामारम्भात् पूर्वं चेत् दशिस्तोमेन । संधिस्तोत्रात् पूर्वं चेत् संधिस्तोमेन च स्तुयुः ॥

सप्तदशातिरात्रे प्रथमपर्यायारम्भात् पूर्वं चेत् तदाश्विनानन्तरं त्रिकद्रुकेषु ( सा० १४८६-८ ) इति बृहत्साम्ना अष्टाचत्वारिंश-

3. M[1] °विंश for °दश

9. M[1] °पर्यायात् for °पर्यायारम्भात्

10. M[1] बृहत् for ब्रह्म°

13. M[1]. Om. द्विस्त्रिर्

14. M[1] °षामात् for षामारम्भात्

15. M[1]. °त्रिंश° for °दश°

19. B[8] Om. च स्तुयुः

स्तोमेन स्तुयुः। नात्र प्रचेतनप्रचेतययोरुद्धारः। ब्रह्मसामारम्भात् पूर्वं चेत् अष्टाचत्वारिंशस्तोमेनैवम्। अच्छावाकसामारम्भात् पूर्वं चेत् पञ्चचत्वारिंशस्तोमेन। इत ऊर्ध्वं प्रचेतनप्रचेतययोरुद्धारः। द्वितीयपर्याये प्रशास्तृषामारम्भात् पूर्वं चेत् एकान्नचत्वारिंशेन। ब्रह्मसामारम्भात् पूर्वं चेत् त्रयस्त्रिंशेन। अच्छावाकसामारम्भात् पूर्वं चेत् तृणवेन। उत्तमपर्याये प्रशास्तृषामारम्भात् पूर्वं चेत् एकविंशेन। ब्रह्मसामारम्भात् पूर्वं चेत् षोडशस्तोमेन। अच्छावाकसामारम्भात् पूर्वं चेत् एकादशेन। सन्धिस्तोत्रात् पूर्वं चेत् षट्स्तोमेन च स्तुयुः। यद्वा। अग्ने विवस्वदुषस (सा० १७८०-१) इति संधिस्तोत्रस्य सवनशेषस्तोमाश्रयपक्षे सप्तस्तोमत्वादत्र बृहत्स्तोत्रपूर्वोक्तान् पञ्चचत्वारिंशादिस्तोमान् एकैकन्यूनान् कृत्वा स्तुयुः॥

एकविंशातिरात्रे प्रथमपर्यायारम्भात् पूर्वं वा, द्वितीयपर्यायारम्भात् पूर्वं वा द्वितीयपर्यायप्रशास्तृषामारम्भात् पूर्वं वा यदि पश्येत् तदा आश्विनानन्तरं त्रिकद्रुकेषु (सा० १४८६-८) इति बृहत्साम अष्टाचत्वारिंशस्तोमेन स्तुयुः। नात्र प्रचेतनप्रचेतययोरुद्धारः। ब्रह्मसामारम्भात् पूर्वं चेत् द्विचत्वारिंशेन। इत ऊर्ध्वं सर्वं प्रचेतनप्रचेतययोरुद्धारः। अच्छावाकसामारम्भात् पूर्वं चेत् पञ्चत्रिंशेन। उत्तमपर्याये प्रशास्तृषामारम्भात् पूर्वं चेत् अष्टाविंशस्तोमेन। ब्रह्मसामारम्भात् पूर्वं चेत् एकविंशेन। अच्छावाकसामारम्भात् पूर्वं चेत् चतुर्दशेन। संधिस्तोत्रात् पूर्वं चेत्

---

2. $M^1$ °चत्वारिंशेन for चत्वारिंशस्तोमेन

5. $M^1$ चत्वारिंशस्तोमेन for चत्वारिंशेन

11. $M^1$ °स्तोत्रे for °स्तोत्र°; $B^2$. °स्तोमेन for °स्तोमान्

12. $B^2$ एकैकस्य for एकैक°

13. $B^2$. Om. द्वितीय .....°प्रशास्तृषामारारम्भात् पूर्वं वा

16. $B^2$ before नात्र adds अच्छावाकसामारम्भात्

17. $M^1$. चत्वारिंशस्तोमेन for चत्वारिंशेन

समिस्तोमेन च स्तुयुः। एतेषु ब्रह्मसाम्नः ब्राह्मणोक्तव्यतिरिक्तस्तोमानां सूत्रकारोक्तयुग्मायुक्संहारपक्षं जातिसंहारपक्षं वाश्रित्य विष्टुतिः कार्या। गर्गत्रिरात्रे तस्मात् षोडश एव स्यादिति निदानकारेण ब्राह्मणविहितषोडशस्तोमस्यैव विधानादत्रापि होतृषाम्णां ब्राह्मणोक्तत्रिवृदादिस्तोमकत्वमित्युक्तम्। यद्वा। प्रायश्चित्तशास्त्रस्य प्रबलत्वात् प्रारब्धत्रिवृदादिस्तोमकत्वमपोह्य प्रशास्तृब्रह्माच्छावाकसाम्नां पङ्क्तिस्तोमकत्वम्। यथा उद्गातृप्रतिहर्त्रपच्छेदे सोमापहारे संकल्पितदक्षिणामपोह्य अदक्षिणत्वसर्ववेदसदक्षिणत्व-पञ्चदक्षिणत्वानि। यथा वा नौधसस्थाने श्रायन्तीयकल्पनम्। यथा वा कलशदरणे नौधसस्थाने वषट्कारनिधनकल्पनम्। यथा वा संसवे वृषण्वत्प्रतिपत्त्वकल्पनम्। तद्वदत्रापि आरब्धं त्रिवृदादिस्तोमं परित्यज्य पञ्चदशपङ्क्तिस्तोमकत्वकल्पनं युक्तमिति न्याय्यः पक्षः। विधृतीनामयनीयातिरात्रेषु जराबोधीयरायोवाजीयौशनकावानां संधिस्तोत्राणां स्थाने अग्ने विवस्वदुषस (सा० १७८०-१) इति रथन्तरसाम्नैव स्तुयुः। एतस्मिन् प्रगाथे जराबोधीयादीनामभावात् रथन्तरस्य नित्यत्वाच्च तेनैव स्तुयुरिति सर्वं समञ्जसम्॥

गर्गत्रिरात्रे रात्रिपर्यायैरस्तुते यद्युष आगच्छेत् तत्र प्रथमस्य पर्यायस्य होतृषाम्णां षोडशस्तोमेनैव स्तवनं कार्यम्। तदुक्तं निदाने—तस्मात् षोडश एव स्यादिति (उ० ग्र० सू० १. १०) इति। एकस्य पर्यायस्य द्वयोस्त्रयाणां वा पर्यायाणामस्तुताना-

5. M[1] युक्तम् for इत्युक्तम्

16. B[1] Om. from प्रथमे पर्याये (p. 36, L. 13) upto समञ्जसम्

18. BM[1] after गर्गत्रिरात्रे add तृतीयेऽहनि अतिरात्रे

19. M[1] °षाम्णा षोडश° for °षाम्णां षोडश°

20. B[1]. स्तवः for एव

21. My स्तुतानाम् for अस्तुतानाम्

मपीदमेव प्रायश्चित्तम्। तदुक्तं निदाने—यदि पर्यायैरस्तुतमभिव्युच्छेदिति सर्वान् पर्यायान् अधिकृत्य भवति तत्त्वर्थसामान्यादप्येकस्मिन् पर्याये प्रतीमोऽपि द्वयोर् (उ० ग्र० सू० १. १०) इति ॥१२॥

[ अर्वाक्स्तवातिष्टवप्रायश्चित्तम् ]

अथ अर्वाक्स्तवातिष्टवप्रायश्चित्तम्। यदर्वाक् स्तुवन्ति (तां० ब्रा० ६. ३. ७) इत्यादि—तत् समं क्रियत (तां० ब्रा० ६.३.१०) इत्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**यद्यर्वाक् स्तुयुर्यावतीभिर्न स्तुयुस्तावतीभिर्वातिष्टुयुः ॥१३॥**

इति। अर्वाक् विहितस्तोत्रान्न्यूनमित्यर्थः। यस्मिन् स्तोत्रे विहितस्तोमान्न्यूनः स्तवः कृतः तत उत्तरस्मिंस्तोत्रे तावतीभिरतिष्टुयुः। विहितस्तोमात् नित्यास्वेवर्क्षु अधिकस्तोमयुक्ता स्तुतिः कार्येत्यर्थः। अत्र निदानम्—अथ खल्वर्वाक् स्तवातिष्टवौ परं स्तोत्रमधिकृत्य भवतः (उ० ग्र० सू० १.११) इति ॥१३॥

पक्षान्तरमाह—

**भूयोऽक्षराभिर्वा ॥१४॥**

इति। यस्मिन् स्तोत्रे एकेन द्वाभ्यां बहुभिर्वाक्षरैः न्यूनः स्तवः तत उत्तरस्मिन् स्तोत्रे एकेन द्वाभ्यां बहुभिर्वाक्षरैरधिकाभि-

1. M[3] अस्तुतिम् for अस्तुतम्
2. B[1] स यान् for सर्वान् ; B[2]M[3] तत्त्वर्थः for तत्त्वर्थ°
3. B[2]M[1] एतस्मिन् for एकस्मिन्
6. M[1] अभिष्टव for अतिष्टव
11. B[2]M[3] अस्मिन् for यस्मिन्
12. M[1] पठित° for विहित°; B[1] Om. विहित·····उतरस्मिंस्तोत्रे ; B[1] यावतीभिर् for तावतीभिर् ; M[1] अतः for ततः
13. B[2]M[3] अनुष्टुयुः for अतिष्टुयुः
14. B[2] अत्र for अथ
18. B[2]M[3] स्तोत्रीययोः स्तोत्रीयैः for अक्षरैः

नित्याभिरेव ऋग्भिः स्तुयुरित्यर्थः । तदुक्तमुपग्रन्थे—तावतीर्वातिष्टुयुर्भूयोऽक्षराभिर्वा इति सच्छन्दस्या अधिकृता मन्यन्ते । एवमिह ह्येतस्य वाक्यस्यार्थो भवति । अनपेतं च प्राकृतात् छन्दोयोगात् भवति । तद्यथा—स्वारत्रीडयोः क्रियमाणयोर्नैवाक्षरसाम्यात् साम्यमुपपद्यते । न छन्दःसाम्यात् साम्यं तादृशमेतद् भवति (उ० ग्र० सू० १.११) ॥१४॥

पक्षान्तरमाह—

त्रीडं वाग्निष्टोमसाम कुर्युः ॥१५॥

इति । यज्ञा यज्ञा व इति तृचे महावैश्वामित्रं सामेत्यर्थः ॥१५॥

अस्मिन् पक्षे यज्ञायज्ञीयस्य स्थानात् प्रच्युतत्वात् तदनुग्रहाय क्लृप्तिमाह—

तस्य कल्पः ॥१६॥

इति ॥१६॥

पुरोजिती वो अन्धस (सा० ६९७—९) इति श्यावाश्वमान्धीगवमौद्लं त एकर्चाः । यज्ञायज्ञीयं तिसृषु । यज्ञायज्ञीयस्यर्क्षु महावैश्वामित्रमग्निष्टोमसाम । समानमितरं ज्योतिष्टोमेन ॥१७॥

---

1. $B^2M^3B^1$ अनुष्टुयुः for अतिष्टुयुः

3. $M^1$ एकैकस्य for एतस्य

12. $B^2M^3$ Om. तस्य कल्पः ; $B^1$ अस्य for तस्य

15. $B^1M^1$ श्यावाश्वमेकस्यामान्धीगवमेकस्यामौद्लमेकस्याम् for श्यावाश्वम्...... त एकर्चाः

इति । स्पष्टम् ॥१७॥

अथातिष्टवस्य—

**यद्यतिष्टुयुर्यावतीभिरतिष्टुयुस्तावतीभिर्वा न स्तुयुः ॥**

इति । यस्मिन् स्तोत्रे विहितस्तोममतिक्रम्य एकेन द्वाभ्यां बहुभिर्वा स्तोत्रीयैरधिकं स्तुयुस्तत उत्तरस्मिन् स्तोत्रे एकेन द्वाभ्यां बहुभिर्वा स्तोत्रीयैः न्यूनस्तुतिः कार्येत्यर्थः ॥१८॥

पक्षान्तरमाह—

**कनीयोऽक्षराभिर्वा ॥१९॥**

इति । उत्तरस्मिन् स्तोत्रे नित्याभिरेव ऋग्भिरेकेन द्वाभ्यां बहुभिर्वाक्षरैर्न्यूनाभिः कार्येति यावत् ॥१९॥

पक्षान्तरमाह—

**स्वारं वाग्निष्टोमसाम कुर्युः ॥२०॥**

इति । दैर्घश्रवसं सामेत्यर्थः ॥२०॥

स्थानच्युतयज्ञायज्ञीयानुग्रहाय क्लृप्तिमाह—

**तस्य कल्पः ॥२१॥**

इति ॥२१॥

काक्दैर्घश्रवसयोः स्वारत्वात् जामि स्यादित्यत आह—

**कावस्यर्क्षु यज्ञायज्ञीयमन्त्यम् । यज्ञायज्ञीस्यर्क्षु दैर्घश्रवसमग्निष्टोमसाम । समानमितरं ज्योतिष्टोमेन ॥२२॥**

इति । स्पष्टम् ॥२२॥

---

3. M[1] Om. वा

**ऊर्ध्वमग्निष्टोमसाम्नोर्वाग्वा स्तुवन्तः परो वा स्तोत्रीयासमं वा कुर्युरक्षरसमं वा ॥२३॥**

इति । परो वा अतिष्टव इत्यर्थः । स्पष्टमन्यत् ॥

अत्रैवं निर्णयः । पवमानेषु स्तोत्रीयाणां न्यूनस्तवे कृते उपरिष्टादृग्जपात् पूर्वं स्मृतेर्लुप्ता स्तोत्रीया एव पुनः स्तुत्वा सर्वप्रायश्चित्तमुद्गातैव हुत्वा उपरिष्टाद् ऋग्जपं कुर्यात् । अत्र निदानम्—अर्वाक् स्तुतं चेद् जपितास्वच्छिद्रासु बुद्ध्येरन् । स्तुवीरन्नेव ताभिः स्तोत्रीयाभिरित्येव मन्यन्ते । अव्यवायो हि स्तोत्राङ्गैः स्तोत्रस्य न्याय्यतरो यथा चेतरस्तोत्रीयाल्लोपोऽथाप्येवं सत्युत्तरं स्तोत्रं यथाप्रकृति भवेत् । अथेतरथोभे एव यथाप्रकृति भवतः (उ० ग्र० सू० १. ११) इति । उपरिष्टादृग्जपस्याच्छिद्रजप इति नाम । अच्छिद्रजपानन्तरं स्मृतौ होतुराज्ये होतुःपृष्ठे अग्निष्टोमसामनि च पवमानेषु च यावत्यो लुप्तास्तावतीः कुशा वर्धयित्वा तास्वेव नित्यास्वृक्षु तदानुगण्येन विष्टुतिं कृत्वा स्तुवीरन् । बहिष्पवमाने एकया द्वाभ्यां बहुभिर्वा न स्तुतं चेत् होतुराज्ये पञ्चादशस्तोमे उत्तमे पर्याये षड्भ्यः सप्तभ्योऽष्टाभ्यो वा हिंकृत्य प्रथमे विष्टावे द्वितीये वावपेदिति । अत्र सूत्रम्—दाशरात्रिकेभ्य एकया ज्यायस्सु तस्मात् पूर्वस्योत्तमे पर्याये आवपेत् । ब्रह्मायतनीया तु तेषु क्षत्रायतनीया वा (ला० श्रौ० ६. ७. १७–१८) इति । आवृत्तिस्तोत्रेष्वच्छिद्र-

---

8. B[1] Om एव after इति

9. B[1] चेत् for चेतर°

10. B[1] भवति for भवेत्

16. M[1] Om. उत्तमे

17. B[2] Om. वा after अष्टाभ्यो

19. M[1] कृतेषु for तु तेषु

20. M[1] Om. अच्छिद्र°

जपानन्तरं स्मृतावनन्तरस्तोत्रे लुप्तस्तोत्रीयावृद्धिः कार्या। सवनद्वयेऽपि अच्छावाकस्तोत्रेऽछिद्रजपानन्तरं स्मृतौ माध्यन्दिने आर्भवे च पवमाने गायत्रीबृहत्यनुष्टुप्सु लुप्तस्तोत्रीयासमसंख्यसामावापो जामिक्रमेण कार्यः। अत्र गायत्रात् पूर्वं सामावापो न कार्यः। मुखं गायत्रीति श्रुतेः। प्रथमे पर्याये यदि लोपस्तस्मिन्नेव स्तोत्रे उत्तरयोर्वृद्धिः कार्या। यदि पूर्वयोस्तदोत्तमे व्यत्यासस्य सर्वप्रायश्चित्तम्। अत्र निदानम्—समानस्तोत्रेऽपि प्रतियन्ति। प्रथमे चेत् पर्यायेऽतिष्टुतं स्यात्तदुत्तरयोः प्रतिनिरस्येयुः। पूर्वयोर्वातिष्टुतमुत्तमे (उ० ग्र० सू० १. ११) इति। अतिष्टवोक्तमर्वाक्स्तवस्याप्युपलक्षणम्। अथ खल्वर्वाक्स्तवातिष्टवावित्युभयोरप्युपक्रमात् अतिष्टवे ह्रासः। अर्वाक्स्तवे वृद्धिः। यद्वा। एकेन द्वाभ्यां बहुभिर्वाक्षरैः नित्येष्वेव छन्दस्सु अधिकस्तवनेनोत्तरस्तोत्रे कृते पूर्वस्तोत्रलुप्तस्तोत्रीयासाम्यं भवतीति निदानकारस्याशयः। यद्वा। बहिष्पवमानादिष्वेकादशस्तोत्रेषु यत्रकुत्रापि लुप्तानां स्तोत्रीयाणां महाविश्वामित्रे त्रिणिधनेनाग्निष्टोमसाम्ना स्तवने कृते लुप्तस्तोत्रीयासाम्यं भवतीति ब्राह्मणस्याशयः॥

अतिष्टवे तु पवमानेषु एकस्य द्वयोर्बहूनां वाधिक्ये होतुराज्ये होतुःपृष्ठेऽग्निष्टोमसाम्नि चतुर्दशत्रयोदशद्वादशस्तोमाः षोडशपञ्चदशचतुर्दशस्तोमाः विंशैकोनविंशाष्टादशस्तोमाः। आवृत्तिस्तोमेष्वप्येवमूह्यम्। अत्रार्वाक्स्तवातिष्टवयोः वृद्धिह्रासवतीषु विष्टुतीषु युग्मायुक्संहारपक्षं वा जातिसंहारपक्षं वा आश्रित्य स्तुतिः कार्या। एकेन द्वाभ्यां बहुभिर्वाक्षरैर्नित्येष्वेव च्छन्दस्सु न्यून-

---

3. M[1] °संख्या° for °संख्य°

6. M[3]B[2] Om. उत्तरयोर्.........समानस्तोत्रे (L. 7)

14. M[1] °दशेषु for °दश°

15. M[1] °मित्रेण त्रीडेन for °मित्रे त्रिणिधनेन

22. B[1] before एकेन adds यद्वा

स्तवनेनोत्तरस्तोत्रे कृते पूर्वस्तोत्राधिकस्तोत्रीयासाम्यं भवतीति निदानकारस्याशयः। यद्वा। बहिष्पवमानादिष्वेकादशस्तोत्रेषु यत्र कुत्राप्यधिकानां स्तोत्रीयाणां दैर्घश्रवसेन स्वारेणाग्निष्टोमसाम्ना स्तवने कृतेऽधिकस्तोत्रीयासाम्यं भवतीति ब्राह्मणस्याशयः। श्यावाश्वादूर्ध्वम् अर्वाक्स्तवे कावादूर्ध्वमतिष्टवे त्रीडस्वरपक्षौ न स्तः। आवृत्तिस्तोत्रेषु प्रथमपर्यायेऽतिष्टवे उत्तरयोः पर्याययोः स्तोत्रीयाभ्यासः कार्यः। उत्तमे पर्यायेऽतिष्टवे क्रियमाणे स्तोत्रीयामध्ये स्मृतं चेत् तत् क्षणादेव विरमेत्। तेन नातिष्टवे दोषः। अत्र निदानम्—प्रथमे चेत् पर्यायेऽतिष्टुतं स्यादुत्तरयोः प्रतिनिरस्येयुः। पूर्वयोर्वातिष्टुतमुत्तमे ते चेदतिष्टुवन्तो विगीतायां स्तोत्रीयायां प्रस्तुतायां बुध्येरन्। न समाप्यैव तां विरमेयुः। न च तेनातिष्टुतं मन्येत। यद्यर्वाक् स्तुयुर्यावतीभिर्न स्तुयुः। यद्यतिष्टुयुर्यावतीभिरतिष्टुयुर् (उ० ग्र० सू० १. ११) इति। कृत्स्नानां स्तोत्रीयाणामधिकारो भवति। न स्तोत्रीयेतरार्धानाम् इति॥

समानस्तोत्रे स्तोत्रीयाविपर्यासे स्तुतस्य गणनां कृत्वा स्तोमसाम्ये सति न पुनरावर्तयितव्यः। शेषेण स्तुत्वा सर्वप्रायश्चित्तं कुर्यात्। तदुक्तं निदाने—समानस्तोत्रे चेत् नु स्तोत्रीयाविपर्यासः स्यात्। ततः स गणयितव्यः आनुपूर्व्यार्थे न ह्यभ्या-

---

3. $M^1$ अस्तोत्रीयाणां for अधिकानां स्तोत्रीयाणां ; $M^3B^2$ द्वारेण for स्वारेण

6. $M^3$ Om. उत्तरयोः ······ स्तोत्रीयाभ्यासः

10. $B^1$ एके $M^1$ एते for उत्तमे ते

16. $B^1$ समाने for समान

17. $M^3$ after स्तुत्वा leaves 24 to 27 are missing in original Ms as noted in the transcript. It resumes from °तय इति रथानन्तरम् (p. 71, L. 1)

19. $B^2$ अन्ततः for ततः ; $B^2$ °पूर्वार्थे for °पूर्व्यार्थे

वर्तमाने स्तोमातिरेकः स्यान्न चानुपूर्व्यं न व्यवाप्येत। तत्सर्वप्रायश्चित्तमेव स्यात् (उ० ग्र० सू० १. ११) इति। गायत्रेण न स्तुते संहितस्यैकस्यां स्तोत्रीयायां स्तुतायां गायत्रेण न स्तुतमिति स्मृतेऽपि संहितं समाप्य गायत्रेण स्तुयुः। एवं लुप्तस्य साम्नः अन्यसाम्नः स्तवनमध्ये स्मृतिश्चेदारब्धं साम समाप्य लुप्तस्य साम्नः स्तवनम्। एतेन स्वारयोर्गायत्रसफयोः संनिपातेऽपि न जामिदोषः। यथा व्रते रथन्तरबृहतोः। यथा वा गर्भिषु। अत्र निदानम्—अस्तुते गायत्रेण संहितस्यैकस्यां स्तोत्रीयायां स्तुतायां बुद्ध्येरन्। समापयेयुरेव संहितमिति मन्यन्ते इत्यारभ्य अथ वै गायत्रस्य च संनिपातः स्यात्। सफस्य च। तज्जामि स्यादिति विद्यते जामिकल्प इत्याहुर्व्रतेषु च गर्भिषु च (उ० ग्र० सू० १. १२) इत्यन्तम्। अन्यस्तोत्रगतधर्माणामन्यस्तोत्रे करणेऽपि नातिष्टवदोषः। तदुक्तं निदाने—यस्मिन् स्तोत्रे द्रव्यं न विद्यते तेन चेत् प्रमत्ताः स्तुवीरन् न तेनातिष्टुतं मन्येत। (उ० ग्र० सू० १.१२) इति ॥

अहर्गणेषु पूर्वस्मिन्नहनि अशक्तस्तत्रातिष्टवयोरुत्तरेऽहनि स्मरणे सर्वप्रायश्चित्तमेव। रथन्तरादीनां रथघोषादिधर्मलोपे यदा स्मृतिस्तदा तत्तन्मन्त्रान् जपित्वा सर्वप्रायश्चित्तं कुर्यात्। अक्षरपूर्वपदस्तोभनिधनानां लोपे आभिर्गीर्भिरिति हुत्वा सर्वप्रायश्चित्तं कुर्यात्। वाजपेयसर्वपृष्ठाप्तोर्यामादिषु अतिष्टवे स्तोत्रीयाह्रासपक्षो वा अक्षरह्रासपक्षो वा कार्यः। न तु स्वाराग्निष्टोमे सामपक्षः। संचारदोषप्रसङ्गात्। माध्यंदिनपवमाने दैर्घ-

3. M[1] अस्तुतं for न स्तुतं

4. B[1-2] M[1] स्तुते for स्मृते

7. B[2] Om. यथा

14. B[1-2] M[3] My एतेन for न तेन

18. B[1] भक्ति for तत्तन्°

20. B[2] °ष्टव° for °ष्टवे

श्रवसस्य कृतत्वात् सर्वस्तोत्रीयाणां क्रमव्यत्यासे सर्वप्रायश्चित्तम्। रथन्तरपृष्ठे क्रतौ बृहता स्तवने पुनश्च रथन्तरेण स्तवनम्। नात्र अतिष्टवदोषः। एवं सर्वत्र अन्यस्मिन् साम्नि स्तोतव्ये अन्यस्य साम्नः करणे अग्निष्टोमसाम्न्यर्वाक्स्तत्रातिष्टवयोः सर्वप्रायश्चित्तमेव। एवमुक्थ्यादिसंस्थान्तरेष्वन्तिमस्तोत्रेषु। पवमानस्य व्यत्यासे तत्तत्-स्तोत्रकालातिक्रमे सर्वप्रायश्चित्तमेव। अनतिक्रमे तु सर्वप्रायश्चित्तं हुत्वा काले प्राप्ते पुनः स्तवनमेव। बहिष्पवमाने माध्यंदिनपवमानेन स्तुत्वाच्छिद्रजपात् पूर्वं बहिष्पवमानेन न स्तुतमिति स्मरेयुस्तदैव बहिष्पवमानेन स्तुयुः। व्यत्यासस्य सर्वप्रायश्चित्तमच्छिद्रजपानन्तरं चेत् यदा स्मृतिस्तदा सर्वप्रायश्चित्तं हुत्वा तदा स्तवनम्। अन्यस्य स्तोत्रस्य मध्ये स्मृतं चेदारब्धं स्तोत्रं समाप्य तस्य लुप्तस्य स्तवनम्। एवं सर्वस्तोत्रेषु। माध्यंदिने आर्भवगतसाम्नां श्यावाश्वादीनामेकस्य द्वयोर्बहूनां वा रौरवादिस्थाने स्तवनम्। तदा अच्छिद्रजपे कृते सर्वप्रायश्चित्तमेव। अकृते लुप्तानां पुनःस्तवनम्। स्तुतानां च पुनरार्भवे स्तवनम्। नात्रातिष्टवदोषः। पवमानविहिततृचसामापोह्यान्येन स्तवने सर्वप्रायश्चित्तम्। विष्णुस्मृतिश्च। अत्र प्रसङ्गात् कारिकोक्तप्रकारेण प्रायश्चित्तान्तराण्युच्यन्ते। दीक्षणीयादीष्टिषु साम्नां भ्रेषे वैष्णव्याज्याहुतिः सर्वप्रायश्चित्तं च। अत्र प्रायश्चित्तान्तरेण सह सर्वप्रायश्चित्तस्य

---

2. B² °पृष्ठ° for °पृष्ठे

6. M¹ Om. एव। अनतिक्रमे तु सर्वप्रायश्चित्तं

9. B¹ Om. न स्तुतम्·········बहिष्पवमानेन

13. My सर्वत्र for सर्व°; M¹ °पवमान° for °गत°

16. B² स्तुतं for स्तुतानां

17. B¹. Om. अपोह्य°·········वैष्णवी (L. 19)

18. B² °श्चित्तानि for °श्चित्तान्तराणि

समुच्चयः । व्याहृतीभिर्व्यस्ताभिः समस्ताभिः होमः सर्वप्रायश्चित्तमित्युच्यते । शार्ङ्गादिघर्मसाम्नां भ्रेषे पुनर्गीत्वा महाव्याहृतीभिर्होमः । महिम्न इत्यादियजुषां भ्रेषे पुनर्जपित्वा व्याहृतीत्रयजपः । सुब्रह्मण्याह्वानात् प्राक् आप्यायननिह्नवकरणस्मृतौ पुनः कुर्यात् । ऊर्ध्वं चेत्तज्जप एव । मधुपर्के गायत्रीपदव्यत्यासे पुनः कृत्वा व्याहृतीजपः । अवच्छेदनात् प्राक् औदुम्बरीस्पर्शविच्छेदे द्युतानादिमन्त्रान् चतुरः प्रत्येकं त्रिरुच्चार्य सर्वप्रायश्चित्त कुर्यात् । औदुम्बर्यां दाहभेदहरणभङ्गपतनादिषु अन्यमाहृत्य द्युतानादिमन्त्रैरुच्छ्रित्य द्युतानादिमन्त्रैस्त्रिभिरवटे निदध्यात् । ततो व्याहृतीभिर्व्यस्ताभिः समस्ताभिः हुत्वा गायत्रीं जपेत् । लोकद्वारव्यत्यासे सर्वप्रायश्चित्तम् । अकृते वेद्याक्रमणे पुनः कृत्वा व्याहृतिजपः । अन्यद्वारा हविर्धानप्रवेशे सर्वप्रायश्चित्तहोमः । वसतीवरीप्रवेशादूर्ध्वं चेत् महाव्याहृतिजपः । सोममस्पृश्यो(ष्ट्वो ?) पवेशने पुनः शकटस्योत्तरं देशं प्राप्य समन्त्रकं स्पृशेयुः । बहिष्पवमानऋग्जपविस्मृतौ उद्गाता वैष्णव्या हुत्वा पुनस्तद्देशे उपविश्य ऋग्जपं कुर्यात् । कलशाभ्यूहने एकहस्तेन कृते व्याहृतीर्जपित्वा हस्ताभ्यां स्पृशेत् । संमार्जनप्रोहणव्यत्यये व्याहृतीर्जपन् पुनर्यथाक्रमं कुर्यात् । पवित्रं प्रास्य सोममार्जनेऽकृते गायत्रं जपन् पवित्रं प्रास्य पुनः संमार्जनं कुर्यात् । संमार्जनाकरणे वैष्णवीमुक्त्वा पुनः संमृज्यात् । कलशालम्भप्रोहणपवित्रप्रासनग्रावयोजनाभ्यूहनमार्जनधारानुमन्त्रणानां भ्रेषे व्यत्यासे च सर्वप्राय-

---

1. B[2] Om. सर्व.........होमः (L. 3)

3. M[1] व्याहृती° for व्याहृति°

4. M[1] निह्नवा° ; B[1] निह्नवना° for निह्नव°; B[1] स्तुतौ for स्मृतौ

6. M[1] व्याहृति° for व्याहृती°; M[1] आच्छादनात् for अवच्छेदनात्

10. B[1] स्तुत्वा for हुत्वा

18. B[2] My om. सोममार्जनेऽकृते गायत्रं जपन् पवित्रं प्रास्य

श्चित्तम् । प्रवरभ्रेषे अग्निंदूत(सा० ७६०-२)मिति जपन् प्रस्तोता अग्निं ध्यायेत् । प्रवणमुद्गाता जपन् बृहस्पतिं ध्यायेत् । व्याहृतीर्जपन् प्रतिहर्ता वायुं ध्यायेत् । यत्र यत्र वाङ्नियमाकरणं तत्र तत्र वैष्णव्या जपः । अनारम्भे प्रस्तोतुर्विच्छेदे ब्रह्मणे गां दत्वा पुनस्तं वृणुयात् । उद्गातुरवच्छेदे तं यज्ञमदक्षिणं श्रायन्तीय-ब्रह्मसामकं समाप्य तमेव यज्ञं पुनः कुर्यात् । प्रतिहर्तृविच्छेदे सर्वस्वं दद्यात् । पूर्वापरविच्छेदेऽपरनिमित्तप्रायश्चित्तमेव । युगपदवच्छेदे विकल्पः । उद्गातुर्वापस्तम्बमतात् । तृतीयसवने तु सर्वप्रायश्चित्तमेव । प्रवृत्तहोमभ्रेषे सर्वप्रायश्चित्तम् । बहिष्पवमाने ऋग्-व्यत्यासेन प्रस्तावे एवमुद्गीथे प्रतिहारे च आभिर्गीर्भिरिति मन्त्रेण निमित्तं जुहुयात् । चात्वालदर्शनादिलोपे व्याहृतिजपः । सर्वस्तोत्रेषु पुरस्ताद्दग्जपलोपे महाव्याहृतिवैष्णवीभ्यां होमः । प्रातःसवने देवतोपस्थापनलोपे सर्वप्रायश्चित्तं कृत्वा मनसो-पतिष्ठेरन् । उत्तरयोस्तु तद्देवताध्यानमेव । सर्वत्र संचारभ्रेषे यज्ञशंचम इति जपन् पुनर्यथामार्गं संचरेयुः । उपवेशन-मन्त्रलोपे पुनर्जपित्वा व्याहृतीर्जपेत् । अन्योन्योपहवलोपे पुनस्तत् कुर्यात् । सवनत्रयेऽपि सवनमुखीयेषु अवभृथेषु अग्निर्मे इत्यादिकमवाचयित्वा आभिर्गीर्भिरिति होमः । अग्निर्मे

---

3. M[1] वा नियमा° for वाङ्नियमा

4. My अन्वारम्भे for अनारम्भे

6. M[1] °हृत्रंप° for °हर्तृवि°

7. B[1] Om. युगपदव·········°श्चित्तमेव (L. 9)

13. B[1] My M[1] देवतास्थान° for देवतोपस्थान°

15. B[2] यज्ञशमञ्चम, M[1] यज्ञरंचम for यज्ञशंचम

17. B[1]M[1] आहुतेषु for अवभृथेषु

18. M[1] वाचयित्वा for अवाचयित्वा

इत्यादिवाचनं च। इडाकाले चमसे अनुद्धृते प्रस्तोतुर्व्याहृतिजपः। नाराशंसे सर्वभक्षिते आप्यायस्वेति वसतीवरीं निनीय सर्वप्रायश्चित्तं हुत्वा पुनः समन्त्रकं भक्षयित्वाप्याययेत्। चमसे भक्षणात् प्राक् केशकीटद्वादशमलादिदुष्टे ब्रह्मयजमानयोर्निवेद्यं 'आदाय प्रायश्चित्तं कुरु' इति ताभ्यामनुज्ञातः प्रस्तोतृहस्तात् गृहीत्वोदक् परेत्य सदसो बहिरङ्गुलमात्रनिम्ने देशे निनीय प्रक्षाल्य व्याहृतीर्जपन् जलं चमसे निनीय मन्त्रहीनं भक्षयेयुः। मन्त्रान्तरेण भक्षणे तन्मन्त्रं पुनरुच्चार्य वैष्णवहोमः। प्रातःसवने चमसाप्यायने लुप्ते आप्यायस्व-महाव्याहृतीभ्यां होमः। माध्यंदिने तु सं ते पयांसि-व्याहृतीभ्यां होमः। तृतीयसवने आप्यायस्वेत्यृचः द्विरुक्त्वा होमः। व्याहृत्या च यस्मिन् मन्त्रे स्वरादिहीनता तत्र महाव्याहृतीहोमः तन्मन्त्रस्य पुनर्जपः। सुब्रह्मण्यायां तु तां पुनरुक्त्वा आभिर्गीर्भिरिति महाव्यहृतीभिश्च होमः। आज्येषु ऋग्व्यत्ययप्रस्तावे पुनः प्राकृतां प्रस्तुत्य स्तोत्रान्ते प्रस्तोतैव व्याहृतीभिर्जुहुयात्। पवमानेषु ऋग्व्यत्ययप्रस्तावे आभिर्गीर्भिरिति होमः। एवं विस्तृतस्य तु पुनः कृतिः। एवं पवमानीयसामसु प्रस्तावविस्मरणे पुनः करणम्। प्रस्तोत्रा स्वभक्तिं हित्वा भक्त्यन्तरे प्रस्तुते तदज्ञानात् उद्गात्रोद्गीथे गीय-

---

1. B[1] Om. आदि
2. M[1] °वरीर् for वरीं
4. B[1]M[1]B[2] Om. °मल°
6. B[2] °मात्रं for °मात्र°
7. B[2] My M[1] स्वर्णजलं for जलं; B[1-2] चमसेन for चमसे
12. B[2] हीनं for हीनता; B[1] My Om. तत्र
14. B[2] प्राकृतं, M[1] प्रकृतं for प्राकृतां
15. B[2] °व्यत्यये for °व्यत्यय°
16. B[2] Om. कृतिः

माने स्मृतं चेत् पुनः भक्तिं गीत्वा आभिर्गीर्भिरिति होमः । उद्गातृप्रतिहर्त्रोरपि स्वभक्तिं हित्वा भक्त्यन्तरगाने महाव्याहृती[भि]र्होमः । रथन्तरे तु प्रस्तावे लुप्ते उद्गीथात् पूर्वं स्मृतेन प्रायश्चित्तम् । उद्गगीथे गीयमाने स्मृते पुनः प्रस्तुत्य तदैवोत्थाय प्रशास्तृहोतुर्धिष्ण्ये अन्तरा निर्गत्य आग्नीध्रीयमुत्तरेण गत्वा अभिर्गीर्भिरिति सर्वप्रायश्चित्तं च हुत्वा यथेदं गत्वा सदः प्रविश्य गायेत् । प्रतिहर्तुर्भक्तिलोपे तथैव गत्वा महाव्याहृतीर्हुत्वा सदः प्रविशेत् । भक्कारव्यत्यये उद्गाता तथैव गत्वा आभिर्गीर्भिरिति हुत्वा यथेदं सदः प्रविश्य स्तोत्रोपाकरणादिकं पुनः कृत्वा सावधानो गायेत् । अन्योन्यभक्तिव्यत्यासे स्वभक्तिं पुनरुच्चार्य आभिर्गीर्भिरिति तदेव जुहुयात् । सर्वेष्वावृत्तिस्तोत्रेषु एवमेतदेव प्रायश्चित्तमिति ज्ञेयम् । कुशाविधानव्यत्यासे इदं विष्णुरिति प्रस्तोतैव जुहुयात् । यजमानवचनं विना स्तोमविमोके कृते इदं विष्णुरिति जपः । बहिष्पवमाने उद्गीथलोपे आभिर्गीर्भिरिति होमः । स्तोमयोगे भ्रेषेऽपि व्याहृतीभिर्होमः । अन्यचमसभक्षणे चात्वाले वमित्वा स्नात्वा सर्वप्रायश्चित्तं कुर्यात् । येन भक्षितं तस्यैव प्रायश्चित्तम् । नाभक्षयितुः । विश्वरूपाणामगाने न

---

4. B[1-2] उद्गीयमाने for उद्गीथे गीयमाने

5. B[1]M[1] निर्गम्य for निर्गत्य

6. M[1] Om. सर्वप्रायश्चित्तं च

9. B[1] after इति adds : सर्वप्रायश्चित्तं च ; B[1] after इदं adds गत्वा

11. B तदैव for तदेव ; B[1] एव तदैव for एतदेव

12. B[1] विधानेन, M[1] विधिना, My विधाने for °विधान°

15. M[1] My °योग° for °योगे ; M[1] हृति° for हृतीभिर् ; B[2] अन्यच् for अन्य°

17. B[2] गाने for अगाने

प्रायश्चित्तम् । वैकल्पिकत्वात् तासाम् । ब्रह्मन् स्तोष्यामः प्रशस्तरित्यनुक्त्वा स्तोमयोगे कृते पुनः तत् कृत्वा स्तोमं युञ्ज्यात् । उद्गातृचमसे अन्येन भक्षिते उद्गात्रैव प्राजापत्यया व्यस्तसमस्तव्याहृतीभिश्च होमः कार्यः । चमसे श्वचण्डालोदक्याभिः स्पृष्टे दृष्टे वा तत्क्षणात् अग्नौ तपनाच्च संशोध्य पुनस्तेनैव भक्षयेयुः । सदसि ताम्बलचर्वणे ऋत्विग्भिः कृते पाणिपादं प्रक्षाल्याचम्यात्मानं मन्त्रैः प्रोक्ष्य महाव्याहृतीरष्टोत्तरशतं जपेत् । ऋषिच्छन्दोदेवतोद्गीथोपासनषोडशिग्रहावेक्षणानामकृतौ वैष्णवीव्याहृतीभ्यां होमः । अकृते पृष्ठहोमे प्रस्तोता तं मन्त्रं जपित्वा वैष्णवीं सर्वप्रायश्चित्तं च जुहुयात् । पूर्वमुक्तेष्वनुक्तेषु सर्वेषु निमित्तेष्वपि सर्वप्रायश्चित्तमेवेति गौतमः । सर्वत्र मन्त्रलोपे वैष्णव्याहुतिरिति शाटयायनः । आवृत्तिस्तोत्रेषु पवमानेषु व्यत्यासे आभिर्गीर्भिरिति शाण्डिल्यः । सर्वमन्त्राणां क्रियाणां च लोपे महाव्याहृतीचिन्तनमिति धानञ्जय्यः । अयं च जपः आरब्धे स्तोत्रे मध्ये उत्थाय होतुमशक्यत्वात् तदा कार्यः । यदा होतुं शक्यं तदा होम एवेति व्यवस्थितम् । एवमुक्तानुक्तानि प्रायश्चित्तानि बुद्ध्या पर्यालोच्य यथायथं कुर्यादिति सर्वं समञ्जसम् ॥२३॥

इति प्रथमे प्रपाठके सप्तमः खण्डः ॥७॥

---

## अष्टमः खण्डः

### [ संस्रवप्रायश्चित्तम् ]

20 अथ संस्रवप्रायश्चित्तम् । यदि सोमौ संसुतौ स्याताम् (तां०
21 ब्रा० ९.४.१) इत्यनुवाकोक्तस्य क्लृप्तिमाह—

---

2. B[1]M[1]My OM. तत्

5. M[1] दुष्टे for दृष्टे

10. M[1] after सर्वेषु ins. अपि

13. B[2] क्रियमाणानां for क्रियाणां

16. B[1] उक्तानि for उक्त°

17. M[1] My कुर्युः for कुर्यात्

## सोमे संसुते ॥१॥

इति। संयुक्तोऽभिषुतः सोमः संसुतः। सोमान्तरेण समभिषुतः संसुत इति वा। मिथः सपत्नयोः एकस्मिन् राज्ये महागिरिक्षुद्रगिरिद्वयगिरिभवनदीगिरिभिन्ननदीमहानदीनाव्यनदीग्राहयुक्तमहासरस्तटाकाद्येकाहरथगम्यप्रदेशशकटमार्गव्यवधानाभावे आश्रवणादिशब्दश्रवणस्थले वा यज्ञात्ययशङ्कायां वा विदुषोरेवैकदिने सुत्याप्रयोगः संसव इत्युच्यते। कालातिक्रमे वा द्रव्याभावे वा यज्ञात्ययशङ्का यदा स्यात् तदा जानतोरेव संसवः। अन्यत्राजानतो[र]पि। तदुक्तं निदाने—विद्वांस्त्वेव संसुनुयाद्यत्रासंसुन्वन् यज्ञात्ययात् शङ्केतेति (उ० ग्र० सू० १.१२)। तदुक्तं शाङ्खायनसूत्रे—ज्ञानविषये विद्विषाणयोः सुत्ययोरह्नोः संनिपातनं संसव इत्याचक्षते (शां० श्रौ० १३.५.१) इति। अत्र सूत्रम्—महागिरिमहानदीरथाहर्वाय्व्यवायेष्वसंसवः पृथग्जनपदे च। अविद्विषाणमात्रादित्येके ( ला० श्रौ० १. ११. १२-१४ ) इति। वायुः वात्या। अत्र बौधायनः—संसव इति। यत्र क्वचन नाव्या वा नदी स्यादन्तरेणोदपक्ष्मवती वा संसवस्तत्र इति। बोधायनो यत्र क्वचन शब्दा न संसृज्येरन्न संसवस्तत्रेति शालीकिः। यत्र क्वचनान्तरेणेयादसंसवस्तत्रेत्यौपमन्यवः। प्रस्थयोरेव जनपदयोरसंसवस्तत्रेत्यौपमन्यवीपुत्रः। नाविद्विषाणयोः संसवो विद्यत इति छागलेयब्राह्मणम् भवतीत्याजीगवि-(बौ० श्रौ०

4. B[1] Om. गिरि after द्वय°; B[1] My[1] lacuna after भव° upto °व्यनदी

5. B[1] धनान्तो for धनाभावे

6. My B[1] विदुषोरे[ ]त्या

11. B[2] पातेन, M[1] पतने for पातनं

13. My संसवः for असंसवः

18. B[1] शालकिः, M[1] शालिकिः for शाकलीकिः

19. M[1] एक for एव

20. B[1] चाकलेय for छागलेय

२३. ५ : १० )रिति । उदपक्ष्मवतीति उदकस्य पद्मग्रहादयः [ उदपक्ष्म । ] तद्वतीत्यर्थः । अत्र कात्यायनः—नद्यन्तरे संसवो गिरिभिच्चेत्। गिरौ । रथाह्ने च। सर्वत्राविद्विषाणाम्। विद्वेषेऽप्ययं वायुर्महान् समुद्र इति श्रुतेः (का० श्रौ० २५.१४.२२-२६ ) इति । अत्राश्वलायनः—विमतानां प्रसवसंनिपाते संसवोऽनन्तर्हितेषु नद्या वा पर्वतेन वाप्येकेऽन्तर्हितेष्वपि (आ० श्रौ० ६. ६. ११-१२) इति। आपस्तम्बः—यावद्रथाह्नचमन्तरा गिरिर्गिरिभिद्वा नदी व्यवेयात् । पर्वतान्तराये वा नानाराज्ययोर्वा संसवो नाविद्विषाणयोः संसवो विद्यत इति कङ्कतिब्राह्मणं भवति (आप० श्रौ० १४.२०.४) इति । अत्र वैखानससूत्रम्—यद्यन्तरा गिरिनदी स्यात् नास्य संसवो नाविद्विषाणयोः संसव इति (वै० श्रौ० २१.६:४) इति । अत्र हिरण्यकेशिसूत्रम्—यावद्रथाह्नचमन्तरा गिरिभिद्वा नदी तावता संसवः समानजनपदे संसवो नानाजनपदे संसवो नाविद्विषाणयोः संसवो विद्यत इत्येकेषाम् (हि० श्रौ० १५.५.२३) इति ॥१॥

**पवस्वेन्दो वृषा सुतो (सा० ७७८-८०) द्विद्युतत्या रुचा (सा० ६५४-६) पावमानस्य ते कवे (सा० ६५७-९) इति तृचक्लृप्तं बहिष्पवमानम् ॥**

**पवस्वेन्दो वृषा सुत (सा० ७७८-८०) उपास्मै गायता नरः (सा० ६५१-३) पवस्व वाचो अग्रियः (सा० ७७५-७) इति संभार्यस्तोत्रिय इति वा ॥**

---

1. B[1] पक्ष्मलादयः My पक्ष्मग्रहादयः for पद्मग्रहादयः

3. B अत्र for सर्वत्र

5. M[1] संसवे° for संसवो°

12. B[2] अथ for अत्र

अग्न आयाहि वीतय ( सा० ६६०-२ ) इति रथन्तरम् । त्रीणि बार्हतानि । अग्निं दूतं वृणीमहे (सा० ७९०-२) इत्युभयान्याज्यानीति वा ॥

वृषा पवस्व धारये-(सा० ८०३-५)ति गायत्रं चामहीयवं च। पुनानः सोम धारये-(सा० ६५७-९)ति रौरवमेकस्याम् । यौधाजयमेकस्याम् । स्वारं तौरश्रवसमेकस्याम् । रथन्तरं तिसृषु । वृषा शोण (सा० ८०६-८) इति पार्थमन्त्यम् ॥ बृहच्च वामदेव्यं च श्यैतं च कालेयं च ॥

अचिक्रदद्वृषा हरिर् ( सा० १०४२ ) इति गायत्रसंहिते । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफश्रुध्ये । पुरोजिती वो अन्धस (सा० ६९७-९) इति श्यावाश्वमेकस्याम् । निधनवत्तौरश्रवसमेकस्याम्। औदलमेकस्याम् । आन्धीगवं तिसृषु । कावमन्त्यम् ॥

यज्ञायज्ञीयमग्निष्टोमसाम ॥२॥

इति । स्पष्टम् ॥२॥

1. $M^3$ from सर्वप्रायश्चित्तं (p. 61, L. 17) ······ याहिवी° missing

2. My $B^2$ $M^1M^3$ राथन्तरम् for रथन्तरम्

4. My Om. वा

**ककुभावुत्तरे रथन्तरस्य करोति। ब्रह्मायतनीया सप्तदशस्य विष्टुतिर्होतुः पृष्ठस्य ॥३॥**

इति। ज्योगामयावियज्ञे व्याख्यातम् ॥३॥

**छन्दोदेवत्या तृतीया प्रवृतहोमयोर्यथासवनम् ॥४॥**

इति। छन्दांस्येव देवता यस्यामाहुतौ सा तथोक्ता। संवेशायेत्यादिब्राह्मणोक्ता मन्त्राः वेकुरा नामासि सूर्योमेति। प्रवृतहोमयोः कृतयोः सतोरियं संवेशायेत्याहुतिस्तृतीयेत्यर्थः। ऋचं सामेति चतुर्थमुद्गातैव जुहुयात्। यथासवनमिति। प्रातःसवने गायत्र्यै छन्दसे। माध्यंदिने त्रिष्टुभे छन्दसे। तृतीये सवने जगत्यै छन्दसे। इति। तदुक्तं सूत्रे—संसुतसोमे त्वधिकामुद्गाता जुहुयात् संवेशायोपवेशायेति यथासवनं छन्दांस्यादिशन्। ऋचं सामेति स्वाहाकारान्तया तृतीयां सर्वत्र स एवेति शाण्डिल्यः (ला० श्रौ० १.११.१०-११) इति। सर्वत्र संसुतसोमादन्येषु यज्ञेषु ऋचं सामेति तृतीयामुद्गाता जुहुयात्। संसुतसोमे तु कल्पकारेण तृतीयेत्युक्तत्वात् संवेशहोमस्य प्राप्ताप्राप्तविवेकेन ऋचं सामेत्यस्य चतुर्थत्वम्। आहुतिस्तु संवेशोपवेशाय गायत्र्यै छन्दसे अभिभूतये स्वाहा। गायत्र्या इदमिति प्रातःसंवेशोपवेशाय त्रिष्टुभे छन्दसे अभिभूतये स्वाहा। त्रिष्टुभ इदमिति माध्यंदिने। संवेशोपवेशाय जगत्यै छन्दसेऽभिभूतये स्वाहा जगत्या इदम् इति तृतीयसवने ॥४॥

---

4. My B[1-2] M[1]M[3] °देवता for देवत्या

9. My तृतीय° for तृतीये

10. B[1] after °सोमे adds : तु

15. M[1] °प्राप्तविकेन, My °प्राप्तवितेन for °प्राप्तविवेकेन

16. M[1] चतुर्थम् B[1] चतुर्थकम्, M[3] चतुर्थीत्वम् for चतुर्थत्वम्

## कयाशुभीये मरुत्वतीयस्य निविदो दध्यात् ॥५॥

इति । कयाशुभा-शब्दो यस्मिन् सूक्तेऽस्तीति तत् कयाशुभीयम् । मतौ छः सूक्तसाम्नोर् (पा० सू० ५.२.५९) इति छः प्रत्ययः । कया शुभा सवयसः सनीळा (ऋ० वे० १.१६५.१) इति सूक्ते कयाशुभीयसंज्ञे इन्द्रो मरुत्वान् इति निविदः दध्यात् । क्षिपेदित्यर्थः । प्राकृतं सूक्तमुद्धरेत् ॥५॥

## सजनीये निष्केवल्यस्य ॥६॥

इति । सजन-शब्दो यस्मिन् सूक्ते अस्तीति सजनीयम् । यो जात एव प्रथम इति सूक्ते इन्द्रो देवः सोमं पिबत्विति निष्केवल्यस्य निविदः क्षिपेत् । प्राकृतमुद्धरेत् ॥६॥

## विहव्ये वैश्वदेवस्य ॥७॥

इति । ममाग्ने वर्च इति सूक्तं विहव्यं तस्मिन् विश्वेदेवाः सोमस्य मत्स्यन्तु इति निविदः क्षिपेत् । प्राकृतमुद्धरेत् ॥७॥

पक्षान्तरमाह—

## अपि वैतान्येव सूक्तानि पुरस्तान्निविद्धानानां शस्त्वा ॥८॥

इति । निविदः येषु सूक्तेषु धीयन्ते तानि निविद्धानानि । प्राकृतानां निविद्धानसूक्तानां पुरत एतानि पूर्वोक्तानि कयाशुभीयादीनि शस्त्वा ॥८॥

---

9. M[3] निष्कैवल्यस्य for निष्केवल्यस्य

15. P. वा for च; M[3]B[2] वैश्वजितानि for वैतानि

16. B[2]M[3] before शस्त्वा add स

17. M[1]M[3]B[1] एषु for येषु, B[1] मधीयन्ते, M[1] धीयते for धीयन्ते

19. B[1] Om. शस्त्वा

**अथ यथायतनमेव निविदो दध्यात् ॥९॥**

इति । प्राकृतेष्वेव सूक्तेषु यथास्थानं निविदः शंसेदित्यर्थः ॥९॥

**तस्य संपत् । यथा ज्योगामयाविनो रथन्तरे ॥१०॥**

इति । तत्रैव व्याख्यातम् । क्लृप्तिः स्पष्टा ॥

अत्राश्वलायनः—कयाशुभेति च मरुत्वतीये पुरस्तात् सूक्तस्य शंसेद्यो जात एवेति निष्केवल्ये ममाग्ने वर्च इति वैश्वदेवसूक्तस्यापि नैतेष्वेव निविदो दध्यादुद्धरेदितराणी-(आ० श्रौ० ६. ६. १४–१७)ति । अहर्गणेष्वेकस्मिन्नेवाहनीदं संसवप्रायश्चित्तम् । तदुक्तं निदाने—ऋत्वादावेवेत्यौद्गाहमानिस्तच्छ्रायन्तीयेनैव व्याख्यात-(उ०ग्र०सू० १.१३)मिति । षष्ठेऽहनि संसवज्ञानं चेत् ज्योतिर्यज्ञस्येत्येव तृचं वृषण्वन्तं प्रतिपदं कुर्यात् । न त्वार्भवे अचिक्रदद्वृषा हरिर् इति । तदुक्तं निदाने—अथ षष्ठेऽहनि प्रतिपदमेव वृषण्वती कुर्यात् । असंचाराय विकल्पो ह्येवैष भवति । प्रतिपद् वा वृषण्वती कुर्यात् । सवनमुखेषु च (उ० ग्र० सू० १.१३) इति । सवनमुखेषु वेतीति ब्राह्मणे प्रातःसवने सवनत्रयेऽपि वा वृषण्वत्यः कार्या इति विकल्पितत्वात्

---

1. B[1]My Om. यथा

6. B[1]M अथ for अत्र ; B[1] शुमीयेति for शुभेति च

7. M[3] निष्कैवल्ये for निष्केवल्ये

10. M[1] एकदा वा for ऋत्वादौ

12. M[3] तृचा for तृचं

13. B[2] ननु ; B[1] न च for न तु

14. M[3] असंचाराय.........कुर्यात् (L. 15)

15. B[1] °पद्वा for पदं वा

16. My Om. इति after वेति

17. B[1] after सवने ins. अपि ; B[1]M[1]B[3] कल्पितत्वात् for विकल्पितत्वात्

निदानकारेण व्यवस्था कृता । षष्ठेऽहनि प्रातःसवन एव वृषण्वत्यः । अन्येषु यज्ञेषु सवनत्रयेऽपीति । अत्र शत्रुयज्ञसंस्थापेक्षया सत्रयज्ञस्योत्तरोत्तरसंस्थाकरणं तैत्तिरीयादिशाखान्तरेष्वाम्नातम् । तस्यास्मद्ब्राह्मणे उद्भाव्य दूषितत्वात् विहितप्रतिषिद्धस्य उदितानुदिताहोमवत् विकल्प इति सिद्धे पूर्वैर्वृद्धैरेवं व्यवस्था कृता । पुनानः सोमेति पुरोजितीति येषु यज्ञेषु बृहत्यनुष्टुभः तेष्वेवं वृषण्वत्यादिप्रतिपत्कं तौरश्रवसरथन्तरबृहदादिसोमोपेतं संसवप्रायश्चित्तं कार्यम् । अन्यत्रोत्तरोत्तरसंस्थाकरणमिति । यत्तु अन्यासु बृहत्यनुष्टुप्स्वपि वैरूपादिपृष्ठवदहःस्वपि तौरश्रवसादिकमूह्यम् । बृहदेव पृष्ठं कार्यमिति तदुपग्रन्थसूत्रानभिज्ञस्य वेदपौरुषेयत्ववादिनो विजृम्भितम् ॥१०॥

[ सोमापहारप्रायश्चित्तम् ]

अथ सोमापहारप्रायश्चित्तम् । यदि सोममक्रीतमपहरेयुर् (तां० ब्रा० ९.५.१) इत्यनुवाकोक्तस्य क्लृप्तिमाह—

**सोमेऽपहृते आयन्तीयं ब्रह्मसाम । वयमु त्वामपूर्व्ये-(सा० ७०८-९)ति कालेयम् । पुरोजिती वो अन्धस (सा० ६९७-९) इति श्यावश्वमान्धीगवमौद्लम् । त एकर्च्चाः । यज्ञायज्ञीयं तिसृषु । यज्ञायज्ञीयस्यर्च्चु वारवन्तीयमग्निष्टोमसाम । पञ्च दक्षिणाः । समानमितरं ज्योतिष्टोमेन ॥११॥**

इति । क्लृप्तिश्च स्पष्टा ॥११॥

---

2. M[1] Om. इति

3. B[1] °उक्त° for उत्तरोत्तर

4. B[2]M[3] अस्मिन् for अस्मद्

13. B[1] सोमः क्रीत उप° for सोममक्रीतमप°

**तस्य संपद्यथा यज्ञविभ्रष्टे ॥१२॥**

इति । तत्रैव व्याख्यातम् । अवभृथादुदेत्य पुनर्दीक्षेत । तत्र तद् दद्यात् यद् दास्यन् स्यादिति । पुनर्यज्ञस्य विहितत्वात् स यज्ञो यथाप्रकृत्येव कार्यः ॥१२॥

इति प्रथमे प्रपाठके अष्टमः खण्डः ॥८॥

---

## नवमः खण्डः

### [ कलशदारणप्रायश्चित्तम् ]

अथ कलशदारणप्रायश्चित्तम् । यदि कलशो दीर्येते-(तां० ब्रा० ९. ६. १ )त्यनुवाके वषट्कारणिधनं ब्रह्मसाम विधाय तद्विनिन्द्य आयन्तीयस्य विधानात् विहितप्रतिषिद्धस्य विकल्प इति न्यायात् पक्षद्वयेन तत्प्रायश्चित्तमाह—

**कलशे दीर्णे ॥१॥**

इति । कलशो द्रोणकलशः । इदं प्रायश्चित्तं दीर्णे कलशे भुवि सोमे सिक्ते । न तु सेचनमात्रे वा दरणमात्रे वा । तदुक्तं निदाने—तद्यत्रैव कलशो दीर्येत तदिदं प्रायश्चित्तकृत्यम् । नैवादीर्णे सिच्यमाने नैव वासिक्ते दीर्णे (उ०ग्र० सू० २.३) इति ॥१॥

**सम्मिते द्वे सवने पूर्वेण ॥२॥**

इति । सोमापहारयज्ञवत् प्रातःसवनमाध्यंदिनयोः क्लृप्तिः ॥२॥

तृतीयसवने विशेषमाह—

**स सुन्वे यो वसूनाम् (सा० १०९६-७) उप शिक्षाप तस्थुष ( सा० ७६१-३ ) इति सफपौष्कले । त्वं द्यां च महिव्रते-(सा० १०१८)**

---

4. My °प्रकृत्यैव for °प्रकृत्येव

10. B[1] कल्पति for विकल्प इति

स्यावर्त्यं तृचम्। श्यावाश्वमेकस्याम्। अन्धीगवमेकस्याम्। वषट्कारणिधनमेकस्याम्। पुरोजिती वो अन्धस (सा० ६९७-९) इति यज्ञायज्ञीयं तिसृषु। अनुष्टुप् प्रथमा। गायत्र्या-वुत्तरे। यज्ञायज्ञीयस्यर्क्षु वारवन्तीयमग्निष्टोमसाम। समानमितरं ज्योतिष्टोमेन ॥३॥

इति। स्पष्टम्। क्लृप्तिश्च ॥३॥

तस्य संपत्। विंशतिरक्षराणि वषट्कारणिधनादतिरिच्यन्ते। तावदुष्णिक्ककुब्भ्यां च यज्ञायज्ञीयाच्च लुप्यते। तत्संपन्नम् ॥४॥

इति। वषट्कारणिधनस्य अनुष्टुबपेक्षया प्रथमपादाभ्यासेन अष्टावक्षराणि द्वितीयतृतीयचतुर्थेषु पादेषु चत्वारि चत्वार्यक्षराणि। आहत्य विंशतिरक्षराणि। उष्णिक्ककुब्भ्यां द्वे द्वे अक्षरे। यज्ञायज्ञीयस्य गात्र्युत्तरेण स्तुतत्वादुत्तरयोः स्तोत्रीययोरनुष्टुबपेक्षयैकैकस्याष्टावक्षराणि। आहत्य विंशतिरक्षराणि न्यूनानि। तेन संपदुपपन्ना ॥४॥

पक्षान्तरमाह—

अथातो वषट्कारणिधनब्रह्मसामा आयन्तीयानुष्टुप्कः ॥५॥

इति। एतादृशो यज्ञ इत्यर्थः ॥५॥

विधुं दद्राणं सवने बहूनाम् (सा० १७८२) इति वषट्कारणिधनं ब्रह्मसाम। एष ब्रह्मा

13. M[3] विंशत्यक्षराणि for विंशतिरक्षराणि

18. My M[3] °साम for °सामा

य ऋत्विय (सा० १७८२-४) इति कालेयम् । परि प्र धन्वे-(सा० १३६७-६)ति सफम् । त्वं द्यां च महिव्रते-(सा० १०१८)त्यावर्त्यं तृचम् । श्यावाश्वमेकस्याम् । आन्धीगवमेकस्याम् । आयन्तीयमेकस्याम् । पुरोजिती वो अन्धस (सा० ६९७-९) इति यज्ञायज्ञीयं तिसृषु । सर्वास्वनुष्टुप्सु यज्ञायज्ञीस्यर्क्षु वारवन्तीयमग्निष्टोमसाम । समानमितरं ज्योतिष्टोमेन ॥६॥

इति । पूर्वस्मिन् पक्षे यज्ञायज्ञीयस्य गायत्र्युत्तरत्वात् तन्निवृत्त्यर्थं सर्वास्वनुष्टुप्सु इति वचनम् । स्पष्टमन्यत् । क्लृप्तिश्च ॥६॥

तस्य संपत् । सप्तदश विंशत्यक्षराणि वषट्कारणिधनादतिरिच्यन्ते । तावत् कालेयाल्लुप्यते । तत्संपन्नम् । अष्टावक्षराणि आयन्तीयादतिरिच्यन्ते । तावत् सफाल्लुप्यते । तत् संपन्नम् ॥७॥

इति । वषट्कारणिधने विधुं दद्राणम् (सा० १७८२) इत्यस्य त्रिष्टुप्त्वात् बृहत्यपेक्षया प्रकृत्याष्टाक्षराणि । प्रथमतृतीययोः पादयोः पञ्चपञ्चाक्षराणि । द्वितीयचतुर्थयोरेकैकम् । आहत्य विंशति-

3. B[2] आवर्त्यं for आवर्त्यं

4. M[1] Om. आन्धीगवमेकस्याम्

11. M[3] वचः for वचनम्

14. M[3] अष्ट for अष्टौ

18. B[1] °कृत्यष्टा° for °कृत्याष्टा°; My बृहत्यष्टाक्षराणि for बृहत्यपेक्षया प्रकृत्याष्टाक्षराणि

रक्षराणि । आहत्य सप्तदशानां स्तोत्रीयाणां चत्वारिंशदधिकत्रिशताक्षराणि अतिरिक्तानि । कालेयस्य द्विपदाछन्दस्त्वात् एकैकस्य स्तोत्रीयस्य बृहत्यपेक्षया विंशतिरक्षराणि । आहत्य सप्तदशानां स्तोत्रीयाणां चत्वारिंशदधिकत्रिशताक्षराणि न्यूनानि । श्रायन्तीयस्य उत्तमपादाभ्यासेन पङ्क्त्या स्तुतत्वादनुष्टुबपेक्षयाष्टाक्षराण्यतिरिक्तानि । सफस्याक्षरपङ्क्त्या स्तुतत्वात् ककुबपेक्षया अष्टाक्षराणि न्यूनानि । तेन संपदुपपन्ना ॥७॥

इति प्रथमे प्रपाठके नवमः खण्डः ॥९॥

---

दशमः खण्डः

[ सोमातिरेकप्रायश्चित्तम् ]

अथ सोमातिरेकप्रायश्चित्तम् । यदि प्रातःसवनात्सोमोऽतिरिच्येते-( तां० ब्रा० ९. ७. १ )त्यादि-वीर्य एव यज्ञे प्रतितिष्ठती(तां० ब्रा० ९. ७. ५)त्यन्त-ब्राह्मणोक्तस्य क्लृप्तिमाह—

**प्रातःसवनात् सोमेऽतिरिक्ते-ऽस्ति सोमो अयं सुत (सा० १७८५-७) इति मरुत्वतीषु गायत्रेण स्तुयुः पञ्चमेनाज्येन । त्रिवृत्पञ्चदशे पृष्ठानां ब्रह्मसामाच्छावाकसामनी स्याताम् । समानमितरं ज्योतिष्टोमेन ॥१॥**

इति । स्पष्टम् । क्लृप्तिश्च । पृष्ठेषु ब्रह्मणस्त्रिवृत्स्तोमः । अच्छावाकस्य पञ्चदश इत्यर्थः ॥१॥

---

1. My Om. आहत्य सप्तदशानां ; $M^3$ Om. आहत्य

2. $B^1M^1$ Om. अतिरिक्तानि·········त्रिशताक्षराणि (L. 4).

14. $B^2M^3$ सोमातिरेको for सोमेऽतिरिक्ते

19. My Om. स्पष्टम् । क्लृप्तिश्च ।

तस्य संपत् । पञ्चदश गायत्र्यः प्रातःसवनादतिरिच्यन्ते । तावत् पृष्ठानां ब्रह्मसामाच्छावाकसामभ्यां लुप्यते । तत् संपन्नम् ॥२॥

इति । पञ्चदशानां गायत्रीणामतिरिक्तस्तोत्रगानां षष्ठ्युत्तरत्रिशताक्षराण्यधिकानि । पृष्ठे ब्रह्मसामाच्छावाकसाम्नोर्दश बृहतीषु षष्ट्युत्तरत्रिशताक्षराणि न्यूनानि । तेन संपत्सिद्धिः । तदुक्तं निदाने—अतिरेके प्रातःसवनात् पञ्चदश गायत्र्यः । तत् पृष्ठानां ब्रह्मसामाच्छावाकसाम्नोर् ( उ० ग्र० सू० १. ५ ) इति ॥२॥

माध्यंदिने सोमातिरेकप्रायश्चित्तमाह—

माध्यंदिनात्सवनादतिरिक्ते बण्महाँ असि सूर्ये-(सा० १७८८-९)त्यादित्यवतीषु गौरीवितेन स्तुयुः । पञ्चमेन पृष्ठेन त्रिवृत्तृतीयसवनं कुर्युः । तस्य कल्पः । परि प्र धन्वे-(सा० १३६७-९)ति सफम् । पर्यूष्वि- ( सा० १३६४ - ६ )ति श्यावाश्वम् । पवस्व सोम महान्त्समुद्र (सा० १२४१-३) इत्यान्धीगवम् । समानमितरं ज्योतिष्टोमेन ॥३॥

इति । स्पष्टम् ॥३॥

---

2. My पृष्ठे for पृष्ठानां
4. B[2] गायत्राणाम् for गायत्रीणाम
6. B[1-2] My M[3] Om. °क्षि°
7. B[2] My °रेके for °रेक°

**तस्य संपत् । सप्तदश बृहत्यो माध्यंदिनात् सवनादतिरिच्यन्ते । तावत्तृतीयसवनाल्लुप्यते । तत् संपन्नम् ॥४॥**

इति । गौरीविते सप्तदशानां बृहतीनां द्वादशाधिकषट्शताक्षराण्यधिकानि । आर्भवे गायत्रसंहितयोः षण्णवत्यक्षराणि । सफस्याक्षरपङ्क्तित्वादष्टौ । श्यावाश्वे चतुःषष्टिः । आन्धीगवस्याक्षरपङ्क्तित्वात् प्राकृतानुष्टुप्तृचापेक्षयाषट्सप्ततिः । यज्ञायज्ञीये आद्यायाश्चतुश्चत्वारिंशं शतम् । उत्तरयोश्चतुर्विंशत्यधिकद्विशताक्षराणि । आहत्य द्वादशाधिकषट्शताक्षराणि न्यूनानि । तेन संपदुपपन्ना । तदुक्तं निदाने—माध्यंदिनात् सप्तदश बृहत्यस्तद्गायत्रसंहितसफश्यावाश्वान्धीगवयज्ञायज्ञीयेभ्यस्तस्यानुव्याख्याताः चतस्रः प्रकृत्या बृहत्यस्तद्गायत्र्योऽनुष्टुभश्चाष्टौ ककुभोऽष्टाक्षरञ्च काकुभमानुष्टुभञ्च द्वादशाक्षरमनुष्टुब्भ्यां ककुभः सिद्धा (उ० ग्र० सू० १.५) इति ॥४॥

तृतीयसवनात् सोमातिरेकप्रायश्चित्तमाह—

**तृतीयसवनादतिरिक्ते विष्णोः शिपिविष्टवतीषु गौरीवितेन स्तुयुर्द्वितीयेनाग्निष्टोमसाम्ना ॥५॥**

इति । किमित्ते विष्णविति तृच इत्यर्थः ॥५॥

---

7. B[1]M[1] प्राकृतात् अनु° for प्राकृतानु°

10. B[1]M[1] माध्यन्दिनपवमानात् for माध्यन्दिनात्

12. B[1]M[1] बृहत्यास् for बृहत्यस् ; B[1] Om. चाष्टौ ककुभः

13. B[1] before अनुष्टुभ्यां ins. ककुभः

तत्रैव पक्षान्तरमाह—

**एतदन्यत् कुर्युरुक्थान्यन्यत् प्रणयेयुः ॥६॥**

इति। अत्र पक्षान्तरद्योतको यदि-शब्दोऽध्याहर्तव्यः। एतद् उक्तं प्रायश्चित्तम्। अन्यत् प्रायश्चित्तान्तरं यदि कुर्युस्तदा तृतीय-सवनादतिरिक्तेन सोमेन अग्निष्टोमाद् अन्यत् संस्थान्तरम्। उक्थानि कुर्युरित्यर्थः ॥६॥

**उक्थेभ्योऽतिरिक्तेऽतिरात्रः कार्यः ॥७॥**

इति। उक्थ्यसंज्ञाद्यज्ञादित्यर्थः ॥७॥

**रात्रेरतिरिक्ते विष्णोः शिपिविष्टवतीषु बृहता स्तुयुस्त्रिवृता स्तोमेनोपरिष्टात् संधेः ॥८॥**

इति। रात्रेः अतिरात्रसंज्ञाद्यज्ञादित्यर्थः। अत्रेयं व्यवस्था। अग्निष्टोमोक्थ्यषोडश्यतिरात्राप्तोर्यामा एकसंस्थत्वेन यत्र विहिताः तत्र तृतीयसवने सोमातिरेके तत्प्रायश्चित्तार्थमेकस्तोत्र-मेवाधिकं कुर्यान्नोक्थ्यादिसंस्थान्तरम्। तत्र चतुर्विंशपरः सामादिषु विकल्पेन द्विसंस्थत्वं तत्रापि संस्थान्तरं वा एकस्तोत्रं वेति विकल्प इत्येष एव आपस्तम्बादिवचनानामभिप्रायः। अविरोधा-दत्र सर्वत्र सोमातिरेकात् पूर्वं यत् स्तोमयुक्तं स्तोत्रं तत् स्तोमयुक्तं नैमित्तिकस्तोत्रं कार्यम्। तदुक्तं निदाने—स खलु नाविद्यमानां

---

1. M[1] अत्र for तत्र
5. B[1] after सोमेन adds सह; M[3] स्तोमेन, M[1] साम्ने for सोमेन
7. P रात्रिः कार्या for अतिरात्रः कार्यः
12 M[3] after संस्थ° gap upto विकल्पेन (L. 15)
15. B[1] M[3] Om. अपि
16. B[1]My Om. एष एव
17. M[3] after सोमा° gap upto खलु (L. 18); B[2] Om. स्तोत्रं तत् स्तोमयुक्तं
18. B[1]M[1]My[3] Om. ना°

संख्यां प्रणयेत्। तस्य तस्य क्रतोः ज्योतिष्टोमं त्वधिकृत्य प्रायश्चित्तान्याम्नायन्ते। तस्मादत्र ज्योतिष्टोमीः संस्थानुक्रामतीति द्विसंस्थस्य चेत् क्रतोः प्रकृतौ पूर्वस्याः संस्थायाः अतिरिच्येत द्वितीयां वा संस्थां प्रणयेदेकस्तोत्रं वोपदध्या(उ० ग्र० सू० २.३)दिति। उक्थ्यातिरेकः पूर्वमकृतं चेत् गौरीवितं शिपिविष्टवतीषु चतुर्थमुक्थ्यं गौरीवितं कुर्युः। कृतं चेत् अच्छावाकसामसजातीयं शिपिविष्टवतीषु तदेव गेयम्। अत्र साजात्यम्। निधनगीत्यादिभिः अनुरूपाग्निष्टोमसाम द्वादशाहवत्। षोडशिन्यतिरेके अकृतं चेत् गौरीवितं शिपिविष्टवतीषु गौरीवितं कृतं चेत् षोडशि सामजातीयं शिपिविष्टवतीषु। वाजपेयेऽतिरेके अन्यासु शिपिविष्टवतीषु त्रिष्टुप्सु कण्वबृहद्वा बृहन्निधनवार्कजम्भं वा। यदि त्रिष्टुभो न स्युरन्यच्छन्दस्कासु शिपिविष्टवतीषु कण्वबृहत् बृहन्निधनवार्कजम्भं वा। यदि शिपिविष्टवत्यो न स्युः वैष्णवीषु यत्किंचिच्छन्दस्कासु बृहन्निधनवार्कजम्भं कण्वबृहद्वा। अतिरात्रे बृहत्संधिषामण्यतिरेके शिपिविष्टवतीषु रथन्तरं द्वितीयम्। संधिषामरथन्तरवामदेव्यश्रुध्यवारवन्तीयेषु बृहदेव। अप्तोर्यामे तु शिपिविष्टवतीषु गौरीवितम्। तदुक्तं निदाने—तच्चेदुक्थ्यसंस्थादतिरिच्येत विष्णोः गौरीवितं शिपिविष्टवतीषु चतुर्थमुक्थं कुर्यात्। अकृतं चेत् अहःकल्पे स्यात्। अथ चेत् कृतमच्छावाकसामजातीयमेव शिपिविष्टवतीषु कुर्यात्।

---

1. M[1] च for तु

3. B[2] पूर्वस्य for पूर्वस्याः

4. B[4] Om. वा after द्वितीयां

5. M[1] उक्थ्यादतिरेकत्वे for उक्थ्यातिरेकः ; B[2] पूर्वं कृतं for पूर्वमकृतं

10. M[1] षोडशी for षोडशि

12. B[2] त्रिष्टुभे for त्रिष्टुभो

17. B[2] Om. तु ; My Om. शिपिविष्टुवतीषु

19. M[1] कृतं for अकृतं ; B[2]M[3] Om. अथ चेत्………अहःकल्पे स्यात् (P. 84, L. 2)

अथ षोडशिनि गौरीवितमेव शिपिविष्टवतीषु द्वितीयं षोडशिसाम कुर्यात् । अकृतं चेदहःकल्पे स्यात् । अथ चेत् कृतं षोडशिसामजातीयमेव शिपिविष्टवतीषु कुर्यात् । अथ वाजपेये कृतमेव गौरीवितं भवति । कृताः शिपिविष्टवत्यः । ताश्चेदन्याः शिपिविष्टवत्यः त्रिष्टुभोऽधिगम्येरन् । एतासु बृहन्निधनवार्कजम्भं कुर्यात् । कण्वबृहद्वा यद्यु वै न त्रिष्टुभोऽप्यन्यच्छन्दस्यास्वेव यद्यु वै न शिपिविष्टवत्योऽपि वैष्णव्यः । एषा ह्यवात्र दैवता प्रयुज्यते । तथा चेत् बृहत्संधिषाम्णोरतिरात्रादतिरिच्येत । रथन्तरं शिपिविष्टवतीषु द्वितीयं संधिषाम कुर्यात् । द्वितीयं संधिषाम क्रियमाणं किमन्यद्रथन्तरादेव प्रतीयाद् । अथाप्तोर्याम्णि गौरीवितं शिपिविष्टवतीषु कुर्यात् । सिद्धो हि तिरोरात्रिणस्योपसंचारः उपसंचार (उ० ग्र० सू० २.४) इति ॥८॥

इति प्रथमे प्रपाठके दशमः खण्डः ॥१०॥

---

## एकादशः खण्डः

### [ दीक्षितान्यतममरणप्रायश्चित्तम् ]

अथ सत्रिणामन्यतममरणे आश्वालायनापस्तम्बनिदानसूत्राद्यनुसारेण प्रायश्चित्तं लिख्यते । यदि दीक्षितानां प्रमीयेते-(तां० ब्रा० ९.८.१)त्यनुवाकोक्तप्रायश्चित्तस्य क्लृप्तिमाह—

---

1. B[1] after गौरीवित gap upto द्वितीयं
5. B[1]M[1] तत् for ताः
7. My M[1] नः for न
8. B[1–2] °षामोक्ताद् for °षम्णोर्
10. B[2] क्रियमाणे for क्रियमाणं
12. B[2]M[1] Om. one उपसंचारः

**यदि दीक्षितानां प्रमीयेत तं दग्ध्वास्थीन्युपनह्य यो नेदिष्ठी स्यात् तं दीक्षयित्वा सह यजेरन् ॥१॥**

इति। सत्रे एकस्य मृतौ तस्यानाहिताग्नित्वे तमाप्नानतीर्थादन्येन मार्गेण वेदेर्निर्हृत्य लौकिकाग्निना दहेयुः। आहिताग्नित्वे तु मृतमाप्नानतीर्थेन निर्हृत्य लौकिकारणीभ्यां दक्षिणाग्नेर्निर्हृतोल्मूकेन वा दहेयुः। अस्थीनि कृष्णाजिने बध्वा मृतस्य पुत्रेषु ज्ञातिं वान्यतमं दीक्षाभिः संस्कृत्य तेन सह यजेरन् ॥

अत्रापस्तम्बः—अहर्गणेष्वाहरदहेत्युक्त्वा दक्षिणाग्नेरग्निमाहृत्य निर्मन्थ्येन वा दग्ध्वा दक्षिणेन मार्जालीये मृतस्य दहनम्। तुष्णीमहः परिसमाप्य पत्नीसंयाजान्त (आप० श्रौ० १४. २२. ११-१२) इति। अत्राश्वलायनः—अग्नीनस्य समारोप्य दक्षिणतो बर्हिर्वेदि दहेयुः। आहार्येणानाहिताग्निं पत्नीं च प्रत्येत्याहः समापयेयुर् (आ० श्रौ० ६. १०. ८-११) इति। अत्र हिरण्यकेशिनः—अहर्गणे त्वाहरदहेत्युक्त्वा दक्षिणाग्नेरङ्गारं निर्वर्त्य निर्मन्थ्येन वा दहेयुः। दक्षिणस्यां वेदिश्रोण्यामस्थिकुम्भं निदधाति (हि० श्रौ० १५. ५. ३२-३३) इति। अत्र विखनाः—दक्षिणाग्नेरङ्गारान् निर्वर्त्य तेन निर्मन्थ्येन वा

---

1. PM[3]M[1]B[1] Om. तं

2. M[1] नेदिष्ठः for नेदिष्ठी

8. B[1] अन्तकज्ञातिं for मृतस्य पुत्रेषु ज्ञातिं ; M[3] वा तस्य for मृतस्य

11. M[1] निर्मथ्येन for निर्मन्थ्येन ; B[1] दक्षिणाग्नेर् for दक्षिणेन

16. B[1] त्वाहरद् for त्वाहरेद्

19. M[1] विषनाः, M[3]B[2] निखनः, B[1] विहनाः for विखनाः ; B[1] निर्वपेत् for निर्वर्त्य

दहेयुः (वै० श्रौ० २१. ७ : ११-१२) इति। नेदिष्ठिनि सति निर्मन्थ्येन तूष्णीं मृतं दग्ध्वा अस्थीनि कृष्णाजिने उपनह्य नेदिष्ठिनं दीक्षयित्वा तेन सह अविकारेण सुत्याहानि कुर्युः ॥१॥

नेदिष्ठिसद्भावे एतत्प्रायश्चित्तम्। नेदिष्ठ्यभावे प्रायश्चित्तान्तरमाह—

एतदन्यत् कुर्युः ॥२॥

इति। एतत् पूर्वोक्तं प्रायश्चित्तम्। अन्यत् वक्ष्यमाणं प्रायश्चित्तान्तरमित्यर्थः ॥२॥

अभिषुत्यान्यत् सोमम् ॥३॥

इति। लिङ्गव्यत्ययश्छान्दसः। अन्यं सोमम् इत्यर्थः। अत्रान्यसोमाहरणं नैमित्तिकास्थियज्ञाग्निष्टोमकरणपक्षे। न तु यथाप्राप्तस्याह्नः करणे ॥३॥

क्रमप्राप्तस्यैवाह्नः प्रयोगमाह—

हुतयोरुपांश्वन्तर्यामयोरगृहीतेष्वितरेषु ग्रहेषु पूर्वया द्वारोपनिष्क्रम्योत्तरेण मार्जालीयं दक्षिणामुखा आसीना यामेन स्तुवीरन्। सर्पराज्ञीषु-अग्निमीडे पुरोहितम् (सा० ६०५) इति यस्य योनिस्त्रिकेण स्तोमेन। न स्तोमं युनक्ति। न यजमानं वाचयति। ता ऋचोऽनुब्रुवन्तस्त्रिः प्रसव्यं मार्जालीयं

10. $B^2M^3$ (अ) न्यत्° for (अ) न्य°

14. $B^2$ गृहीतेषु for अगृहीतेषु

18. $M^3B^2$ Om. न

परीयुः । सव्यानूरून् आघ्नानाः पुनस्त्रिः प्रदक्षिणं परीत्यासंस्पृशन्तोऽनवेक्षमाणाः प्रत्याव्रज्याप उपस्पृश्यैन्द्रवायवाग्रान् ग्रहान गृह्णीरन् ॥४॥

इति । स्पष्टम् ॥४॥

अग्न आयूँषि पवसे (सा० १५१८) इति तस्याह्नः प्रतिपत् स्यात् ॥५॥

इति । अग्न आयूंषीति तृचं प्रतिपदं कुर्यात् । दवि-पवेत्युत्तरौ । अत्र सूत्रम्—तृचसूक्तानामादिग्रहणेन विधिरनादेशः (आ० श्रौ० ६.३.१) इति ॥५॥

समानमितरं तेन ॥६॥

इति । अहर्गणे यस्मिन्नहनि मृतः तेनाह्नेतरत् सर्वं समानमित्यर्थः । पूर्वाध्याये प्रातिपदेषु दीक्षिते मृते अग्न आयूंषि पवसे इति प्रतिपदम्(क्षु० क० १. १. १०)इत्यारभ्य समानमितरत् ज्योतिष्टोमेने-(क्षु० क० १. १. १२ )त्यन्तेनोक्त्वा तत् सर्वं व्यूढाव्यूढाहादिकं दृष्ट्वा कर्तव्यम् । नेदिष्ठ्यभाव एव ॥६॥

पक्षान्तरमाह—

संवत्सरे ॥७॥

इति । अतीत इति शेषः । तदुक्तमाश्वलायनेन—निर्मन्थ्येन वा दग्ध्वा निखाय संवत्सरादेनमग्निष्टोमेन याजयेयुरिति ॥७॥

---

2. P प्रतिपरीत्य for परीत्य ; P अनपेक्ष° for अनवेक्ष°

9. M[3] सूक्तादि for सूक्तानामादि

20. B[1] Om. वा ; M[3] after °ष्टोमेन adds वा

**अस्थीनि याजयन्ते ॥८॥**

इति । याजयेयुरित्यर्थः । ब्राह्मणे तथोक्तत्वात् लटोऽपि विध्यर्थत्वदर्शनात् तदादेशस्य शतुस्तदर्थकत्वम् । शरीरशरीरिणोरभेदात् अस्थ्नां यष्टृत्वम् ॥८॥

**असम्मितस्तोत्रो वा स्यात् ॥९॥**

इति । असंमितानि त्रिवृत ऊर्ध्वं दशयाद्यपरिमितानि स्तोत्राणि यस्मिन् स असंमितस्तोत्रः । क्रतुरित्यर्थः । तदुक्तं निदाने— ऊर्ध्वं वै त्रिवृतो याथाकामी स्तोमानां स्यादित्यपरमेवमेतत् सर्वमाराध्यत इत्युपपद्यते च । ज्यायस्त्वं च कनीयस्त्वं च स्तोमानामभिप्रेत्यासंमितं ब्रूयात् । तत्र त्रिवृतःस्थाने दशिप्रभृतीनां याथाकामी स्यात् । षोडशप्रभृतीनां पञ्चदशस्याष्टादशप्रभृतीनां सप्तदशस्य द्वाविंशप्रभृतीनामेकविंशस्येति (उ०ग्र०सू० २.५) इति । चतुर्विंशादर्वाक् स्तोमवृद्धिस्तस्मिन्नेवास्थियज्ञे ॥९॥

पक्षान्तरमाह—

**त्रिवृत्पवमानो वा सप्तदशावर्ती ॥१०॥**

इति । त्रिवृतः पवमाना यस्मिन्[सः] । सप्तदशस्तोमान्यावर्तिस्तोत्राणि यस्मिन् स तथोक्तः ॥१०॥

---

2. M[3]MyB[1-2] विध्यर्थ° for विध्यर्थत्व°

10. M[3] संमितं for असंमितं ; M[3] तत् त्रिवृत्स्थान° for तत्र त्रिवृतःस्थाने

11. M[1]M[3] °कामि for °कामी

12. M[1] त्रिचतुर् for इति । चतुर्

15. B[1-2] वर्तिर् for वर्ती

16. B[2] बहिष्पवमाना for पवमाना

17. M[3] Om. सः

तस्य क्लृप्तिमाह—

**तस्य त्रिवृत्पवमानस्यैष कल्पः ॥११॥**

इति । गतम् ॥११॥

माध्यंदिनस्य क्लृप्तिमाह—

**उच्चा ते जातमन्धस (सा० ६७२-४) इति गायत्रमेकस्याम् । आमहीयवमेकस्याम् । आभीकमेकस्याम् । पुनानः सोम धारये-(सा० ६७५-६)ति रौरवमेकस्याम् । यौधाजयमेकस्याम् । कालेयमेकस्याम् । आयन्तीयं ब्रह्मसाम । वैखानसमच्छावाकसाम ॥१२॥**

इति । स्पष्टम् ॥१२॥

**विपरिहरत्यैन्द्रवायवमैत्रावरुणौ ॥१३॥**

इति । एतस्यास्थियज्ञस्य मैत्रावरुणाग्रत्वम् । तत ऐन्द्रवायवग्रहणम् ॥१३॥

**समानमितरं ज्योतिष्टोमेन ॥१४॥**

इति । स्पष्टम् ॥१४॥

अस्य क्लृप्तिः—उप-द्वि-पवे-(सा० ६५१–६)ति बहिष्पवमानम् । आज्यानि प्रकृतिवत् । उच्चा त (सा० ६७२–४) इति गायत्रामहीयवाभीकानि सामतृचः । पुनानः सोमे-(६७५–७)ति

---

1. M[1]M[3]B[1-2] My Om. तस्य

9. M[3] बृहत् for ब्रह्म°

13. B[2]M[3] after अस्थि° trans. तत्तत् सामानुगुण्येन (P. 122, L. 5) उदात्तगीति° (P. 123, L 11) and इत्यर्थः (P. 120, L. 13) व्यतिहरेदिति गतम् । (P. 122, L. 5)

रौरवयौधाजयकालेयानि सामतृचः । औशनं तिसृषु । रथन्तरवामदेव्यश्रायन्तीयवैखानसानि पृष्ठानि । आर्भवे अन्त्यवर्जमेकर्च्चाः । यज्ञायज्ञीयमग्निष्टोमसाम ॥१४॥

**तस्य संपत् । अष्टौ गायत्र्यः प्रातःसवनादतिरिच्यन्ते । सप्तदशाष्टाक्षराणि श्रायन्तीयात् सप्तदशद्वादशाक्षराणि वैखानसात् तावदुत्तराभ्यां च पवमानाभ्यामग्निष्टोमसाम्नश्च लुप्यन्ते । तत् संपन्नम् । १५॥**

इति । आज्येभ्योऽष्टौ गायत्र्यः । तासां द्विनवत्यधिकशताक्षराणि । श्रायन्तीयस्य उत्तमपादाभ्यासेन त्रिष्टुप्त्वात् षट्त्रिंशं शतम् । वैखानसस्याद्यपादं विनान्येषु पादेषु चतुरक्षराधिक्येन जगतीत्वात् चतुरधिकद्विशतम् । आहत्य द्वात्रिंशानि पञ्चशतान्यक्षराण्यधिकानि । माध्यंदिने तिस्रो गायत्र्यो बृहत्यश्च । आर्भवे चतस्रो गायत्र्योऽनुष्टुभश्च । यज्ञायज्ञीये द्वे बृहत्यौ ककुभौ च लुप्ताः । आहत्य द्वात्रिंशानि पञ्चशतान्यक्षराणि न्यूनानि । तेन संपत्सिद्धिः । तदुक्तं निदाने—अष्टौ गायत्र्य आज्येभ्यः । श्रायन्तीयात् सप्तदशाष्टाक्षराणि । तावन्ति द्वादशाक्षराणि वैखानसात् । तस्यानुव्याख्यातम् । वैखानसेऽतिशेषेण बृहत्यः सिद्धाः । ककुभोश्च मध्यमौ पादौ

---

5. $M^3B^2$ Om. °अष्ट°

6. $B^{1-3}M^3M^1$My तद् for तावद्

7. $B^{1-2}M^3M^1$ °सामानि च for °साम्नश्च

13. $M^1$ मध्यं for माध्यं

17. $B^1$ आज्ये for आज्येभ्यः ; $B^1$ यज्ञायज्ञीयात् for श्रायन्तीयात्

18. $B^1M^1$ वैखानसाति° for वैखानसेऽति

आयन्तीयेनानुष्टुभोऽष्टाक्षरं च काकुभमाज्यशेषे (उ० ग्र० सू० १.५) इति। एतदुक्तं भवति। सत्रे गृहपतिं विना अन्येषां कस्यचिन्मृतौ नेदिष्ठिसद्भावे अनाहिताग्निं लौकिकाग्निना आहिताग्निं लौकिकारणीभ्यां दक्षिणाग्नेर्निर्हृताङ्गारेण वा दक्षिणवेदिश्रोण्यां मार्जालीये वा तूष्णीं दग्ध्वा कृष्णाजिनेऽस्थीन्युपनह्य निधाय तत्पुत्रं भ्रातरं वा ज्ञातिं वान्यं दीक्षणीयावर्जं वपनादिभिर्दीक्षयित्वा तेन सह प्रक्रान्तं सत्रं समाप्य मृतदिनादारभ्य वत्सरं गणयित्वा वर्षे पूर्णे अस्थीनि यजमानायतने निधाय ज्योतिष्टोमेन याजयेयुः। प्रक्रान्तसत्रे सैव मृतस्य पत्नी पत्नीकार्ये यजमानकार्ये नेदिष्ठी (!)। मृतस्यैवाग्नयः। न तु नेदिष्ठिनः। तस्य परार्थत्वात्। उदवसनीयानन्तरमस्थियज्ञात् प्राक् मृताग्नीन् प्रतिसंख्यम् उद्दीप्य मृतहोमन्यायेनाग्निहोत्रं कुर्युः। न तु नित्याग्निहोत्रम्। न दर्शपूर्णमासौ। जीवननिमित्तत्वात्। अग्निहोत्रदर्शपूर्णमासाग्रयणचातुर्मास्यपशुबन्धादीनां नेदिष्ठिनस्तु स्वगृहे प्रवासन्यायेनाग्निहोत्रादयः कार्या एव। प्रक्रान्तसत्रे चास्थियज्ञे च मृतस्यैव पित्रादीनां नामग्रहणं सुब्रह्मण्यायां कार्यम्। नेदिष्ठ्यभावेऽप्येवमेव। उदवसानीयदिनादारभ्य वर्षे पूर्णेऽस्थियाग इति विशेषः। यद्वा आपस्तम्बादिपक्षे सुत्यायामारब्धायां कस्यचिन्मृतौ तं दक्षिणाग्नेर्निर्हृतोल्मुकेन निर्मन्थ्येन वा पूर्वोक्तदेशे तूष्णीं दग्ध्वा प्रक्रान्तमहः समाप्य कुम्भेऽस्थीनि संभृत्य मार्जालीये निधायास्थि-

---

6. M[1]My °न्यस्य for °नह्य

7. B[2]M[3] पत्रना° for वपना°

9. M[1] प्रक्रान्ते for प्रक्रान्त°

12. B[1]M[1] My मृताग्निं for मृताग्नीन्

16. M[3] तस्य for मृतस्य

18. B[2] °नीयादिनारभ्य, M[3] °नीयादीनारभ्य for °नीयदिनादारभ्य

21. B[1-2] My संहृत्य for संभृत्य

यज्ञार्थमहीनसंततिं कृत्वा अन्यं सोममाहृत्य सोमविक्रयिणे किंचिद् दत्वा सांनिपातिकसोमसंस्कारं कृत्वाभिषुत्योपांश्वान्तर्यामौ हुत्वा सर्पराज्ञीभिर्यथाविधि स्तुत्वाग्रग्रहान् प्रगृह्य दश्याद्यसंमितस्तोत्रः अग्न आयूंषि (सा० १५१८–२०) इति प्रतिपत्को रथन्तरसामाग्निष्टोमः कार्यः। यद्वा। त्रिवृत्पवमानसप्तदशावर्तिस्तोत्रोऽग्निष्टोमः कार्यः। ततः पत्नीसंयाजान्ते मृताग्निं समारोप्य पुत्रादिभिरस्थीनि यथाविधि दाहयेयुः। अत्र वर्षान्तेऽस्थियज्ञो नास्त्येव। आश्वलायननिदानकारमताद्वा यो मृतः तदस्थीन्युपनह्य भूमौ निखाय प्रक्रान्तमहः समाप्य आपस्तम्बादिमतात्तदानीमेव सर्पराज्ञीभिर्यथाविधि स्तुयुः। यद्वा कल्पकारमतात् क्रमप्राप्तोत्तराह एव ग्रहग्रहणात् प्राक् सर्पराज्ञीभिः स्तुयुः। ततः कृत्स्नं सत्रं यथाप्रकृति उदवसानीयान्तं समाप्य तदहादारभ्य वत्सरं गणयित्वा पूर्णे वर्षे अस्थियज्ञं पूर्वोक्तपक्षद्वये अन्यतरं पक्षमाश्रित्य कुर्युः। ततः अस्थ्नां स्वैरग्निभिर्यथाविधि दहनं कार्यम्। नेदिष्ठ्यभावे यदा कस्यचिन्मृतौ उत्तरेद्युरेवास्थियज्ञाग्निष्टोमः क्रियते तदा द्राह्यायणाश्वलायनमतात् मरणानन्तरमेव मृतस्यारणीः समारोप्य मथित्वा तेन पितृमेधविधिना दहनम्। संस्थितेऽस्थियज्ञाग्निष्टोमे अवभृथं मृतास्थिकुम्भं गमयित्वा एतस्यै तदहरिति वदन्तः जले

1. $B^2$ अहोनः for अहीन°

3. $B^2M^3$ Om. (अ) ग्र ; $M^3B^1$ ग्रहात् for ग्रहान्

4. $B^{1-3}$ °स्तोतु: for °स्तोत्रः

5. $B^2M^3$ °मान: for °मान°

6. $M^1$ °वृत्ति° for °वर्ति°

8. $B^1$ च for वा

11. $B^2M^3$ Om. ग्रहु°

12. $B^1M^1$ Om. ततः

13. $M^3$. Om. वत्सरं गणयित्वा ; $B^1$ वर्षे पूर्णे for पूर्णे वर्षे

14. $M^3$ Om. ततः; $B^2$ अस्थिनां for अस्थ्नां

प्रक्षिप्य पुनर्देवयजनमागत्य यथाप्रकृति सत्रं समापयेयुः। जलेऽस्थित्यागपक्षे अग्नीनस्य समारोप्येति पक्षो नियतः। अत्र वर्षानन्तरमस्थियागो नास्त्येव। यदा संवत्सरानन्तरम् अस्थियज्ञाग्निष्टोमः क्रियते तदा निर्मन्थ्येन दक्षिणाग्न्युल्मुकेन वा दहनम्। सत्रान्तादारभ्य वर्षे पूर्णेऽस्थियज्ञः कार्यः। नेदिष्ठिसद्भावे तु अरणीसमारोपणं नास्ति। तूष्णीं निर्मन्थ्येन दहनम्। मृतदाहादारभ्य पूर्णे वर्षेऽस्थियागः। ततः अस्थ्नां स्वैरग्निभिर्यथाविधि दहनम्। गृहपतिमरणे तु अहःशेषं समाप्य तदैव सर्वेऽवभृथं कृत्वा स्वं स्वमग्निं समारोप्य गृहान् गच्छेयुः। अथवा गृहपतिमरणेऽपि न सत्रादुत्थानमन्येषाम्। अपि वोत्थानम्। गृहपताविति वैकल्पिकत्वात्। तदुक्तमाश्वलायनेन— संस्थितेतीर्थेन निर्हृत्यावभृथे प्रेतालंकारान् कुर्वन्ति। केशश्मश्रुलोमनखानि वापयन्ति। नलदेनानुलिम्पन्ति। नलदमालां प्रतिमुञ्चन्ति। निष्पुरीषमेके कृत्वा पृषदाज्यस्य पूरयन्ति। अहतस्य वाससः पाशतः पादमात्रमवच्छिद्य प्रोर्णुवन्ति प्रत्यग्दशेनाऽऽविःपादम्। अवच्छेदमस्य पुत्रा अमा कुर्वीरन्। अग्नीनस्य समारोप्य दक्षिणतो बहिर्वेदि दहेयुः। आहार्येणानाहिताग्निं पत्नीं च। प्रत्येत्याहः समापयेयुः। प्रातरनभ्यासमनभिहिंकृतानि शस्त्रानुवचनाभिष्टवनसंस्तवनानि। पुराग्रहग्रहणात् तीर्थेन निष्क्रम्य त्रिः प्रसव्य मायतनंपरीत्य पर्युपविशन्ति। पश्चाद्धोता। उत्तरोऽध्वर्युः।

---

10. B[1] Om. अथवा ··· वैकल्पिकत्वात् (L. 11)

12. B[1] तीर्थे for तीर्थेन

14. अहतेन वाससा for B[1] अहतस्य वाससः

15. M[1] प्रत्यादेशो विष्पादम् , B[1] प्रत्यग्देशेनाष्पोदम् for प्रत्यग्देशेनाविष्पादम्

16. M[1] अपच्छेदम् for अवच्छेदम् ; B[3] My आमा, B[1] अमं for अमा ; M[3] Om. अमा°

18. B₂ M[3] अभि° for अनभि°; M[3] अभ्यासं for अनभ्यासं

20. B[1] My Om. परीत्य···आयतनं (P. 94, L. 2)

तस्य पश्चाच्छन्दोगाः । आयं गौः पृश्निरक्रमीद् इत्युपांशु स्तुवते । स्तुते होता प्रसव्यमायतनं परिव्रजन् स्तोत्रीयमनुद्रवे-दप्रणुवन् । यामीश्च । प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति पञ्चानां तृतीयमुद्धरेत् । मैनमग्ने विदहो माभिशो च इति षट् । पूषा त्वेतश्च्यावयतु प्र विद्वानिति चतस्रः । उपसर्प मातरं भूमिमेतामिति चतस्रः । सोम एकेभ्यः । उरूणसा वसुतृपा उदुम्बलाविति च समाप्य संचित्य तीर्थेन प्रपाद्य यथासनमासा-दयेयुः । भक्षेषु प्राणभक्षान् भक्षयित्वा दक्षिणे मार्जालीये निनयेयुः । दक्षिणस्यां वा वेदिश्रोण्याम् । सप्तदशमहर्भवति । त्रिवृतः पवमाना रथन्तरपृष्ठोऽग्निष्टोमः । संस्थितेऽवभृथमेके गमयन्त्येतस्यैतदहरभिशब्दयन्तः । निर्मन्थ्येन वा दग्ध्वा निखाय संवत्सरादेनमग्निष्टोमेन याजयेयुः । नेदिष्ठिनं वा दीक्षयेयुः । अपि वोत्थानं गृहपतौ । उक्तः स्तुतशस्त्रविकारः । एकाहेषु यजमानासने शयीत । संस्थितेऽपायतीष्ववभृथं गमयेयुरित्यालेखनः । पूर्वेण सदो दहेयुरित्याश्मरथ्यः । एष एवावभृथः ( आ० श्रौ० ६. १०.१-३१) इति ॥

तथा चापस्तम्बः—यदि म्रियेत प्रागवभृथाद् अग्न्यवभृथं कुर्वीरन् । अवभृथं वा गमयित्वा प्रोक्ष्यैनमभ्युदाहृत्य स्वैरग्नि-भिर्यथालोकं दहेयुः । एतावदेकाहेऽहर्गणेष्वाहर दहेत्युक्त्वा दक्षिणाग्नेरग्निमाहृत्य निर्मन्थ्येन वा दग्ध्वा दक्षिणेन मार्जालीये

---

2. $M^3$ स्तुतेर् for स्तुते ; $B^2$ $M^3$ trans. स्तोत्रीयमनुद्रवदप्रणुवन् after एकेभ्यः (L. 6)

3. $M^3B^2$ Om. प्रेहि

6. $M^1$ °व(प?)सत्रपावुलम्बलाविति, $B^2$ $M^3$ वसुवलुम्बलाविति for वसुतृपा-दुलुम्बलाविति

8. $B^2$ $M^3$ प्रा° for प्राण°

14. $B^2$ वायतिषु, for °पायतीषु

19. $B^2M^1$ यथा लोके for यथालोकं; $B^1$ इहेयुः for दहेयुः

मृतस्य दहनम् । तुष्णीं तदहः परिसमाप्य पत्नीसंयाजान्ते कुम्भेऽस्थीनि संभृत्य मार्जालीये निदधाति । उद्गातारस्तिसृभिः सर्पराज्ञीभिरप्रतिहृताभिः स्तुवीरन् (आप० श्रौ० १४.२१.८–१३) । ऋत्विजो होतृप्रथमाः प्राचीनावीतिनो यामीरनुब्रुवन्तः सर्पराज्ञीनां कीर्तयन्तो दक्षिणान् केशपक्षानुद्ग्रथ्य सव्यान् प्रस्रस्य दक्षिणानूरूनाघ्नानाः सृग्भिभिरभिधून्वन्तः त्रिःप्रसव्यं परियन्ति । अप नः शोशुचदघमिति सव्यानुद्ग्रथ्य दक्षिणान् प्रस्रस्य सव्यानूरूनाघ्नाना अनभिधून्वन्तः त्रिः प्रतिपरियन्ति । अप नः शोशुचदघमिति ते यदोदञ्चः संपद्यन्ते । अथैभ्योऽध्वर्युर्दक्षिणतोऽश्मानं परिधिं दधाति । इमं जीवेभ्यः परिधिं दधामि । मा नोऽनुगादपरो अर्धमेतं शतं जीवन्तु शरदः पुरूचीस्तिरो मृत्युं दध्महे पर्वतेने-(आप० श्रौ० १४.२२.१-३)ति । अग्निष्टोमः सोम ऐन्द्रवायवाग्रा मैत्रावरुणाग्रा वा । यामीभिः स्तुवते । स्तोत्रे स्तोत्रेऽस्थिकुम्भमुपनिदधाति । मार्जालीये भक्षान्निनयन्ते । अग्न आयूंषि पवसे इति प्रतिपदं कुर्वीरन् । रथन्तरसाम । एषां सोमः स्यादायुरेवात्मन्दधतेऽथो पाप्मानमेव विजहतो यन्ति इति विज्ञायते (आप० श्रौ० १४.२३.४-१०)। यद्यु वै नाथवान् स्याद् दग्ध्वैनं कृष्णाजिनेऽस्थीन्युपनह्य निधाय योऽस्य स्वो नेदिष्ठो स्यात् तत्स्थाने तं दीक्षयित्वा तेन सह यजमाना आसीरन् । संवत्सरेऽस्थीनि याजयेयुः । व्यापातादित्याश्मरथ्यः । ओदवसातीयादित्यालेखनः ।

---

1. M[3] Om. मृतस्य ··· मार्जालीये (L. 2)

7. B[2] अपरः for अप नः

9. B[1] उदर्चिः for उदञ्चः

14. B[1] M[1] My Om. उप°

15. B[2] M[3] नयन्ते for निनयन्ते

19. M[1] स्वेन for स्वो

21. M[3] वापाता° for व्यापाता° B[1]M[1] उद° for ओद° ; B[2]M[3] आलेखनाग्नि° for आ लेखनः । अग्नि

अग्निष्टोमः सोम इत्येतदादि । पूर्ववत् द्वादशशतं दक्षिणा (आप० श्रौ० १४.२३.११-१५) इति ॥

अत्र निदानसूत्रम्—नेदिष्ठिनि दीक्षिते प्रेतस्यैव पूर्वपुरुषैः सह नामधेयानि गृह्णीयुः । संवत्सरेऽस्थीनि याजयेयुरिति भवति । तमेत एक उभयोः प्रेतकल्पयोः मन्यन्ते । द्वयस्थाने ह्याम्नातो भवत्युत्तरस्यैवेत्यपरमेतद्यत् कुर्युरिति पूर्वं कल्पं अपवृज्योत्तरेण संयुज्याम्नातो भवति । स खलु संवत्सरे नियुक्तो भवति । यद्यु हैनं सत्रिणः कुर्युः सत्रान्तात् संवत्सरं गणयेयुः । यद्यु वै नेदिष्ठी प्रायणान्तादथ प्रायणं चान्तरेणास्थियागं च प्रेताग्नयो दीप्येरन् । न त्वेष्वग्निहोत्रं हूयेत । न दर्शपूर्णमासाभ्यामिज्येत । प्राणावभृथो ह्यग्निहोत्राहुत्योर्दर्शपूर्णमासयोश्च संबन्धो भवति । तस्मात् प्रेतकृत्यान्योन्याहारा न प्राणावभृथो भवति । तस्मात्ते प्रेतेऽपि समापयितव्या (उ० ग्र० सू० २. ५) इति ॥१५॥

[ ग्रावभेदप्रायश्चित्तम् ]

अथ ग्रावभेदप्रायश्चित्तम् । यदि ग्रावापि शीर्येत (तां० ब्रा० ९. ९. १३) इत्यादि—समर्धयति (तां० ब्रा० ९. ९. १४) इत्यन्तब्राह्मणोक्तस्य क्लृप्तिमाह—

**ग्राव्णि विशीर्णे-पुनानः सोम धारये-(सा० ६७५-७)ति रौरवमेकस्याम् । यौधाजयमेकस्याम् । वृत्रस्य त्वा श्वसथादीषमाणा (सा० ३२४) इत्येतयोः**

9. B[1] M[1] My प्रायणान्तरेण for प्रायणं चान्तरेण

10. B[1] अत्येषु for न त्वेषु

12. M[3] Om. तस्मात् ; B[1] M[1] प्रेते for प्रेत°; B[2] M[3] प्राणो° for प्राणा°

13. B[1]M[1]My after अपि adds तेऽपि

16. B[1]My °भेदन° for °भेद°; B[2]M[1] विशीर्यन्ते for अपि शीर्येत

19. P अप° for वि°

**पूर्वम् । दैर्घश्रवसमेकस्याम् । उद्वद्वा प्राजापत्यम् । यौधाजयं तिसृषु । समानमितरं ज्योतिष्टोमेन ॥१६॥**

इति । स्पष्टम् । अस्य क्लृप्तिः । माध्यंदिने बृहत्यां पुनानः सोमेति रौरवद्यौतानदैर्घश्रवसानि सामतृचः । रौरवद्यौतानोद्वत्प्राजापत्यानि वा । यौधाजयं तिसृषु । अन्यत् सर्वं प्रकृतिवत् । माध्यंदिनपवमानादूर्ध्वं ग्रावभेदे सर्वप्रायश्चित्तमेव ॥१६॥

**अनुब्राह्मणं क्लृप्ताः । कर्मक्लृप्ताश्च ॥१७॥**

इति । ब्राह्मणक्रमेण काम्ययज्ञाः प्रतिपद्ब्रह्मसामादिभिः क्लृप्ता उक्ता इत्यर्थः ॥१७॥

**आहुतिकल्पाश्चाहुतिकल्पाश्च ॥१८॥**

इति । आहुतिप्रायश्चित्तम् । तत्कल्पास्तद्विधयः इत्यर्थः । द्विरुक्तिरध्यायसमाप्तिद्योतनार्था ॥१८॥

इति प्रथमे प्रपाठके एकादशः खण्डः ॥११॥

इति क्षुद्रसूत्रे प्रथमः प्रपाठकः ॥१॥

शतक्रतुचतुर्वेदिश्रीनिवासाख्ययज्वना ।
क्षुद्रे द्वितीयकोऽध्यायो व्याख्यायि प्रीतये हरेः ॥

इति श्रीमद्रामानुजसिद्धान्तस्थापनाचार्यशतक्रतुताताचार्यतनयचतुर्वेदिशतक्रतुश्रीनिवासाचार्यविरचिते क्षुद्रकल्पभाष्ये द्वितीयोऽध्यायः ॥२॥

इति आर्षेयक्षुद्रकल्पे द्वितीयोऽध्यायः ॥

---

6. M[3] B[2] °भेदः for °भेदे
11. M[3] तत्कल्पः तद्विषयः for तत्कल्पाः तद्विधयः
15. °वासाचार्य° for °वासाख्य°
16. M[3] B[2] उत्तरे for क्षुद्रे
17. M[3] B[2] Om. °शतक्रतुताताचार्य°
18. M[3] Om. °शतक्रतु° ; B[2] M[3] उत्तर° for क्षुद्र°

अथ

# तृतीयोऽध्यायः

## द्वितीयः प्रपाठकः

### प्रथमः खण्डः

श्रीकल्पसूत्रोपग्रन्थकृतो गुरुवरान् भजे ।
श्रीगार्ग्यमशकद्राह्यायणकात्यायनाह्वयान् ॥

अध्यायद्वयेन ब्राह्मणक्रमात् प्रतिपदादिभिः काम्ययज्ञाः प्रायश्चित्तयज्ञाश्चोक्ताः । ब्राह्मणोक्तानामपि नाराशंसोपदंसनादि-प्रायश्चित्तानां कल्पकारेणावचनम् । कल्पसूत्रस्य सामविधायकत्वात् तेषां प्रायश्चित्ते सामाभावादिति ॥

अतः परं क्षुद्रतन्त्रोक्तानां साम्नां शाखान्तरानुसारेण कल्प-माह—

**त्रयो वर्णकल्पाः ब्राह्मणस्य राज्ञो वैश्यस्य च ॥१॥**

इति । अत्र कल्पशब्देन यज्ञ उच्यते । वर्णकल्पाः वर्णानां ब्रह्मक्षत्रविशां यज्ञा इत्यर्थः । तदुक्तमापस्तम्बेन—यज्ञं व्यख्या-स्यामः । स त्रयाणां वर्णानां ब्राह्मणराजन्ययोर्वैश्यस्य च (आप० श्रौ० २४.१.१) इति ॥१॥

11. B[2]M[3] उत्तर° for क्षुद्र°

[ ब्राह्मणयज्ञः ]

**ब्राह्मणस्य यजमानस्य क्लृप्तो ज्योतिष्टोमः ॥२॥**

इति । ब्राह्मणे षष्ठादिभिश्चतुर्भिरध्यायैः क्लृप्त इत्यर्थः ॥२॥

[ राजन्ययज्ञः ]

अथ राजयज्ञस्य क्लृप्तिमाह—

**राज्ञो यजमानस्य ॥३॥**

इति । जातिमात्रक्षत्रियस्य यष्टुरित्यर्थः । सार्वभौमस्य प्रथमाध्याये उक्तत्वात् ॥३॥

**अग्र्यवती प्रतिपत् । बार्हतान्याज्यानि । बृहत्पृष्ठं श्यैतं ब्रह्मसाम श्रुध्यमुष्णिहि । समानमितरं ज्योतिष्टोमेन ॥४॥**

इति । स्पष्टम् । अस्य क्लृप्तिश्च ॥४॥

[ वैश्ययज्ञः ]

अथ वैश्ययज्ञमाह—

**वैश्यस्य यजमानस्य ॥५॥**

इति ॥५॥

**वैश्यस्तोमस्य प्रतिपच्चाज्यानि च पृष्ठं च । ब्रह्मसाम च । समानमितरं ज्योतिष्टोमेन ॥६॥**

इति । स्पष्टोऽर्थः । अस्य क्लृप्तिः—पवमानस्य विश्ववित्-दवि-पवे-ति बहिष्पवमानम् । विश्वेभिरग्ने-अग्निं मित्रं वयं हवामहे-इन्द्रं वो विश्वतस्परि-ता हुवे ययोरिदमित्याज्यानि । अभि त्वा शूर नूनोनुम इति कण्वरथन्तरं होतुः पृष्ठम् । तस्य

---

12. $B^{1-3}$ स्पष्टोऽर्थः for स्पष्टम् ; $M^3$ Om. अस्य

17. $B^2$ after °पत् ins. बार्हतानि

उत्तरे ककुभौ। तदुक्तं निदाने—वैश्यस्य वर्णकल्पे कण्वरथन्तरस्य काकुबुत्तरीयं संपदादिष्टं विद्यात् (उ० ग्र० सू० ३. १) इति। आ नो विश्वासु हव्यम् इति सदोविशीयं ब्रह्मणः। अन्यत् सर्वं प्रकृतिवत् ॥६॥

[ उभयसामयज्ञाः ]

रथन्तरपृष्ठैकसामानं बृहत्पृष्ठैकसामानं चाग्निष्टोममुक्त्वोभयसामाग्निष्टोममाह—

**अथात उभयसामानः ॥७॥**

इति। अथ एकसामाग्निष्टोमानन्तरं अतः एकसोमाग्निष्टोमस्य वृत्तत्वात् हेतोः उभयसामानः उभयसामकाग्निष्टोमा उच्यन्त इति शेषः। उभयसाम्नः एकसामज्ञानाधीनज्ञानत्वात् हेतुहेतुमद्भावः। एतेनोभयसामाग्निष्टोमस्यापि प्राथम्यम् उक्तं भवति। अत एव भगवानापस्तम्बः—रथन्तरसाम्ना बृहत्साम्नोभयसाम्ना वा प्रथमं यजेते-(आप० श्रौ० १०.२.६)ति। यद्युभयसामा यथाकामी-(आप० श्रौ० १२.१४.२)ति च। तथा च भरद्वाजः—यद्युभयसामैन्द्रवायवाग्रान् गृह्णीयात् (भा० श्रौ० १३. १४.२) इति। तथा च हिरण्यकेशी—उभयसाम्नि यथाकाम्यैन्द्रवायवाग्रान् गृह्णीयाद्वा (हि० श्रौ० ८.४.३-४) इति। तथा च बोधायनः—अथोभयपृष्ठे यथापृष्ठतया गृह्णीयात्। पुरोरुचमितरां कुर्यात् (बौ० श्रौ० २५.२२ : १०) इति। न च ग्रहप्रकरणे उक्तस्यो-

---

1. M[1] ककुभि for ककुभौ

5. M[3] Om. बृहत्पृष्ठैकसामानं च ; B[2] M[1] Om. च

6. B[2] trans. °सामाग्नि° ··· साहस्र° (P. 101, L. 11) after °ष्टोमेन (P. 102, L. 17); M[3] trans. सामाग्नि°···°प्राजा° (P. 107, L. 7) after °ष्टोमेन (P. 102, L. 17).

10. M[3]B[2] विशेषः for शेषः, B[1] °धीनत्वात् for धीनज्ञानत्वात्

18. B[1] यथा पृष्ठं तया for यथापृष्ठतया

19. B[1] °प्रकारे for °प्रकरणे

भयसामत्वस्य प्रकृतिविकृतिसाधारणत्वात् उभयसामकस्य प्रथमाहारत्वेन नियामकत्वमिति वाच्यम् । एवं रथन्तरपृष्ठस्यापि बृहत्पृष्ठस्यापि[च] तथात्वात् तयोरपि पार्थक्यं न स्यात् । यदि रथन्तरसाम्नेत्याद्यापस्तम्बवचनात् रथन्तरबृहतोः प्राथम्यं तर्हि तेनैव वचनेन उभयसामकस्यापि प्राथम्यमङ्गीकर्तव्यम् । न च रथन्तरसामानं कृत्वा बृहत्सामानमाहरेदित्येक इति । न रथन्तरपृष्ठं कृत्वा बृहत्पृष्ठमाहरेदिति । रथन्तरसाम्नानिष्ट्वा बृहत्साम्ना यजेतेत्यापस्तम्बभरद्वाजवैखानसवचनविरोध इति वाच्यम् । उभयसामकाग्निष्टोमेऽपि रथन्तरस्यापि सत्त्वात् न विरोधः । आर्षेयकल्पे रथन्तरपृष्ठाः बृहस्पतिसवसाद्यस्क्रादयः बृहत्पृष्ठाः गोष्टोमोपहव्यादयः उभयसामानः सहस्रदूणाशत्रृषभादय उक्ताः । एतेषां तत्तत्पृष्ठाग्निष्टोमप्रकृतिकत्वं वक्तव्यम् । तत्र यद्युभयसामकाग्निष्टोमः प्रकृतिर्न स्यात् तदा साहस्रादीनां विकृतित्वं न स्यात् । तस्मात् उभयसामकाग्निष्टोमस्यापि प्रकृतित्वमिति प्रथमाहार्यत्वं सिद्धम् । न च प्रकृतित्वमात्रेण प्रथमाहर्त्वम् । पवमानेष्ट्यन्वारम्भणीयादेरप्रकृतित्वेऽपि प्रथमानुष्ठानदर्शनादिति वाच्यम् ।

---

2. M[3]B[2] नियामकत्वात् for नियामकत्वम् ; B[2] अत्र for अपि

4. B[2]M[3] न हि for तर्हि

6. M[3] Om. न

7. M[3] अकृत्वा for कृत्वा ; B[1] before रथन्तर° adds न

8. B[1] भारद्वाज° for भरद्वाज

11. B[2]M[3] trans. दुणाश···ष्टोमेन इ (P. 102, L. 17) after साम गे° (P. 105, L. 10).

12. B[2]M[1] °सामिका°, B[1] सामा° for सामका°

14. B[1] यदा सहस्रादीनां विकृतित्वं स्यात् for तस्मात् ; B[1] सामकस्य for सामकाग्निष्टोमस्य

15. M[3] °मात्रे न for °मात्रेण

16. B[2]M[3] प्रकृतित्वे for अप्रकृतित्वे

तत्र वचनाद्विकृतीनामपि प्राथम्यम् । यत्र वचनं नास्ति तत्र प्रकृतेरेव प्राथम्यं युक्तमित्यलमतिप्रसङ्गेन ॥७॥

एकविंशतिरुभयसामानः । तत्र प्रथमस्य क्लृप्तिमाह—

**तेषां प्रथमो बृहत्पृष्ठो रथन्तराग्निष्टोमसामा ॥८॥**

इति । बृहत् पृष्ठं यस्य । रथन्तरमग्निष्टोमसाम यस्य । स तथोक्तः ॥८॥

नामान्तरमाह—

**अपि चाभिजित्प्रतिरूप इत्याचक्षते ॥९॥**

इति । रथन्तराग्निष्टोमसामत्वादेवाभिजित्प्रतिरूपत्वम् ॥९॥

**तस्य कल्पोऽग्र्यवती प्रतिपत् । बार्हतान्याज्यानि । बृहत्पृष्ठम् । श्यैतं ब्रह्मसाम । अुध्यमुष्णिहि । पुरोजिती वो अन्धस (सा० ६९७-९) इति श्यावाश्वमेकस्याम् । आन्धीगवमेकस्याम् । औद्लमेकस्याम् । नौधसं वा । यज्ञायज्ञीयं तिसृषु । यज्ञायज्ञीयस्यर्क्षु रथन्तरमग्निष्टोमसाम । समानमितरं ज्योतिष्टोमेन ॥१०॥**

इति । स्पष्टम् । क्लृप्तिश्च । एतेषामुभयसाम्नाम् एकविंशतेः प्रथमाहारे विश्वरूपाज्योतिर्गानधूर्गानानां प्रवृत्तिः ॥१०॥

---

1. B[1-2] वचनात् for वचनं

3 B[2]M[3] तस्य for तत्र

17. B[2] trans. सामाग्नि (P. 100, L. 6) ··· साहस्रा° (P. 101, L. 11) after °ष्टोमेन

19. B[1] धूर्गानानामह्नप्र° for धूर्गानानां प्र°

द्वितीयस्य क्लृप्तिमाह—

**अथातो रथन्तरपृष्ठो बृहदग्निष्टोमसामापि च विश्वजित्प्रतिरूप इत्याचक्षते ॥११॥**

इति । पूर्ववद्व्याख्येयम् ॥११॥

**तस्य कल्पः । पुरोजिती वो अन्धस (सा० ६९७-९) इति श्यावाश्वमेकस्याम् । आन्धीगवमेकस्याम् । औद्लमेकस्याम् । श्यैतं वा । यज्ञायज्ञीयं तिसृषु । यज्ञायज्ञीयस्यर्क्षु बृहदग्निष्टोमसाम । समानमितरं ज्योतिष्टोमेन ॥१२॥**

इति । स्पष्टम् । उपवतीप्रतिपद्राथन्तराणि आज्यानि । नौधसं ब्रह्मसाम । पौष्कलमुष्णिहीति विशेषः ॥१२॥

इति द्वितीये प्रपाठके प्रथमः खण्डः ॥१॥

---

द्वितीयः खण्डः

अथ त्रयाणां यज्ञानां नामान्याह—

**अथातो रथन्तरपृष्ठा बृहदनुष्टुप्कास्त्रयः ॥१॥**

इति । अनुष्टुप्सु बृहत् साम येषां तथोक्ताः ॥१॥

नामान्तरमाह—

**अपि चर्षभप्रतिरूपा इत्याचक्षते ॥२॥**

---

7. My Om. औदलमेकस्याम्

10. B[2]M[3] trans. °न ॥ इति । स्पष्टम् । उप···बृहत्साम गे° (P. 105, L. 10) after उद्वत्प्राजा° (P. 107, L. 7)

11. B[2]M[3] °वति for °वती

तेषां प्रथमस्य कल्पः । पुरोजिती वो अन्धस (सा० ६९७-९) इति श्यावाश्वमेकस्याम् । आन्धीगवमेकस्याम् । औदलमेकस्याम् । बृहत् तिसृषु । समानमितरं ज्योतिष्टोमेनेति प्रथमः ॥३॥

इति । स्पष्टम् । रथन्तरपृष्ठवत् क्लृप्तिः ॥३॥

अथ द्वितीयः । पुरोजिती वो अन्धस (सा० ६९७--९) इति श्यावाश्वमेकस्याम् । आन्धीगवमेकस्याम् । बृहदेकस्याम् । पुनश्चाभिनिवृत्य बृहता तृचं समापयति । समानमितरं ज्योतिष्टोमेनेति द्वितीयः ॥४॥

इति । पुनश्चाभिनिवृत्येति सिंहावलोकनन्यायेन इन्दुरश्व- इत्यस्यां बृहद् गीत्वा पुनश्च निवृत्य सखाय इत्यारभ्य ऋग्द्वयमेव तृचीकृत्य बृहता गायेदित्यर्थः । क्लृप्तिः—पुरोजितीति श्यावाश्वान्धीगवबृहन्ति सामतृचः । सखा-परि-तन्दुषु तिसृषु बृहत् । अन्यत् सर्वं प्रकृतिवत् ॥४॥

अथ तृतीयः । पुरोजिती वो अन्धस (सा० ६९७-९) इति श्यावाश्वमेकस्याम् । तस्यामेवान्धीगवम् । तस्यां चैव बृहत् ॥५॥

इति । स्पष्टम् ॥५॥

---

1. M[1] प्रथम: for प्रथमस्य

3. My B[1] Om. औदलम् ··· अथ द्वितीयः (L. 7)

4. M[1] Om. समानम् ··· बृहदेकस्याम् (L. 9)

14. M[1] गेयम् for गायेद्

**उत्तरे च द्वे तिस्रः करोति ॥६॥**

इति । यो धारया-तंदुरोषम्—इति द्वे उत्तरे स्तोत्रीये । एते तिस्रः करोति । त्रेधा विभजेदित्यर्थः ॥६॥

विभागप्रकारमाह—

**द्विर्द्विः पदमभ्यस्यम् ॥७॥**

इति । प्रतिपदं द्विरभ्यस्येदित्यर्थः । यो धारयेत्यादि षट् पादेषु एकैकस्य पादस्य द्विरभ्यस्य गाने चत्वारि पदानि एका स्तोत्रीया । एवं द्वादशपादेष्वपि तिस्रस्तोत्रीयाः ॥७॥

**तासु बृहत् ॥८॥**

इति । द्विरभ्यस्तपादस्तोत्रीयासु बृहत्साम गेयादित्यर्थः ॥८॥

**समानमितरं ज्योतिष्टोमेन ॥९॥**

इति । अस्य क्लृप्तिः । पुरोजितीति प्रथमायामेव श्यावाश्वान्धीगवबृहन्ति । योधेन्दुः-सोमंविश्वेति तिसृषु बृहदिति विशेषः । अन्यत् सर्वं प्रकृतिवत् ॥९॥

इति द्वितीये प्रपाठके द्वितीयः खण्डः ॥२॥

---

## तृतीयः खण्डः

अत्र त्रीन् यज्ञानाह—

**अथातो बृहत्पृष्ठा रथन्तरमाध्यंदिनास्त्रयः ॥१॥**

---

5. B[1-2] द्विद्विर्वा, My द्विः for द्विर्द्विः ; B[1 2] My M[1]M[3] अभ्यस्तम् for अभ्यस्यम्

10. B[2]M[3] trans. from दूणाश (P. 101, L. 11) ··· °ष्टोमेन ॥ इ· (P. 102, L. 17) after सामगे°; B[2] trans. from °यादित्यर्थः। ··· तृचे (P. 120, L. 13) after श्यैतस्योत्तमः

16. My M[1] अथ for अत्र

17. M[1] Om. त्रयः

इति। माध्यंदिनपवमाने रथन्तरं येषां ते तथोक्ताः ॥१॥

नामान्तराण्याह—

**अपि च साहस्रप्रतिरूपा इत्याचक्षते ॥२॥**

**तेषां प्रथमस्य कल्पः। साहस्रमाज्यबहिष्पवमानम्। यथा प्रथमस्य ॥३॥**

इति। आज्यं च बहिष्पवमानं च आज्यबहिष्पवमानम्। अल्पाच्तरत्वात् आज्यपूर्वनिपातः। साहस्रं सहस्रस्येत्यर्थः। षष्ठ्यर्थे प्रथमा। प्रथमस्य साहस्रस्य यथाज्यबहिष्पवमानं तद्वद् एतस्येत्यर्थः ॥३॥

**पुनानः सोम धारये-( सा० ६७५-६ )ति रौरवं यौधाजयं दैर्घश्रवसमुद्वद्वा प्राजापत्यम्। त एकर्चाः। रथन्तरं तिसृषु। सर्वासु प्रोहेयुः ॥४॥**

इति। सर्वासु स्तोत्रीयासु बृहतीकारेण प्रोहेयुः स्तुवीरन्नित्यर्थः। रथन्तरं तिसृषु सर्वेषु प्रगाथेष्विति पाठे तु सर्वासु स्तोत्रीयासु प्रगाथेषु बृहतीकारेण प्रग्रथितेषु तृचेषु रथन्तरं गेयमित्यर्थः ॥४॥

**बृहत्पृष्ठम्। श्यैतं ब्रह्मसाम। अग्ध्यमुष्णिहि। समानमितरं ज्योतिष्टोमेनेति प्रथमः ॥५॥**

---

12. B[2] राथन्तरं for रथन्तरं

13. बृहतीषु for प्रोहेयुः

18. B[2] बृहत्° for ब्रह्म°

इति। स्पष्टम्। अस्य क्लृप्तिः। पवस्व वाचो अग्र्यो (सा० ७७५–७) दविद्युतत्या रुचा-पवमानस्य ते कव (सा० ६५४–६) इति बहिष्पवमानम्। अग्न आयाहि वीतये (सा० ६६०–२) मित्रं वयं हवामहे (सा० ७६३) इन्द्रमिद्गेन्द्रे अग्ने (सा० ७६६–८०२) इत्याज्यानि। उच्चा त (सा० ६७२–४) इति गायत्रामहीयवे। पुनानः सोमे-(सा० ६७५–६)ति रौरवयौधाजयदैर्घश्रवसानि सामतृचः। रौरवयौधाजयोद्वत्प्राजापत्यानि वा। रथन्तरं तिसृषु। रथन्तरं सर्वबृहतीकारम्। अन्यत् सर्वं बृहत्पृष्ठाग्निष्टोमवत् ॥५॥

अथ द्वितीयमाह—

**अथ द्वितीयः। ककुभावुत्तरे रथन्तरस्य करोति। ब्रह्मायतनीया सप्तदशस्य विष्टुतिर्होतुः पृष्ठस्य ॥६॥**

इति। ज्योगामयावियज्ञे व्याख्यातम् ॥६॥

**समानमितरं पूर्वेण ॥७॥**

इति। स्पष्टम् ॥७॥

**तस्य संपत्। यथा संसुतसोमः। इति द्वितीयः ॥८॥**

इति। तत्रैव व्याख्यातम् ॥८॥

7. B[2] सामग्नि° (P. 100, L. 6) °प्राजा° trans. in different places ; evidently the leaves were misplaced in the Ms. from which B[2] was made out.

8. M[3] Om. सर्वं°

17. B[2]M[1] My Om. इति द्वितीयः

18. M[3] Om. द्वितीयः

तृतीयमाह—

अथ तृतीयः। उच्चा ते जातमन्धस (सा० ६७२-४) इति गायत्रं तिसृषु। आमहीयवमेकस्याम्। ऐडं कौत्समेकस्याम्। आभीकमेकस्याम्। सत्रासाहीयं वा। पुनानः सोमधारये-( सा० ६७५ )ति रौरवमेकस्याम्। यौधाजयमेकस्याम्। वरुणसामैकस्याम्। रथन्तरं तिसृषु ॥९॥

इति। स्पष्टम् ॥९॥

नित्या सप्तदशस्य विष्टुतिः पृष्ठानाम् ॥१०॥

इति। पूर्वोक्तब्रह्मायतनीयानिवृत्त्यर्थं नित्याग्रहणम्। पापसाविष्टुतिरित्यर्थः ॥१०॥

समानमितरं ज्योतिष्टोमेन ॥११॥

इति। स्पष्टम् ॥११॥

तस्य संपत्। षोडशाक्षराणि रथन्तराल्लुप्यन्ते। तावत् कौत्सवरुणसामभ्यामतिरिच्यते। तत्। संपन्नम् ॥१२॥

इति। स्पष्टम्। क्लृप्तिश्च ॥१२॥

इति द्वितीयप्रपाठके तृतीयः खण्डः ॥३॥

---

2. M[1] My Om. अथ तृतीयः

10. P निर्मध्या for नित्या

## चतुर्थः खण्डः

पुरोहितयज्ञावाह—

**अथातः पुरोहितकुलीनस्य पुरोधामश्नुवानस्य ॥१॥**

इति । अश्नुवानस्य प्राप्तस्येत्यर्थः । तस्य प्रथमयज्ञोऽयमेव । न तु रथन्तरपृष्ठः ॥१॥

उक्तेषु पूर्वेषूभयसामसु रथन्तरबृहतोरन्यतरस्य होतुः पृष्ठत्वात् तदनुसारेण प्रतिपदाज्यब्रह्मसामानि सिद्धानि । अत्र रथन्तरबृहतोः द्वयोरपि पृष्ठत्वात् प्रतिपदाज्यब्रह्मसामानि उभयसामानि विधत्ते—

**तस्मिन्नुभे प्रतिपदावुभयान्याज्यानि । उभे पृष्ठे उभे ब्रह्मसाम्नी करोति ॥२॥**

इति । स्पष्टम् ॥२॥

क्लृप्तिमाह—

**तस्य कल्पः । उपास्मै गायता नरः (सा० ६५१-३) पवस्व वाचो अग्र्यः (सा० ७७५-७) पवमानस्य ते कव (सा० ६५७-९) इति तृचक्लृप्तं बहिष्पवमानम् ॥**

**उपास्मै गायता नरः (सा० ६५१-३) पवस्व वाचो अग्र्यः (७७५-७) उपोषु जातमप्तुरम् (सा० १३३५-७) इति संभार्यस्तोत्रीय इति वा ॥**

9. M[1] पृष्ठः स्यात् for पृष्ठत्वात् ; M[1] Cm, उभयसामानि

अग्न आ याहि वीतय (सा० ६६०-२) इति राथन्तरं त्रीणि बार्हतानि । अग्निं दूतं वृणीमह (सा० ७९०-२) इत्युभयान्याज्यानीति वा ॥

पुनानः सोम धारये-(सा० ६५७-६)ति रौरवमेकस्याम् । नौधसमेकस्याम् । दैर्घश्रवसमेकस्याम् । उद्वद्वा प्राजापत्यम् । यौधाजयं तिसृषु । रथन्तरं पृष्ठम् । बृहद् ब्रह्मसाम । पुरोजिती वो अन्धस (सा० ६९७-९) इत्याकूपारं तिसृषु । परि त्यं हर्यतं हरिम् (सा० १३२९-३१) इति यस्य योनिः । श्यैतमेकस्याम् । श्यावाश्वमेकस्याम् । आन्धीगवमेकस्याम् । समानमितरं ज्योतिष्टोमेन ॥३॥

इति । स्पष्टम् ॥३॥

तस्य संपत् । द्वादशाष्टाक्षराण्याकूपारादतिरिच्यन्ते । तावत् पृष्ठानां ब्रह्मसाम्नो लुप्यते । तत् संपन्नम् ॥४॥

इति । आकूपारस्यैकैकस्य स्तोत्रीयस्य द्वात्रिंशद्वात्रिंशदक्षराणि अतिरिक्तानि । आहत्य षण्णवतिः । ब्रह्मसाम्नः ककुबुत्तरत्वात् बृहत्यपेक्षया षण्णवत्यक्षराणि न्यूनानि । तेन संपत्सिद्धिः ॥४॥

इति द्वितीये प्रपाठके चतुर्थः खण्डः ॥४॥

---

11. B[2]M[1] योनि for योनिः

19. My षण्णवति for षण्णवतिः

पञ्चमः खण्डः

**अथैष एव सन् विपरीतः ॥१॥**

इति । एष एव पूर्वोक्तयज्ञ एव प्रतिपदाज्यपृष्ठसामभिः विपरीतः व्यत्यस्त इत्यर्थः । यद्वा एष एव पुरोहितकुलीन एव विपरीतः ब्राह्मीवृत्तिं परित्यज्य क्षत्रवृत्त्या जीवी यः स इत्यर्थः । बृहत्पृष्ठत्वात् । एतस्य यज्ञस्य बृहतश्च क्षत्रियसामत्वात् अयमर्थः संगच्छते ॥१॥

तस्य क्लृप्तिमाह—

**तस्मिन्नुभे प्रतिपदावुभयान्याज्यानि । उभे पृष्ठे उभे ब्रह्मसामनी करोति ॥२॥**

इति । पूर्ववद्व्याख्येयम् ॥२॥

**तस्य कल्पः । पवस्व वाचो अग्रियः (सा० ७७५-७) उपास्मै गायता नरः (सा० ६५१-३) पवमानस्य ते कव (सा० ६५७-६) इति तृचक्लृप्तं बहिष्पवमानम् ॥**

**पवस्व वाचो अग्रियः (सा० ७७५-७) उपास्मै गायता नरः (सा० ६५१–३) पवस्वेन्दो वृषा सुतः (सा० ७७८–८०) इति संभार्यः स्तोत्रीय इति वा ॥**

---

4. M[3] प्रत्यस्तः for व्यत्यस्तः

5. B[1]M[1] ब्राह्मीं for ब्राह्मी

6. B[1]B[2] My ब्रह्मन् for बृहत्

अग्निं दूतं वृणीमह (सा० ७६०-२) इति बार्हतं त्रीणि राथन्तराणि । अग्न आयाहि वीतय (सा० ६६०–२) इति उभयान्याज्यानीति वा ॥

पुनानः सोम धारये-(सा० ६५७-६)ति रौरवमेकस्याम् । श्यैतमेकस्याम् । दैर्घश्रवसमेकस्याम् । उद्वद्वा प्राजापत्यम् । यौधाजयं तिसृषु । बृहत् पृष्ठम् । रथन्तरं ब्रह्मसाम । पुरोजिती वो अन्धस (सा० ६६७-६) इत्याकूपारं तिसृषु । परि त्यं हर्यतं हरिम् (सा० १३२९-३१) इति यस्य योनिः । नौधसमेकस्याम् । श्यावाश्वमेकस्याम् । आन्धीगवमेकस्याम् । समानमितरं ज्योतिष्टोमेन ॥२॥

इति । स्पष्टम् ॥२॥

तस्य संपद्यथा पूर्वस्य ॥३॥

इति । स्पष्टम् । क्लृप्तिश्च ॥३॥

अथ यज्ञायज्ञीयानुरूपाग्निष्टोमस्य क्लृप्तिमाह—

अथातो यज्ञायज्ञीयानुरूपो बृहदग्निष्टोमसामा ॥४॥

---

2. B[1] राथन्तरं त्रीणि बार्हतानि for बार्हतं त्रीणि राथन्तराणि
6. B[2]M[3] Om. श्यैतमेकस्याम्
10. B[1] आक्षारं for आकूपारं
11. M[1] योनि for योनिः
12. B[2]M[3] Om. आन्धीगवमेकस्याम्

इति । यज्ञायज्ञीयमनुरूपो यस्य बहिष्पवमाने स तथोक्तः ॥४॥

**तस्य कल्पः । यज्ञायज्ञीयमनुरूपे । गायत्रं स्तोत्रीयपर्यासयोः ॥५॥**

इति । उप-दवि-पवे-(सा० ६५१-९)त्येतासु दवि द्युतत्या-(सा० ६५४-६) तृचेऽनुरूपे यज्ञायज्ञीयं साम गेयम् । उपास्मै-(सा० ६५१-३) पवमानस्ये-(सा० ६५७-९)ति तृचयोः प्रकृतिवत् गायत्रं गेयमित्यर्थः ॥५॥

**उप शिक्षापतस्थुषः (सा० ७६१-३) इति सफम् । यज्ञायज्ञीयस्यर्त्तु बृहदग्निष्टोमसाम । समानमितरं ज्योतिष्टोमेन ॥६॥**

इति । स्पष्टम् ॥६॥

**तस्य संपत् । द्वे अक्षरे बहिष्पवमानादतिरिच्येते । तावत्सफाल्लुप्यते । तत् संपन्नम् ॥७॥**

इति । स्पष्टम् । अस्य क्लृप्तिः । सकृद्धिंकृत्य उपास्मै (सा० ६५१-३) इति गायत्रम् । दविद्युते-(सा० ६५४-६)ति यज्ञायज्ञीयम् । पवमानस्ये-(सा० ६५७-९)ति गायत्रम् । उप शिक्षे-(सा० ७६१-३)ति सफम् । यज्ञायज्ञीयस्यर्त्तु बृहदग्निष्टोमसाम । अन्यत् सर्वं प्रकृतिवत् । तदुक्तं निदाने—अथ यज्ञायज्ञीयानुरूपे कथं हिंकार इति । यथोत्तरयोः पवमानयोरित्येके (नि० सू० २.

---

1. $M^1$ °रूपम् for °रूपो

3. $B^1$ °यज्ञीयानुरूपो for यज्ञीयमनुरूपे

17. $B^1$ before उप adds सफस्थाने

20. $B^2M^3$ तयो° for यथो°

७ : १२) इति । क्षुद्रनिदाने च—यज्ञायज्ञीयानुरूपे बहिष्पवमाने त्रिर्हिंकुर्युः । भिन्नसामत्वात् । सकृदित्यपरम् । प्रकृत्यविकारात् संपदुपपत्तेर्यद् बहिष्पवमानम् । सकृद्धिंकृताभिः पराचीभिः स्तुवन्तीति च । उपपद्यते च । हिंकारान्तस्यैवाविशेषात् साम्ने साम्न इति चेत् । न । विशेषश्रुते-(उ० ग्र० सू० ३. १)रिति । संपदुपपत्तेरित्यस्यार्थः । स तु वै यज्ञेन यजेते-(तां० ब्रा० ६. ८. १)त्यारभ्य विराज्येव प्रतितिष्ठती-(तां० ब्रा० ८. ५. १३) त्यन्तेन ब्राह्मणेन विराट्संपत्तेरुक्तत्वात् सकृद्धिंकारे विराट्संपत्तिः स्यात् । त्रिर्हिंकारे तु द्वादशत्वात् न विराट्संपत्तिः ॥७॥

अथ षोडशसामाग्निष्टोमावाह—

अथातः षोडशसामा ॥८॥

इति । षोडश सामानि यस्य स तथोक्तः । आज्यपवमानस्थगायत्राणि सर्वाणि सामानि मिलित्वा एकं गायत्रं साम । आमहीयवयौधाजयौशनरथन्तरबृहद्बृहद्रथन्तरवामदेव्यनौधसश्यैत - नौधसकालेयसंहितसफपौष्कलश्यावाश्वान्धीगवकावयज्ञायज्ञीयाख्यानि सामानि पञ्चदश । एवं षोडशसामत्वमेतयोः ॥

ननु रथन्तरपृष्ठाग्निष्टोमस्यापि षोडशसामत्वात् एतयोर्विशेषेणैतन्नामकत्वं किमर्थमिति चेत् । मैवम् । पूर्वोक्तेषु पुरोहितयज्ञाभिजित्प्रतिरूपाद्युभयसामयज्ञेषु षोडशभ्योऽधिकसामत्वदर्शनात् । अष्टादशसामन्यूनत्वनियमाच्च । अत्रापि रथन्तरबृहतोः श्यैतनौधसयोरेकत्वेऽपि द्वित्वभ्रान्त्याष्टादशसामकत्वभ्रान्तिर्मा भूदिति

---

1. B[2]M[3] उत्तर° for क्षुद्र°

10. B[1] षोडशि° for षोडश°

14. B[1] M[3] My after आमहीयव adds °रौरव° ; M[1] Om. one बृहद्

15. B[1] °याज्ञीयाद्यानि for °यज्ञीयाख्यानि

21. B[1] My before एकत्वे ins. द्वयोः

एतयोर्विशेषेणैषा संज्ञा कृता । रथन्तरपृष्ठाग्निष्टोमेऽपि रथन्तर-नौधसयोरेकसामत्वात् द्विसामत्वभ्रान्तेरनुदयात् न तस्येयं संज्ञा कृता ॥८॥

प्रथमस्य क्लृप्तिमाह—

**तस्य रथन्तरबृहत् पृष्ठम् । नौधसश्यैतं ब्रह्म-साम । समानमितरं ज्योतिष्टोमेन ॥९॥**

इति । स्पष्टम् । अस्य क्लृप्तिः—उपास्मै-(सा० ६५१–३) पवस्व वाचः(सा० ७७५-७)-पवमानस्य ते कव (सा० ६५७–९) इति बहिष्पवमानम् । उपास्मै-(सा० ६५१-३)पवस्व वाचः (सा० ७७५-७)-उपोषु (सा० १,३३५-७) इति प्रतिपत् तृचः । दवि-पवे-( सा० ६५४-६ )ति बहिष्पवमानमिति वा । अग्न आया-(सा० ६६०-२)-मित्रं वयम्—इन्द्रमिद्गेन्द्रेऽग्ने-(सा० ७९३-८०२) त्याज्यानि । अग्निन्द्र-मित्रं वयम् आयाहीन्द्राग्नीति वा । रथन्तर-बृहत् होतुः पृष्ठम् । नौधसश्यैतं ब्रह्मसाम । अन्यत् सर्वं प्रकृति-वत् । होतुः पृष्ठे रथन्तरबृहत् । पिबतु सोम्यं मध्विति विशेषः । रथन्तरबृहत्साम्नः वसिष्ठभारद्वाजावृषी । आद्या बृहती । ककुभावुत्तरे । इन्द्रो देवता । प्रस्तुत्यम् । ओम् । वाक् भाभभाभि-भाभे भभ । ईकीशा । औटाहोवा । ईरशोवा । ओं वाक् भाभि-भाभभभो । न कीत्वा । औटा होवा । नरजोवा । ओं वाक् । भो भ

1. $B^2M^3$ क्लृप्ता for कृता

2. $B^2M^3$ एव for इयं

5. P श्यैतनौधसं for नौधसश्यैतं

16. $B^1M^1$ आद्याज्या for आद्या

18. $M^1B^2$ भभे for भाभे ; $M^1$ Om. ईरशो वा

19. $B^2$ भभ, $M^1$ My $M^3$ भाभु for भाभ ; $M^1$ My $M^3$ भुभो for भभो ; $B^2$ नाजोवार for नरजोवा ; $M^1$ Om. नरजोवा

भभि भभे । अकीश्वा । औटाहोवा इति । तदुक्तं निदाने—तत्र कथं बृहद्रथन्तरधर्मा इत्यकर्तव्या इत्याहुरकृत्स्नत्वात् अन्यत्वात् विकृत्यादेशादिति कर्तव्या इति । अपरं प्राप्ताप्रतिषेधात् एकदेशकात्स्न्र्याद्यथाष्टाक्षरा गायत्रीति गायत्र्याः पूर्णायाश्चतुर्विंशत्यक्षरत्वेऽपि यथा तदेकदेशपादे अष्टाक्षरे गायत्रीव्यपदेशः तथा रथन्तरैकदेशे रथन्तरत्वव्यवहारः । एकदेशविकृतस्यानन्यत्वात् । तदुक्तं भगवता पतञ्जलिना—एकदेशविकृतमनन्यवद्भवति (पा० म० १. १. ५६) इति । कात्यायनेनाप्युक्तम्—एकदेशविकृतस्यानन्यत्वात् सिद्धम् (पा० म० १.१.५६) इति । उपसरणे नौधसश्यैतं सामोपधावामि । तं वो दस्मम् ऋचम्, नोधःप्रजापती ऋषी इति विशेषः । अन्यत् सर्वं प्रकृतिवत् ॥९॥

अथ द्वितीयमाह—

**अथैष एव सन् विपरीतः । तस्य बृहद्रथन्तरं ब्रह्मसाम । समानमितरं ज्योतिष्टोमेन ॥१०॥**

इति । स्पष्टम् । अस्य क्लृप्तिः—पवस्व वाच-(सा० ७७५)-उपास्मै-( सा० ६५१-३ )-पवमानस्य ते कवे ( सा० ६५७-९) इति बहिष्पवमानम् । पवस्व वाचः—उपास्मै-पवस्वेन्द इति संभार्यस्तृचः । दवि-पवेति वा । अग्निदू-आ नो मित्रा-आयाही-

---

2. $B^2M^3$ रथन्तरं for कथं ; $B^2M^3$ Om. इत्यकर्तव्या

3. $M^1B^1$ °प्राप्त° for प्राप्ता°

4. $B^1$ °काद्व्या वृथा for °कात्स्न्र्याद्यथा ; $M^1$ गायत्र्यां पूर्णायां for गायत्र्याः पूर्णायाः

7. $M^1$ Om. तदुक्तं ••• अनन्यत्वात् (L. 9)

10. $B^2$ after °धावामि ins. इति ; $M^1$ तृचम् for ऋचम्

15. $B^1$ My कल्पः for क्लृप्तिः

18. $B^1$ उप for दवि

न्द्राग्नी-त्याज्यानि । अग्न-आ नो-मित्रा—इन्द्रमिद्गेन्द्रे अग्ने इति वा । बृहद्रथन्तरं होतुः । श्यैतनौधसं ब्रह्मणः । पौष्कलस्य स्थाने अध्यम् । बृहद्रथन्तरम् । पिबतु सोम्यं मध्विति पृष्ठहोमः । बृहद्रथन्तरस्य साम्नो भरद्वाज-वसिष्ठावृषी । औ चे हो इत्वामिद्धि हवामहाए ।ओ सारतौ वाजा । स्या आकारावाः । भूभं भूभे भुभि भाः । पकः ता इन्नराः । औ चे हों इतु वामे । ओंरकाष्टा । सूवू अर्वाताः । भाका भा भ भि भं भ भ भ । स्तकः धाया ।। ओ चे हो इमहाए । ओं स्तावा । नोधूइ अद्राइवा । भाका भा भु भभि भभि । द्रकः बां रा । अत्र स्थविरगौतमपक्षे सर्वत्रास्वस्तोत्रीयं न स्तोभे-(ला०श्रौ० २.६.२०)दिति वचनात् अस्वस्तोत्रीयत्वात् भकारनिवृत्तिः । धानंजय्यपक्षेऽस्त्येव भकारः । उपसरणे श्यैतनौधसं साम उपधावामि । अभि प्रव-ऋचं प्रजापतिर्नौधसावृषी । इन्द्रं देवतामिति विशेषः । अन्यत् सर्वं प्रकृतिवत् ।।१०।।

इति द्वितीये प्रपाठके पञ्चमः खण्डः ।।५।।

---

## षष्ठः खण्डः

अथाष्टौ यज्ञानाह—

### अथातोऽष्टौ गर्भिणः ।।१।।

इति । गर्भा एषां सन्तीति गर्भिणः । बृहद्रथन्तरश्यैत-नौधसवाङ्निधनक्रौञ्चवारवन्तीयानां मध्यमे पर्याये निधाय

---

4. M[1] एत्वामी[3] for इत्वामि°

5. B[1]M[1] °हाइ for हाए ; M[1] सातौ for सारतौ ; B[2] M[3] वाज for वाजा ; M[1] बूकारावा for आकारावाः ; B[1] न्द्रभाभूभेइभिभभा for भूभं भूभेभुभिभाः

7. B[1-2] याया for धाया

8. M[1] नोवू , My नोपू for नोधूइ ; M[3] नेर अवुद्राइवा for नोधूइ अद्राइवा

9. B[2]M[3] संगा इरा for बांरा

स्तवनात् गर्भत्वम्। एवं भूतपृष्ठत्वात् अष्टानां यज्ञानां गर्भित्व-व्यपदेशः ॥१॥

**तेषां प्रथमस्य कल्पः। रथन्तरस्य प्रथमोत्तमौ पर्यायौ। बृहतो मध्यमः। स्व एव स्तोत्रीय इति पृष्ठम्। नौधसस्य प्रथमोत्तमौ पर्यायौ। श्यैतस्य मध्यमः। स्व एव स्तोत्रीय इति ब्रह्मसाम। समानमितरं ज्योतिष्टोमेनेति पूर्वः ॥२॥**

इति। स्पष्टम्। अस्य क्लृप्तिः। रथन्तरस्य प्रथमोत्तमौ पर्यायौ अभि त्वेति तृचे। बृहतो मध्यमः त्वामिद्धीति तृचे। इति होतुः। नौधसस्य प्रथमोत्तमौ पर्यायौ तं व इति तृचे। श्यैतस्य मध्यमः अभि प्र व इति तृचे। इति ब्रह्मणः। अन्यत् सर्वं प्रथमषोडशसाम-ज्योतिष्टोमवत् ॥२॥

द्वितीयमाह—

**अथोत्तरः। बृहतः प्रथमोत्तमौ पर्यायौ। रथन्तरस्य मध्यमः। स्व एव स्तोत्रीय इति पृष्ठम्। श्यैतस्य प्रथमोत्तमौ पर्यायौ। नौधसस्य मध्यमः। स्व एव स्तोत्रीय इति ब्रह्मसाम। समानमितरं ज्योतिष्टोमेनेति प्रगुणौ ॥३॥**

इति। प्रगुणौ ऋजू इत्यर्थः। ऋजावजिह्मप्रगुणौ (अ० को० ३.१.७२) इत्यमरः। स्पष्टम्। अस्य क्लृप्तिः—बृहतः प्रथमो-

1. M[1] °गर्भत्व° for गर्भित्व°

त्तमौ पर्यायौ त्वामिद्धीति तृचे । रथन्तरस्य मध्यमः अभि त्वेति तृचे । श्यैतस्य प्रथमोत्तमौ पर्यायौ अभि प्रव इति तृचे । नौधसस्य मध्यमः तं व इति तृचे । अन्यत् सर्वं द्वितीयषोडशसाम ज्योतिष्टोमवत् ॥३॥

अथ तृतीयचतुर्थावाह—

**अथ व्यतिषक्तौ ॥४॥**

इति । स्थानतो व्यस्तपृष्ठब्रह्मसामकत्वात् अनयोर्यज्ञयोर्व्यतिषक्तत्वमौपचारिकम् ॥४॥

व्यतिषङ्गमेवाह—

**एत एव पृष्ठे । ब्रह्मसामनी एवान्योन्यस्य स्थानं व्यतिहरेत् ॥५॥**

इति । तृतीयस्य होतुः पृष्ठे नौधसस्य प्रथमोत्तमौ पर्यायौ । श्यैतस्य मध्यमः । ब्रह्मणः पृष्ठे रथन्तरस्य प्रथमोत्तमौ पर्यायौ । बृहतो मध्यमः । अन्यत् सर्वं प्रथमगर्भवत् ॥

चतुर्थस्य होतुः पृष्ठे श्यैतस्य प्रथमोत्तमौ पर्यायौ । नौधसस्य मध्यमः । ब्रह्मणः पृष्ठे बृहतः प्रथमोत्तमौ पर्यायौ । रथन्तरस्य मध्यमः । अन्यत् सर्वं द्वितीयगर्भवदित्यर्थः ॥५॥

चतुरो गर्भिणो यज्ञानाह—

**अथैत एव सन्तोऽजामिक्लृप्ताः ॥६॥**

---

7. B[1]M[1] व्यत्यस्त, B[2] व्यस्तत्व, M[3] व्यस्तं for व्यस्त° ; B[1]M[3] °सामत्वात् for °सामकत्वात्

15. M[3] त्रिपृष्ठे for पृष्ठे ; B[1] M[1] My Om. श्यैतस्य ··· पर्यायौ (L. 16)

16. B[2] Om. बृहतः

18. B[2]M[3] गर्भिण्यः for गर्भिणः

इति । एत एव उक्ताश्चत्वार एव गर्भिणः अजामिक्लृप्ताः । अजामित्वेन क्लृप्ता इत्यर्थः । वारवन्तीयवाङ्निधनक्रौञ्चयोर्मध्ये-निधनादेषामजामिक्लृप्तत्वम् ॥६॥

अजामिप्रकारमेवाह—

**रथन्तरस्य प्रथमः पर्यायः । वारवन्तीयस्य द्वितीयः । रथन्तरस्यैव स्तोत्रीये । बृहत-स्तृतीयः । इति पृष्ठम् । नौधसस्य प्रथमः पर्यायः । वाङ्निधनस्य क्रौञ्चस्य द्वितीयः । नौधसस्यैव स्तोत्रीये । श्यैतस्य तृतीयः । इति ब्रह्मसाम । समानमितरं ज्योतिष्टोमेन । इति पूर्वः ॥७॥**

इति । अभि त्वेति तृचे रथन्तरवारवन्तीयाभ्यां पूर्वौ पर्यायौ । त्वामिद्धीति तृचे बृहत उत्तमः । तं व इति तृचे नौधसवाङ्निधनक्रौञ्चाभ्यां पूर्वौ । अभि प्र व इति तृचे श्यैतस्योत्तम इत्यर्थः । रथन्तरवारवन्तीयबृहन्ति पिबतु सोम्यं मधु-आयुर्दधद्यज्ञपताविति पृष्ठहोमः । रथन्तरवारवन्तीयबृहतां साम्नां वसिष्ठेन्द्रभरद्वाजा ऋषयः । नौधसवाङ्निधनक्रौञ्चश्यैतानि सामानि उपधावामि । तं वो दस्मम्—अभि प्र व इत्यृचौ । नोधः-क्रुङ्-प्रजापतीनृषीन्

---

3. B[2] क्लृप्तित्वम् for क्लृप्तत्वम्

4. B[1]M[1] Om. एव

16. M[3] °बृहत् for °बृहतां ; B[2]M[3] trans. passages तत्तत् (P. 122, L. 5) °गीति (P. 123, L. 11) and रथन्तर° ··· इति गतम् (P. 122, L. 5) after अस्थि° (P. 89, L. 13)

17. B[2] उपेयामि for उपधावामि

इत्युपसरणे विशेषः । नौधसवाङ्निधनक्रौञ्चश्यैतानां साम्नां नोधः-कुङ्प्रजापतयः ऋषयः । अन्यत् सर्वं प्रथमगर्भिवत् ॥७॥

द्वितीयमाह—

**अथोत्तरो बृहतः प्रथमः पर्यायः । वारवन्तीयस्य द्वितीयः । बृहत एव स्तोत्रीये । रथन्तरस्य तृतीयः । इति पृष्ठम् । श्यैतस्य प्रथमः पर्यायः । वाङ्निधनस्य क्रौञ्चस्य द्वितीयः । श्यैतस्यैव स्तोत्रीये । नौधसस्य तृतीयः । इति ब्रह्मसाम ॥८॥**

इति । त्वामिद्धीति तृचे बृहद्वारवन्तीयाभ्यां पूर्वौ । अभि त्वेति तृचे रथन्तरेणोत्तमः । अभि प्र व इति तृचे श्यैतवाङ्निधनक्रौञ्चाभ्यां पूर्वौ । तं व इति तृचे नौधसेनोत्तम इत्यर्थः । बृहद्वारवन्तीयरथन्तराणि पिबन्तु सोम्यं मधु-आयुर्दधद्यज्ञपताविति पृष्ठहोमः । बृहद्वारवन्तीयरथन्तराणां भरद्वाजेन्द्रवसिष्ठा इत्यृषयः । श्यैतवाङ्निधनक्रौञ्चनौधसानि सामान्युपधावामि । प्रजाप्रतिक्रुङ्नोधस ऋषीन् इत्युपसरणे विशेषः । श्यैतवाङ्निधनक्रौञ्चनौधसानां प्रजापति-क्रुङ्-नोधस इत्यृषयः ॥८॥

**समानमितरं ज्योतिष्टोमेन । इति प्रगुणौ ॥९॥**

इति । स्पष्टम् । इतरत् सर्वं द्वितीयगर्भिवत् ॥९॥

---

2. M[1]B[2]M[3] °गर्भवत् for गर्भिवत्

तृतीयचतुर्थावाह—

**अथ व्यतिषक्तौ । एते एव पृष्ठे । ब्रह्मसामनी एवान्योन्यस्य स्थानं व्यतिहरेत् ॥१०॥**

इति । गतम् । तत्तत्सामानुगुण्येन पृष्ठहोमोपसरणादिकमूह्यम् ।

एकविंशतिरुभयसामानः उक्ताः । एतेषु ये रथन्तरपृष्ठप्रधानास्तेषु प्रथमाहारे ब्राह्मणानामधिकारः । द्वितीयादावनियमः । एवं बृहत्पृष्ठप्रधानेषु क्षत्रियाणाम् ॥१०॥

बृहत्पृष्ठस्य वा रथन्तरपृष्ठस्य वा ब्राह्मणोक्तस्यैवाग्निष्टोमस्योभयसामत्वं गौण्या वृत्त्या आह—

**अथानेनैव ज्योतिष्टोमेन यजमानो विद्यात् । उभयसाम्ना यजत इति ॥११॥**

इति । अनेनैव ब्राह्मणोक्तेनैवेत्यर्थः । उक्तानामुभयसाम्नां शाखान्तरीयत्वात् न बुद्धिस्थतया निर्देशः । विद्यादिति पदेन गौणी वृत्तिः सूचिता ॥११॥

ज्योतिष्टोमस्य गौणमेवोभयसामत्वमुपपादयति—

**यत्र रथन्तरं पृष्ठं नौधसेन तत्र बृहदुपाप्तम् ॥१२॥**

इति । रथन्तरपृष्ठे नौधसस्य नियतत्वात् तेनैव बृहत् कृतमित्यर्थः । बृहदेवास्मै तत् प्रति प्रयुञ्जन्ती-(तां०ब्रा० ७.१०.८.)ति श्रुतेः ॥१२॥

---

17. My गौणक्रमेण for गौणमेव

21. M[1] अस्यैतत् for अस्मै तत्

**यत्र बृहच्छ्यैतेन तत्र रथन्तरम् ॥१३॥**

इति। बृहत्पृष्ठे श्यैतस्य नित्यत्वात् तेनैव रथन्तरं कृतमित्यर्थः। यद् बृहते श्यैतं प्रति प्रयुञ्जन्ति रथन्तरमेवास्मै तत् प्रति प्रयुञ्जन्ती-(तां० ब्रा० ७. १०. ८)ति श्रुतेः ॥१३॥

**बृहद्रथन्तरे वै रूपपरोक्षे श्यैतनौधस इति हि भवतीति ॥१४॥**

इति। वै-शब्द एवकारार्थः। रूपपरोक्षे रूपान्तरेण परोक्ष इत्यर्थः। यथा वैरूपवैराजशाक्वररैवतानां बृहद्ध्येतत् परोक्षं यन्नौधसम्। रथन्तरं ह्येतत् [परोक्षं] यच्छ्यैतम् (तां० ब्रा० ७. १०. ८) इति श्रुतेः। नौधस उद्गीथारम्भे बृहत्सामवत् वसोर्मन्देत्युदात्तगीतिसाम्यात् बृहत्परोक्षत्वमिति। बृहतो रूपमिति श्रुत्या तं व इत्यत्र तकारवकारयोर्हला व्यवधानाभावात् त्वमित्येव भवति। तेनापि बृहत्परोक्षत्वम्। एवं श्यैतेऽपि अभीति रथन्तरस्य रूपमिति श्रुत्यात्रापि अभिशब्दस्य विद्यमानत्वात् उद्गीथारम्भेऽपि प्रण्यस्तगीतिसाम्यात् रथन्तरपरोक्षत्वम् इत्यूह्यम्॥

तलवकारशाखोक्तप्रकारेण प्रकृतिगता एव ज्योतिष्टोमा एकत्रिंशत्प्रकारा लिख्यन्ते। आदौ एकादशाग्निष्टोमाः। प्रथमस्य रथन्तरपृष्ठस्य उच्चा-प्रस्य प्रत्ना-एना विश्वेति गायत्रं जनुषैकर्चयोः सफपौष्कले। अन्यत् सर्वं प्रकृतिवत्॥

द्वितीयस्य बृहत्पृष्ठस्य पवस्वेन्दविति बहिष्पवमानस्यानुरूपो जनुषैकर्चयोः सफपौष्कले। अन्यत् सर्वं श्रैष्ठ्यकामयज्ञवत्॥

---

1. P यत्रो for यत्र

5. My वैरूप° for रूप°; P Om. रूप°

19. M[3] B[3] रथन्तरस्य for रथन्तर°

तृतीयस्य रथन्तरप्रधानोभयपृष्ठस्य पवस्व वाच इत्यनुरूपः। पूर्वे रथन्तरे आज्ये। उत्तरे बार्हते। उच्च-सनः-एनेति गायत्रा-महीयवे। पुरोजितीति श्यावाश्वश्यैतान्धीगवानि सामतृचः। बृहत्ति-सृषु। अन्यत् प्रथमाग्निष्टोमवत् ॥

चतुर्थस्य बृहत्प्रधानोभयपृष्ठस्य उपास्मा इति अनुरूपः। होतृब्रह्मणोराज्ये बार्हते। राथन्तरे इतरयोः। पुनानः सोमेति रौरवयौधाजयाष्टादंष्ट्रोत्तराणि सामतृचः। रथन्तरं तिसृषु। अन्यत् तृतीयाग्निष्टोमवत् ॥

पञ्चमस्य सम्यक्पृष्ठस्य बृहत् ब्रह्मणः। पुरोजितीति श्यावाश्वान्धीगवे तृचयोः। अन्यत् तृतीयाग्निष्टोमवत् ॥

षष्ठस्यैकाहविधिरथन्तरपृष्ठस्य उच्चा त इति गायत्रामहीयवे तृचयोः। अन्यत् प्रथमाग्निष्टोमवत् ॥

सप्तमस्यैकाहविधिबृहत्पृष्ठस्य रौरवस्थाने रौरवदैर्घश्रवससोमसामानि सामतृचः। श्यावाश्वस्थाने श्यावाश्वक्रौञ्चोत्तराकूपाराणि सामतृचः। अन्यत् द्वितीयाग्निष्टोमवत् ॥

अष्टमस्यैकाहविधरथन्तरप्रधानोभयपृष्ठस्य सोमसाम्नः स्थाने समन्तम्। अन्यत् तृतीयाग्निष्टोमवत् ॥

नवमस्यैकाहविधबृहत्प्रधानोभयपृष्ठस्य रौरवयौधाजयसमन्तानि सामतृचः ॥

दशमस्यैकाहविधसम्यक्पृष्ठस्य रौरवस्थाने रौरवनौधससमन्तानि

1. $B^{1}$ रथन्तरे for रथन्तर° ; $M^{1}$ Om. °प्रधान°

3. $M^{3}$ Om. बृहत्तिसृषु

9. $M^{3}$ Om. पञ्चमस्य···°ष्टोमवत् (P. 125, L. 17)

14 $B^{1-2}$ श्वावाश्वस्य स्थाने for श्वावाश्वस्थाने

18. $M^{1}$ विधि for विध

सामतृचः । श्यावाश्वस्थाने श्यावाश्वश्यैतौदलानि सामतृचः । अन्यत् पञ्चमाग्निष्टोमवत् ॥

पृष्ठशमनीयाख्यस्याग्निचितिकस्यैकादशस्य आमहीयवस्थाने आमहीयवैडसैन्धुक्षिताग्नेरर्काः सामतृचः । पुनान इति रौरवं प्रथमायाम् । रथन्तरं तिसृषु । दैर्घश्रवसमेकस्याम् । नौधससमन्त-यौधाजयानि सामतृचः । संहितस्थाने संहितसुरूपोत्तरस्वाशिरामर्काः सामतृचः । अन्यत् चतुर्थस्याग्निष्टोमवत् । सप्तदशो माध्यंदिनः पवमानः । पञ्चदशो होतुः पृष्ठमिति विशेषः ॥

अथ पञ्चाग्निष्टोमाः । पूर्वोक्ताग्निष्टोमेष्वादितः पञ्चाग्निष्टोमेषु इन्द्र जुषस्वेति गौरीवितेनात्यग्निष्टोमकरणात् पञ्चाग्निष्टोमाः ॥

प्रथमद्वितीययोः श्यावाश्वस्य स्थाने नानदमधुश्चुन्निधन-श्यावाश्वानि सामतृचः । तृतीयस्य नानदान्धीगवश्यावाश्वानि सामतृचः । चतुर्थस्य प्रथमाग्निष्टोमादनुष्टुप्पञ्चमस्य मधुश्चुन्निधनस्य स्थाने श्यैतम् । पूर्ववदनुष्टुबिति विशेषः ॥

पञ्चोक्थ्याः । प्रथमतृतीयपञ्चमानां साकमश्वसौभरो-द्वंशीयानि उक्थानि । अन्यत् सर्वं प्रथमतृतीयपञ्चमाग्निष्टोमवत् । द्वितीयचतुर्थयोः प्र वो वाजाभिद्यवो य एक इद्-गायन्ति त्वेति सत्रासाहीयत्रैककुभोद्वंशीयान्युक्थानि । अन्यद् द्वितीयचतुर्थाग्निष्टोमवत् ॥

अथ षोडशिनः । पञ्चस्वप्युक्थ्येषु इन्द्र जुषस्वेति गौरीवितेन षोडशिकरणात् पञ्च षोडशिनः । अत्यग्निष्टोमवदानुष्टुभानि

---

4. B[1] Om. पुनानः···सामतृचः (L. 7)

7. M[1] °दशं for °दशो

9. M[1] पञ्चात्यग्निष्टोमाः for पञ्चाग्निष्टोमाः

सामानि। उक्तेष्वेव षोडशिषु अतिरात्रत्वकरणात् पञ्चातिरात्राः। उद्वंशीयस्य स्थाने नार्मेधमिति विशेषः ॥१४॥

[ दशरात्रप्रबर्हः ]

अथ प्रबर्हसंज्ञान् दश यज्ञानाह—

**अथातो दशरात्रप्रबर्हः ॥१५॥**

इति। दशरात्रादेकैकस्मादह्नः एकैकं स्तोत्रं प्रवृह्य पृथक्कृत्य निधानात् एतस्य दशरात्रप्रवर्हत्वम्। बृह वृद्धाविति धातोः घञ् प्रत्ययः। उपसर्गवशाद्धातूनामनेकार्थत्वात् अत्र पृथक्करणमर्थः ॥१५॥

तस्य क्लृप्तिमाह—

**प्रथमस्याह्नो बहिष्पवमानं प्रथमं चाज्यम्। द्वितीयस्य द्वितीयम्। तृतीयस्य तृतीयम्। चतुर्थस्य चतुर्थम्। पञ्चमस्याह्नो माध्यंदिनः पवमानः। षष्ठस्याह्नो होतुः पृष्ठम्। सप्तमस्य द्वितीयम्। अष्टमस्य तृतीयम्। नवमस्य चतुर्थम्। दशमस्याह्नः आर्भवश्चाग्निष्टोमसाम च। सर्वाणि स्वस्तोमानि ॥१६॥**

इति। स्पष्टम्। अस्य क्लृप्तिः। उपास्मै-उपोषु-पवमानस्य ते कव-इति बहिष्पवमानम्। नवाहयोगाभावादस्य प्रत्नानवर्चस्य निवृत्तिः। अग्न आयाहि मित्रं वयम्-इन्द्रेण संहि-इयं वामस्येति आज्यानि। अर्षासोमेति गायत्रयणवशाकलवार्शानि। सोम उष्वेति मानवोत्तरानूपवाग्नेस्त्रिणिधनानि। इन्दुर्वाजीति सम्पान्त्या। रेवतीर्णेति वारवन्तीयं होतुः पृष्ठम्। वामदेव्यनैपातिथसमन्तानि

14. M[3] °ष्टोमश्च for ष्टोमसाम च

18. M[3] नियुक्तिः for निवृत्तिः

प्रशास्तृब्रह्माच्छावाकानां पृष्ठानि। स्वादिष्ठयेति गायत्रसंहिते। पवस्वेन्द्रमच्छेति सफरोहितकूलीये। पर्यूष्विति श्यावाश्वान्धीगवे। परि प्र धन्वेति वाजिजित्। सूर्यवतीषु कावमन्त्यम्। यज्ञायज्ञीयमग्निष्टोमसाम। त्रिवृद्बहिष्पवमानं होतुराज्यं च। पञ्चदशं मैत्रावरुणस्य। सप्तदशं ब्रह्मणः। एकविंशम् अच्छावाकस्य। त्रिणवो माध्यंदिनः पवमानः। त्रयस्त्रिंशं होतुःपृष्ठम्। चतुर्विंशं प्रशास्तुः। चतुश्चत्वारिंशं प्रशास्तुः। चतुश्चत्वारिंशं ब्रह्मणः। अष्टाचत्वारिंशमच्छावाकस्य। चतुर्विंश आर्भवः। त्रयस्त्रिंशोऽग्निष्टोमः। इति स्तोमः। वारवन्तीयस्य धर्मा न कार्याः। षट्पृष्ठैरसंयुक्तत्वात्। तदुक्तं निदाने—न ह्यवान्तरविप्रयोगे बृहद्रथन्तरयोः साम्प्रयोगिका धर्माः क्रियन्ते छन्दोमेषु (उ० ग्र० सू० ३.५) इति। कथं विप्रयुक्तानामिति। संयुक्ताम्नानात्। कथं विप्रयुक्तानां प्रतियामेति। अथापि बृहद्रथन्तरयोः संप्रयुक्तयोः एवेतरैः पृष्ठैः रथव्यतिवर्तनं च दुन्दुभ्याहननं च भवति। नासंप्रयुक्तयोः। महानम्नीनां तु विप्रयुक्तानामपि ध्रुवमुद्घोषं मन्यन्ते ह्यासामेष स्वाध्यायधर्मो भवतीति। नापां निधनं यजुषा स्यादिति। अत्र मानसस्तोत्रस्य दशरात्राङ्गत्वपक्षे कर्तव्यत्वम्। दशमाङ्गत्वपक्षे न कर्तव्यत्वम्। एवं च सति विकल्प इति प्राप्ते कल्पकारेण सर्वाणि स्वस्तोमानीत्युक्तत्वात् स्तोमसाम्नामेव प्राप्तिः। न तु तद्धर्माणाम्। इति मानसस्य न प्रवृत्तिः। यत्र धर्मानाचार्यो

---

4. B[1] पञ्चदशस्य for पञ्चदशम्

9. B[2] M[3] अयुक्तत्वात् for असंयुक्तत्वात्

12. M[3] B[2] प्रयुक्तानां प्र° for विप्रयुक्तानां प्र°

13. M[1] प्रैष्ठ° for पृष्ठैः

14. B[1] My M[3] Om. दुन्दुभ्याहननं च

15. B[2] ध्रुवमुदाघोषं, M[3] ध्रुवमुदघोषं for ध्रुवमुद्घोषं

17. B[2] M[3] Om. दशमाङ्गत्वपक्षे न कर्तव्यत्वम्

19. B[1]My सस्तोत्रीयाणि सधर्माणीति for इत्युक्तत्वात्; M[3] होम° for स्तोम; B[1-2] My Cm. स्तोम°

वाञ्छति तत्र विशिष्य विधत्ते। यथा ब्रह्मसामपृष्ठषडहे। ब्रह्मसामानि पृष्ठानि सस्तोत्रीयाणि सधर्माणीति। अत्र प्रबर्हेषु दशस्वपि दशरात्रात् समूढात् क्लृप्तिः। तदुक्तं निदाने—अथैतेषु द्वादशप्रबर्हेषु इति खण्डान्ते यो द्वादशाहस्य दशाहानीति च अन्यद्द्वादशाहविचारान् यथा विराट् संपन्नमनुरूपाग्निष्टोमसामानमिति व्यूढात् प्रतीयात्। अथेमान् समूढात् प्रतीयात् सदृशव्यापातात् (उ० ग्र० सू० ३.२) इति ॥१६॥

[ द्वादशाहप्रबर्हः ]

द्वितीयमाह—

**अथातो द्वादशाहप्रबर्होऽतिरात्रस्य बहिष्पवमानम्। प्रथमस्याह्नः प्रथममाज्यम्। द्वितीयस्य द्वितीयम्। तृतीयस्य तृतीयम्। चतुर्थस्य चतुर्थम्। पञ्चमस्याह्नो माध्यंदिनः पवमानः। षष्ठस्याह्नो होतुः पृष्ठम्। सप्तमस्य द्वितीयम्। अष्टमस्य तृतीयम्। नवमस्य चतुर्थम्। दशमस्याह्न आर्भवः। अतिरात्रस्याग्निष्टोमसाम। सर्वाण्येव स्वस्तोमानि ॥१७॥**

इति। स्पष्टम्। उप-द्वि-पवेति बहिष्पवमानम्। एकविंशमग्निष्टोमसाम। अन्यत् सर्वं दशरात्रप्रबर्हवत्। एतयोः स्तोत्रप्रबर्हाविति नाम ॥१७॥

इति द्वितीये प्रपाठके सप्तमः खण्डः ॥७॥

---

6. M[3]B[2] Om. second प्रतीयात्

7. B[1] सदृशाध्यापाता for सदृश व्यापातात्

अष्टमः खण्डः

अथ सवनप्रबर्हांश्चतुर आह—

**अथातः सवनप्रबर्हा भवन्ति चत्वारः ॥१॥**

**प्रथमस्याह्नः प्रातःसवनम् । चतुर्थस्य माध्यंदिनं सवनम् । सप्तमस्य तृतीयसवनम् ॥२॥**

इति । स्पष्टम् । उपास्मै-उपोषु-पवमानस्य ते कव इति बहिष्पवमानम् । अग्न-आनो-मित्रायाही-न्द्राग्नीत्याज्यानि । पवस्व दक्षेति गायत्राथर्वणनिधनकामानि । तवाहं सोमेति आष्टादंष्ट्रोत्तराभीशवस्वःपृष्ठाङ्गिरसानि । सोमः पवते इति जनित्रमन्त्यम् । वैराजं होतुः पृष्ठम् । अत्र न पृष्ठधर्माः । वामदेव्यत्रैशोकभारद्वाजस्यपृश्नीनीति पृष्ठानि । यस्ते मद इति गायत्राध्यर्धेडंसोमसाममौक्षाणि सामतृचः । अग्नेरर्कास्तिसृषु यद्वा गायत्रस् (त्रं ?) तिसृषु । अग्नेरर्काध्यर्धेडंसोमसाममौक्षाणि सामतृचः । एष स्य धारया—सखा य आनिषीदतेति शार्करप्लवौ । पुरोजितीति आत्रेयं च कार्तयशं च । प्रवाज्यक्षेति सौहविषम् । प्रो अयासीदिति यज्ञसारथ्यन्तं यज्ञायज्ञीयमग्निष्टोमसाम । त्रिवृत् प्रातःसवनम् । एकविंशं माध्यंदिनम् । चतुर्विंशं तृतीयसवनम् ॥२॥

द्वितीयमाह—

**द्वितीयस्य प्रातःसवनम् । पञ्चमस्य माध्यंदिनं सवनम् । अष्टमस्य तृतीयसवनम् ॥३॥**

17. M[1] after इति adds ऐडं

इति। स्पष्टम्। अस्य क्लृप्तिः। पवस्व वाचः—पवस्वेन्दो-वृषा सोम-वृषा ह्यसि-पवमानस्य ते वयम् (सा० ७७५-८६) इति बहिष्पवमानम्। अग्निदूतम्-मित्रं वयम्—इन्द्रमिद्-गेन्द्रे अग्ने-(सा० ७९०-८०२)त्याज्यानि। अर्षा सोमे-(सा० ६६४-६)ति गायत्रयण्वशाकलवार्शानि। सोम उष्वे-(सा० ६६७-८)ति मानवोत्तरानूपत्राग्नेस्त्रिणिधनानि। इन्दुर्वाजीति सम्पान्त्या। महानाम्न्यः होतुः पृष्ठम्। पृष्ठधर्मा न कार्याः। तूष्णीमुदघोषः कार्यः। न यजुषा। अपां निधनम्। वामदेव्यबार्हद्गिररायोवाजीयानि प्रशास्तृब्रह्माच्छावाकानां पृष्ठानि। पवस्व देव आयुषगि-(सा० १२३५-७)ति गायत्र-स्वाशिरामर्कसुरूपाद्यभासकाक्षीवतगायत्रसमासितानि। अभिद्युम्नं-प्राणा शिशुरि-(सा० १०११-५)ति ऐषिरत्रैते एकर्चयोः। अभी नो वाजसातमम् (सा० १२३८-४०) इति स्वारंकौत्सैडं-कौत्सपदनिधनशुद्धाशुद्धीयक्रौञ्चाद्यरयिष्ठौदलानि। स्वासु धर्मा हा उ धर्तेति ऐडंशार्ङ्गमन्त्यम्। यज्ञायज्ञीयमग्निष्टोमसाम। पञ्चदशं प्रातःसवनम्। त्रिणवं माध्यंदिनं सवनम्। चतुश्चत्वारिंशं तृतीयसवनम्। चतुश्चत्वारिंशस्य पचपञ्चेति विष्टुतिः कार्या। तद्यथा—पञ्चदशभ्यो हिंकरोति। स तिसृभिः स एकादशभिः। स एकया। चतुर्दशभ्यो हिंकरोति। स एकया। स तिसृभिः। स दशभिः। पञ्चदशभ्यो हिंकोति। स एकादशभिः। स एकया। स तिसृभिरिति। तदुक्तं सूत्रे—तथा कुर्यादहर्भाजि पथ्या-मन्यत्रे-(ला० श्रौ० ६, २, २३-४)ति ॥३॥

अथ तृतीयमाह—

**तृतीयस्य प्रातःसवनम्। षष्ठस्य माध्यंदिनं सवनम्। नवमस्य तृतीयसवनम् ॥४॥**

1. M[3] क्लृप्तिमाह for क्लृप्तिः
8. B[1] Om. तूष्णीम्…निधनम्; M[1] Om. न
9. M[3]B[3] after वाजीयानि add च
21. B[1] My ग्रहिर् for अहर्

इति। स्पष्टम्। अस्य क्लृप्तिः—दवि द्युतत्या-(सा० ६५४-६)-एते-राजा-तं त्वा नृम्णानि (सा० ८३०-४०) पञ्चर्चम्। इषे-(सा० ८४१-३)ति बहिष्पवमानम्। अग्निना-मित्रंहुवे-इन्द्रेण-ता हुवे (सा० ८४४-५५) इत्याज्यानि। इन्द्राये-न्दवि-(सा० १०७६-८)ति गायत्रेषोवृधीयक्रौञ्चवाजिदावर्य-रैवतानि। मृज्यमान (सा० १०७९-८०) इति स्वारमौक्ष्णो-रन्ध्रैडमौक्ष्णोरन्ध्रवाजजिद्वरुणसामगोष्ठाः। अया पवस्वे-(सा० १२१६-८)ति इहवद्वासिष्ठमन्त्यम्। रेवतीर्ण (सा० १०८४-६) इति वारवन्तीयं होतुः पृष्ठम्। अत्र पृष्ठधर्मा न कार्याः। वामदेव्यऋषभरैवतश्येनाः। प्रशास्तृब्रह्माच्छावाकानां पृष्ठानि। त्वं सोमे-(सा० १३२३-५)ति गायत्राश्वसूक्तशाम्मदवसु-निधनप्रतीचीनेडंक्रशीतहाविष्कृतानि। त्वं ह्यङ्ग दैव्य (सा० ६३८-९) पवस्व देव वीतये (सा० १३२६-८) इति स्वारं सौपर्णवैश्वमनसे। परि त्यमि-(सा० १३२९-३१)ति आसि-तोत्तरदीर्घतमसोऽर्काभ्यस्ताकूपाराणि सामतृचः। निहवयद्वा-हिष्ठीयासिताद्यसाध्राकूपाराणि। स्वासु विधर्मः। असावि सोमे-(सा० १३१६-८)ति ऐडं याममन्त्यम्। यज्ञायज्ञीयमग्निष्टोम-साम। सप्तदशं प्रातःसवनम्। त्रयस्त्रिंशं माध्यंदिनं सवनम्। अष्टाचत्वारिंशं तृतीयं सवनम्। इति सप्त-दशत्रयस्त्रिंशाष्टाचत्वारिंशस्तोमानां पर्याया एव विष्टुतयः कार्याः ॥४॥

अथ चतुर्थमाह—

**अतिरात्रस्य प्रातःसवनम्। दशमस्य माध्यं-**

---

7. B[3]M[3] Om. ऐडमौक्ष्णोरन्ध्र°

14. B[1] Om. आसितोत्तर°

15. B[2] °तमसोऽभ्यस्त° for °तमसोऽर्काभ्यस्त°

20. B[1-2] M[3] पथ्याः for पर्यायाः

**दिनं सवनम् । अतिरात्रस्यैव तृतीयसवनम् । सर्वाणि स्वस्तोमानि ॥५॥**

इति । स्पष्टम् । अस्य क्लृप्तिः । उप-दवि-पवेति बहिष्पवमानम् । अग्न-आ नो मित्रायाहीन्द्राग्नीत्याज्यानि । उच्चा त इति गायत्रामहीयवाजिगाभीकानि । पुनानः सोमेति उत्सेधमैधातिथनिषेधाः । आजागृवि-( सा० १३५७-९ )रिति औशनमन्त्यम् । स्वासु रथन्तरं होतुः । वामदेव्यं प्रशास्तुः । उदु त्ये मध्वि-(सा० १३६२-३)ति अभीवर्तं ब्रह्मणः । स्वासु कालेयमच्छावाकस्य । स्वादिष्ठये-(सा० ६८९-९१)ति गायत्रसंहिते । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफपौष्कले एकर्चयोः । पुरोजिती-(सा० ६९७-९)ति श्यावाश्वान्धीगवे । स्वासु कालेयमन्त्यम् । यज्ञायज्ञीयमग्निष्टोमसाम । त्रिवृत् बहिष्पवमानम् । पञ्चदशान्याज्यानि चतुर्विंशं माध्यंदिनं सवनम् । सप्तविंश आर्भवः । एकविंशोऽग्निष्टोम इति ॥५॥

प्रकारान्तरेण सवनप्रबर्हाश्चत्वारः । तेषु प्रथममाह—

**अथातः सवनप्रबर्हा एव चत्वारः ॥६॥**

**प्रथमस्याह्नः प्रातःसवनम् । द्वितीयस्य माध्यंदिनं सवनम् । तृतीयस्य तृतीयसवनम् ॥७॥**

इति । स्पष्टम् । अस्य क्लृप्तिः । उपास्मै-उपोषु-पवमानस्य ते कव इति बहिष्पवमानम् । अग्न-प्रानोमित्रायाहीन्द्राग्नीत्याज्यानि । वृषा पवस्वे-(सा० ८०३-५)ति गायत्रयौक्ताश्वे । पुनानः सोमेति ऐडमायास्यत्रिणिधनमयास्ये । वृषा शोण

---

11. My कावम् for कालेयम्

(सा० ८०६-८) इति वासिष्ठमन्त्यम् । बृहद्वामदेव्यश्यैतमाधुच्छन्दसानि पृष्ठानि । तिस्रो वाच (सा० ८६९-७१) इति गायत्रपाष्ठौहे । आ-सोता-(सा० १३६४-५)-सखाये-(सा० ११५७-९)ति वाचःसामशौक्ते एकर्चयोः । सुतासो मे-(सा० ८७२-४)ति स्वारत्रिणिधने त्वाष्ट्रीसामनी । पवित्रं त (सा० ८७५-७) इति अरिष्टमन्त्यम् । यज्ञायज्ञीयमग्निष्टोमसाम । त्रिवृत् प्रातःसवनम् । पञ्चदशं माध्यंदिनं सवनम् । सप्तदशं तृतीयसवनम् इति ॥७॥

अथ द्वितीयमाह—

**चतुर्थस्य प्रातःसवनम् । पञ्चमस्य माध्यंदिनं सवनम् । षष्ठस्य तृतीयसवनम् ॥८॥**

इति । स्पष्टम् । अस्य क्लृप्तिः । पवमानो अजीजनत् (सा० ८८९-९१)—पुनानो अक्रमीदभि (सा० ९२४-६)—प्रयद्गा-(सा० ८९२-७)षड्चम् । आशु-(सा० ८९८-९३)षड्चम् । हिन्वन्ती-(सा० ९०४-६)ति बहिष्पवमानम् । अग्निर्वृत्राणि-(सा० १३८६-८) अयं वाम्-इन्द्रो दधि-इयं वाम्-(सा० ९१०-८) इत्याज्यानि । अर्षासोमे-(सा० ९९४-६)ति गायत्रयएवशाकलवार्शानि । सोम उष्वे-(सा० ९९७-८)ति मानवानूपवाग्राग्नेस्त्रिणिधनानि । इन्दुर्वाजी-(सा० १०१९-२१)ति सम्पान्त्या । महानाम्न्यो होतुः पृष्ठम् । अत्र पृष्ठधर्मा न कार्याः । तूष्णीमुदघोषं जनयेयुः । स्तोत्रादावद्भिर्नोपाकरणम् । अन्ते मन्त्रेण नापांनिधनम् । वामदेव्यबार्हद्गिररायोवाजीयानि प्रशास्तृ-

1. B[2]M[3] after बृहद् add च

21. B[2]M[3] अतो for अन्ते

ब्रह्माच्छावाकानां पृष्ठानि । परिस्वान (सा० १३१५) इति गायत्रतृतीयाद्यचतुर्थवैदन्वतानि । स सु-तं वः सखे-(सा० १०९६-११००)ति दीर्घकार्णश्रवसे । सोमाः पवन्त (सा० ११०१-३) इति स्वारंक्रौञ्चमधुश्चुन्निधनवाङ्निधनक्रौञ्चैड-क्रौञ्चानि । ज्योतिर्यज्ञस्ये-(सा० १०३१-३)ति मरुतां धेन्वन्त्यम् । यज्ञायज्ञीयमग्निष्टोमसाम । एकविंशं प्रातःसवनम् । त्रिणवं माध्यं-दिनं सवनम् । त्रयस्त्रिंशं तृतीयसवनम् । इति ॥८॥

अथ तृतीयमाह—

**सप्तमस्य प्रातःसवनम् । अष्टमस्य माध्यं-दिनं सवनम् । नवमस्य तृतीयसवनम् ॥९॥**

इति । स्पष्टम् । अस्य क्लृप्तिः । ये सोमासः-(सा० ११६३--५)-प्रस्वा-(सा० १११९-२७) नवर्चम् । असृग्र-(सा० ११२८-३६)न्नवर्चम् । आ ते दक्ष-(सा० ११३७-९)मिति बहिष्पवमानम् । ऋतावनम्-प्रवो (सा० १०५८-६०) मित्राय-इन्द्रायाहि-तमीडिष्वे-(सा० ११४३-५१) त्याज्यानि । अध्वर्यो अद्रिभि-(सा० १२२५)रिति गायत्रवैरूपाशुभार्गवमार्गीयव-सौमित्रैटतसाक्रमश्वविलम्बसौपर्णानि । अभि सोमास (सा० ८५६-८) इति द्विर्हिंकारं वामदेव्यं प्रथमायाम् । गायत्रपार्श्व-पौरुहन्मनद्वैगतहारायणाच्छिद्राणि । प्र हिन्वान (सा० ५३६) इति बार्हदुक्थम् । उहुवाइ शिशुमिति वासिष्ठमन्त्यम् । रथन्तरवामदेव्य-नैपातिथवैयश्वानि पृष्ठानि । त्वं सोमे-(सा० १३२३-५)ति गायत्राश्वसूक्तशाम्मदद्दावसुनिधनप्रतीचीनेडंकाशीत हाविष्कृतानि । त्वं ह्यङ्ग दैव्य-पवस्व देववीतये (सा० १३२६-८) इति स्वारंसौपर्णवैयश्वमानसे । परि त्यमि-(सा० १३२९-

8. B[2]M[3] तृतीयसवनम् for तृतीयम्

३१)ति आसितोत्तरदीर्घतमसोऽर्काभ्यस्ताकूपाराणि सामतृचः । निहव-यद्वाहिष्ठीयासिताद्यसाग्राकूपाराणि । स्वासु विधर्म । असावि सोमे-(सा० १३१६-८)ति ऐडं याममन्त्यम् । यज्ञायज्ञीयमग्निष्टोम-साम । चतुर्विंशं प्रातःसवनम् । चतुश्चत्वारिंशं माध्यंदिनं सवनम् । अष्टाचत्वारिंशं तृतीयसवनम् । इति ॥९॥

अथ चतुर्थमाह—

**अतिरात्रस्य प्रातःसवनम् । दशमस्य माध्यंदिनं सवनम् । अतिरात्रस्यैव तृतीसवनम् । सर्वाण्येव स्वस्तोमानि ॥१०॥**

इति । स्पष्टम् । चतुर्थसवनप्रबर्हाग्निष्टोमवत् क्लृप्तिः कार्या । अष्टसु सवनप्रबर्हेषु पूर्वेषां चतुर्णां संक्रमद्वादशाहात् प्रबृम्हणम् । उत्तरेषां चतुर्णां प्राकृतद्वादशाहात् प्रबृम्हणम् ॥१०॥

इति द्वितीये प्रपाठके अष्टमः खण्डः ॥८॥

---

नवमः खण्डः

अथावापान्तमग्निष्टोममाह—

**अथात आवापवानेकाहोऽपि चर्त्विगपोहन इत्या-चक्षते ॥१॥**

इति । ऋत्विजामपोहनं निरसनं यस्मिन् सः तथोक्तः । साम्नामावापेऽकाममपर्याप्तमसमर्थमित्यर्थः । तमपोह्य अन्य-मुद्गातारं वृणुयात् । तदुक्तं निदाने—अथैष अवापवानेकाहः

---

16. B[1]My एव for अतः

18. B[1] निवसनं, B[2] निरवसनं for निरसनं

ऋत्विजः काम्यमपोह्य अन्यं वरयिष्यति इत्येवमर्थो भवति ( उ० ग्र० सू० ३. ३ ) इति । अस्यार्थः । ऋत्विजः अपोह्य काम्यम् । काममर्हतीति अर्हार्थे यत्प्रत्ययः । स्वस्य कामनाविषयावापिकसामगानपर्याप्तमन्यमुद्गातारं वरयिष्यति । कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् (अ० को० २. ६.५७) इत्यमरः ॥१॥

साम्नामावापस्थानमाह—

**अन्तरेणानुरूपपर्यासौ ॥२॥**

इति । अनुरूपो दवीति तृचः । पर्यासः पवमानस्येति तृचः । अनयोर्मध्यमावापस्थानमित्यर्थः ॥२॥

**गायत्राणि पावमानानि तृचसूक्तान्यावपेद्यावन्ति कामयेत ॥३॥**

इति । पवमानसंबन्धीनि पावमानानि । न त्वाग्नेयादीनि । उत्तरग्रन्थे बहिष्पवमानसंबन्धीन्येव दशरात्रैकाहसंवत्सराहीनसत्रगतानि तृचचतुर्ऋचपञ्चर्चादीन्यावपेत् । न तु माध्यंदिनार्भवसंबन्धीनि गायत्राणि । तृचानि च सूक्तानि च तृचसूक्तानि । सूक्तशब्देन चतुर्ऋचपञ्चर्चादीनामग्रहणम् । यावन्तीति स्तोमादिसंख्यां विनेत्यर्थः ॥३॥

---

1. $B^{1-2}$ My S वरयिष्य for वरयिष्यति ; $M^1$ वा for इत्येवम्
3. $B^2$ प्रत्ययस्य for स्वस्य
4. S. वरयिष्य for वरयिष्यति
9. $M^1$ मध्यमम् for मध्यम्
15. $B^1MyB^2M^3$ तृचाश्वसूक्तानि for तृचानि च सूक्तानि च
16. $B^2MyM^3$ ग्रहणम् for अग्रहणम्

माध्यंदिनपवमाने आवापस्थाने आह—

**अन्तरेण गायत्रामहीयवे गायत्रीसामान्यावपेद्यावन्ति कामयेत । अन्तरेण रौरवयौधाजये बार्हतानि सामान्यावपेद्यावन्ति कामयेत ॥४॥**

इति । स्पष्टम् । वृषा पवस्वेत्यादि गायत्राणि । तवाहं सोम रारणेत्यादिबार्हतानि ॥४॥

आर्भवे आवापस्थाने आह—

**अन्तरेण गायत्रसंहिते गायत्रीसामान्यावपेद्यावन्ति कामयेत । अन्तरेण श्यावाश्वान्धीगवे आनुष्टुभानि सामान्यावपेद्यावन्ति कामयेत ॥५॥**

इति । यस्ते मद इत्यादि गायत्राणि । अयं पूषा रयिर्भग इत्याद्यानुष्टुभानि ॥५॥

साम्नामावापे नियममाह—

**यथापथम् ॥६॥**

इति । तस्य तस्य स्थानमनतिक्रम्येत्यर्थः । बहिष्पवमानसंबन्धीनि गायत्राणि न माध्यंदिनार्भवयोरावपेत् । तयोः संबन्धीनि न तत्र । एवमन्योन्यस्थानव्यत्सासो न कार्य इति भावः ॥६॥

---

11. B[1] आदीनि for आदि

12. B[1] आद्यानि for आदि

14. P. Om. यथायथम्

17. M[3]B[3] before तत्र Om. न

गायत्रबार्हतानुष्टुभानां वेदगतानां सर्वेषां साम्नामावापे प्राप्ते नियममाह—

**यथा वाजामि कल्पयिष्यन्मन्येत तथा कल्पं कुर्वीत ॥७॥**

इति । जामिदोषं संचारदोषं च परिहृत्यावपेदित्यर्थः ॥७॥

आवृत्तिस्तोत्रेष्वप्यावापप्राप्तावाह—

**विष्टुतिस्तोत्राण्यावर्तीनि भवन्ति ॥८॥**

इति । विष्टुतिभिः पञ्चदशभिः क्रियमाणानि स्तोत्राणि आवर्तीनि आवर्तनीयान्येव । न तु आवापार्थं सकृद् गीत्वा सामान्योप्य गायेदित्यर्थः ॥८॥

अथ श्रीस्तोमसंज्ञं चतूरात्रमेकाहमग्निष्टोममाह—

**अथातः श्रीस्तोमाश्चत्वारोऽपि च वाचस्तोमा इत्याचक्षते ॥९॥**

इति । श्रीवाचोरभेदात्तयोः पर्यायत्वम् । श्रीर्वै वाचोऽग्रं श्रियमेवास्मिन् दधाति (तां० ब्रा० ६.९.१२) इति श्रुतेः । ऋचः सामानि यजूंषि सा हि श्रीरमृता सताम् (तै०ब्रा० १.२.१.२६) इति तैत्तिरीयश्रुतेः । भद्रैषां लक्ष्मीर्निहिताधिवाचि (ऋ० वे० १०.७१.२) इति ऋग्वेदात् । आवसथे श्रियं मन्त्रमिमं मन्त्रमेवैतेन श्रियं स्पृणोति (तै० ब्रा० ३. ७. ४. ६) इति श्रुतेः । तदाहुः—किं सुब्रह्मण्यायै सुब्रह्मण्यात्वम् इति । वागेवेति ब्रूयात् । वाग्वै ब्रह्म च सुब्रह्म च (ऐ०ब्रा० ६.३) इत्यैतरेयब्राह्मणे । षड्विंशे

---

3. यथा यथा for यथा ; P. च for वा ; P. तथा तथा for तथा

10. S अपि for ओप्य

18. B[2] Om. second मन्त्रं ; M[3] Om. इमं मन्त्रं

19. M[3] स्तृणोति for स्पृणोति

च—ब्रह्म च वा इदमग्रे सुब्रह्म चास्ताम् (ष० विं० १.१.१) इत्यारभ्य ब्रह्म श्रीर्वै नामैतत् साम यत् सुब्रह्मण्या (ष० विं० १. २.१०) इति उपसंहारात् श्रीवाचोरभेदः। अत्र एकयज्ञत्वेऽपि श्रीस्तोमा इति बहुवचनं चतुःसंख्या च अवयवभूताभिप्रायेणेति मन्तव्यम्। तदुक्तं निदाने—अथैते वाचस्तोमाः बहून्यादिश्याहानि भवन्ति। अहःकल्पाहास्तेनैवैकाहवचनीया वाहीना अन्यैवेयं तृतीया जातिर्भवति। तद्यथा चातुर्मास्यानि राजसूयं च नैवैकाहौ प्रतिजानीते। नाहीनौ। तादृशमेव तद्भवती- (उ० ग्र० सू० ३.३)ति। तस्माद्वरुणप्रघासद्व्यहसाकमेधत्र्यहवत् राजसूयव्युष्टिद्विरात्रवत् एकाहत्वम्। तदुक्तं सूत्रे—अन्यत्र चातुर्मास्य- राजसूयाभ्याम् (?) इति। कल्पकारस्यापि चतुर्णामह्नामेकयैव क्लृप्तिवचनात् इदमेव हृदयम् ॥९॥

चतुर्णामह्नामेकयैव बहिष्पवमानस्य क्लृप्तिमाह—

**एकया प्रथमस्य बहिष्पवमानम्। दशभिर्द्वितीयस्य। शतेन तृतीयस्य। सहस्रेण चतुर्थस्य ॥१०॥**

इति। प्रथमस्याह्नः एकया एकस्तोत्रीययेत्यर्थः। द्वितीयस्याह्नः दशभिः स्तोत्रीयाभिरित्यर्थः। एवं तृतीयचतुर्थयोः शतसहस्रयोरपि। अत्र प्राकृतानामेव बहिष्पवमानतृचानां ह्रासवृद्धी कार्ये ॥१०॥

चतुर्णामह्नामाज्यादिस्तोत्रेषु स्तोमसंख्यां विधत्ते—

**अथात ऊर्ध्वं दशक्रमात् ॥११॥**

इति। प्रथमे दशभिः। द्वितीये शतेन। तृतीये सहस्रेण। चतुर्थेऽयुतेनेति। एवं बहिष्पवमानादूर्ध्वम् उत्तरोत्तरं दशगणित- संख्यया प्रत्यहं स्तोमो वर्धयितव्य इत्यर्थः ॥११॥

---

6. M[1] तेनेव for तेनैव

8. B[1] M[1] °जानते for जानीते; M[1] My Om. एव; M[1] My एतत् for तत्

प्रथमस्याह्नः स्तोमक्लृप्तिमाह—

**दशभिर्होतुराज्यम् । शतेन मैत्रावरुणस्य । सहस्रेण ब्राह्मणाच्छंसिनः । अयुतेनाच्छावाकस्य । प्रयुतं माध्यंदिनः पवमानः । नियुतं होतुः पृष्ठम् । अर्बुदं मैत्रावरुणस्य । न्यर्बुदं ब्राह्मणाच्छंसिनः । निखर्वमाच्छावाकस्य । बद्वमार्भवः । अक्षितमग्निष्टोमसाम ॥१२॥**

इति । स्पष्टम् । एवं प्रथमस्याह्नः स्तोमक्लृप्तिः ॥१२॥

द्वितीयस्य बष्पिवमानप्रभृतिदशाद्युक्तसंख्याक्रमेण आर्भवान्तं स्तोमे क्लृप्ते अग्निष्टोमसाम्नः स्तोमक्लृप्तिं पूर्वाह्णाग्निष्टोमसामस्तोमसंख्यामनुद्रवन्नाह—

**अक्षितमार्भवो व्योमाग्निष्टोमसाम ॥१३॥**

इति । स्पष्टम् ॥१३॥

तृतीयस्य बहिष्पवमानाद्यार्भवान्तं शतादिव्योमान्ते क्लृप्तेऽग्निष्टोमसाम्नः स्तोममाह—

**व्योमार्भवोऽनन्तोऽग्निष्टोमसाम ॥१४॥**

इति । गतम् ॥१४॥

तथा चतुर्थस्य बहिष्पवमानाद्यार्भवान्तं सहस्राद्यनन्तपर्यन्तं स्तोमे क्लृप्तेऽग्निष्टोमसाम्नः स्तोममाह—

**अनन्त आर्भवः । सर्वमग्निष्टोमसाम ॥१५॥**

---

10. M[1] क्लृप्तिः for क्लृप्ते ; M[1] °क्लृप्तिः for क्लृप्तिं B[1] प्रबर्हा° for पूर्वाह्णा°;

16. P. अन्तः for अनन्तः; M[1] Om. व्योमा°···स्तोममाह (L. 19)

20. P. अन्तः for अनन्तः

इति । गतम् । अस्य प्रयोगः । एका तिस्रश्चतस्रो वा दीक्षाः । तिस्र उपसदः । चतस्रः सुत्याः । प्रत्यहमहीनसन्ततिरन्त्यवर्जं कार्या । एकोऽवभृथः । यावत्संख्यैरुद्गातृप्रस्तोतृप्रतिहर्तृभिः एकाद्यनन्तसर्वान्तस्तोमसंपत्तिः स्यात् । तावतः उद्गातृप्रस्तोतृप्रतिहर्तॄन् शतसंख्यान् सहस्रसंख्यान् अयुतसंख्यान् अपरिमितसंख्यान् वा वृणुयात् । सर्वेषां मधुपर्कः । सर्वेषां सोमाप्ययनम् । एकस्यौदुम्बर्युच्छ्रयणम् । सर्वेषां यूपोपस्थानम् । अत्राध्वर्युभिः वेदिसदसोर्वृद्धिः कार्या । सर्वेषां तीर्थप्रपदनम् । हविर्धानप्रवेशः । बहिष्पवमानऋग्जपः । एकेन द्रोणकलशप्रतिष्ठा पवित्रवितानं च कार्यम् । कलशसंस्कारत्वात् सर्वैः प्रस्तोतृभिः सर्पणकाले अध्वर्योरन्वारम्भः कार्यः । परस्परान्वारब्धप्रस्तोतॄणामुद्गातृभिरन्वारम्भः । एवमुद्गातॄणामन्वारम्भः प्रतिहर्तृभिः कार्यः । तेषां ब्रह्मणः । अत्र एकस्याप्यपच्छेदे प्रायश्चित्तमस्त्येव । सर्वेषां पृथक् पृथक् । प्रवृत्तहोमः । यथास्थानमुपदेशः । ब्रह्माहमित्यादिजपः । सर्वेषां स्तोममेको युञ्ज्यात् । यजमानं च वाचयेत् । स्तोत्रान्ते उपास्मै गायता नर (सा० ६५१) इत्यैकयैकः स्तोमः प्रथमेऽहनि । द्वितीये स्तोमस्य दशत्वात् अच्छा समुद्रमित्यस्यावृत्तिः । द्वितीयावृत्तौ रथन्तरवर्णां गायेत् । तृतीयेऽहनि एकादशकृत्वः उपास्मै गायता नरः इति नवर्च-

---

5. $B^1M^1$ °मितान् for °मितसंख्यान्

9. $B^1M^1My$ एकोन° for एकेन

11. $B^{1-2}M^1$ परम्परा° for परस्परा°

13. $B^2S$ अव° for अप°

14. $M^3$ °स्तोमः for °होमः

16. $M^3$ याचयेत् for वाचयेत्

17. S. द्वितीय° for द्वितीये

18. $M^1$ तस्यां for द्वितीयावृत्तौ ; $M^3B^2$ °वर्णाः for °वर्णां

मावर्तनीयम् । उत्तमावृत्तौ अच्छा समुद्रमित्यस्यावृत्तिः । तस्यां रथन्तरवर्णाः ! चतुर्थेऽहनि उपास्मै गायतेति नवर्चस्यैकादशाधिकशतावृत्तिः कार्या । अन्त्यावृत्तौ अच्छा समुद्रमित्यस्यावृत्तिः । रथन्तरवर्णाश्च । एवमाज्यानां यावत्स्तोमसंपत्तिः । पुनःपुनरभ्यासः । यत्रापूर्तिः स्तोमसंख्यायास्तत्र उत्तमस्तोत्रीयाया आवृत्तिः कार्या । अन्ताल्लोपो वृद्धिर्वेति न्यायात् । प्रत्यहं बृहद्रथन्तरे व्यत्यासेन कार्ये । सर्वेषां चमसभक्षणम् । महत् चमसपात्रं कृत्वा तत्र बहुलं सोममुन्नीय हुत्वा यथाक्रमं भक्षणं कुर्युः । एकेनैव पृष्ठहोमः कार्यः । पावमानानामावृत्तिस्तोत्राणां च यावद्भिरभ्यासैर्दशशतसहस्रायुतादिस्तोसंपत्तिः स्यात् तावदभ्यासः कार्यः । न तु साम्नामावापः । य एव प्रधानतया स्थित्वा औदुम्बरीं स्पृशन् बर्हिर्मुष्टिं दर्भद्वयं वा गृहीत्वा स्तौति स एव हिंकुर्यात् । स एव स्तोमं युञ्ज्यात् । यजमानं च वाचयेत् । कुशाविधानमेक एव कुर्यात् । सर्वेषां दक्षिणाप्रतिग्रहः । उद्गातृगणमात्रदक्षिणां वर्धयित्वा तेभ्यः यथाविभागं दद्यात् । सर्वे पिण्डप्रदानं सौम्यचरुभक्षणं च सोमे ह्यनुमेहीत्याद्याहवनीयोपस्थानान्तं कुर्युः । तदुक्तं निदाने—अथ यावद्भिरुद्गातृयुगैरव्यवच्छिन्नानि स्तोत्रणि वर्तिष्यमाणानि मन्येत आदित एव तावन्ति वृणीत । तेषां सर्वेषां सोमप्रवाकप्रभृतिकर्म स्यात् । ते सर्वे सर्वाण्युद्गातृकर्माणि कुर्युः । यथा द्वियज्ञबहुयज्ञेषु सर्वे यजमानाः सर्वाणि याजमानानि कुर्वन्ति एवमप्येतानि उद्गातृकर्माणि सर्वे कुर्युः । स्तोत्राङ्गानि न सर्वे कुर्युः । य एवोद्गाता स्तोत्रादिकं भजेत स स्तोमं

---

5. $M^3B^2$ आवृत्तिः, S अपूर्त for अपूर्तिः

16. $M^3$ after सर्वे ins. अपि ; $B^2$ Om. आदि

17. $M^1$ Om. अथ

20. $M^3$ after सर्वे adds: यजमानाः ; $M^3$ Om. उद्गातृकर्माणि ; $B^2$ द्वितीय° for द्वि°; $M^3$ द्वितीययज्ञ for द्वियज्ञ

23. $M^3$ यथा for य;

युञ्ज्यात् । स्तोत्रान्तं यजमानं वाचयेत् । तद्यथा तु सर्वे सर्वं स्तोत्रं भजन्ते एवमप्येतानि उद्गातृकर्माणि सर्वे कुर्युः । स्तोत्राङ्गानि च सर्वे कुर्युः । तेनेमानि वर्धिष्यमाणानि मन्येत । तावत्कृत्वोऽभ्युपनिवर्तन्ते यावत्कृत्वः स्तुवते । ( उ० ग्र० सू० ३. ३ ) इति । यावद्भिरुद्गातृयुगैरित्यत्र युगशब्दः समूहवाची । उद्गातृगणैरित्यर्थः । कृतयुगमित्यादिप्रयोगेषु युगशब्दस्य अहर्वत्सरादिसमूहवाचित्वदर्शनात् । अत्र भगवता बोधायनेन अस्मिन् कामनार्थयज्ञेऽवभृथप्रभृत्यस्तमिते यज्ञपुच्छम् । तस्य दशसु बहिष्पवमानम् । शते सहस्रेऽयुते नियुते प्रयुतेऽर्बुदे न्यर्बुदे समुद्रे मध्येऽन्ते परार्धे खद्वे (? र्वे) पल्वे (? द्मे) नित्यमुक्थम् । मनसैव स्तुवानो मन्यते । एतावति मे स्तुतमित्युक्तत्वात् । नित्यान्येव बहिष्पवमानादीनि द्वादशस्तोत्राण्यपि त्रिवृदादिस्तोमानि यथाप्रकृति स्तुत्वा दशभिः स्तुतं शतेन स्तुतं सहस्रेण स्तुतमयुतेन स्तुतमित्यादिभिरन्ते मनसा ध्यायेत् । सर्वत्रानन्तमपरिच्छिन्नमपरिमितं नारायणं ब्रह्म ध्यायेदित्यर्थः । अत्र निदानकारबोधायनवचनयोर्विरोध इति न वाच्यम् । तावत्संख्योद्गातृणामलाभात् स्तोत्राणां च कर्तुमशक्यत्वात् मनसा ध्याने सति कृतमिति चारितार्थ्यान्न विरोधः । विकल्पो वा । ऋषिवचनयोर्विरोधे विकल्पस्य न्याय्यत्वात् । इति सर्वं समञ्जसम् ॥१२॥

अथ ब्रह्मसामपृष्ठाग्निष्टोमावाह—

**अथातो ब्रह्मसामपृष्ठावेकाहौ । अपि च तनुपृष्ठावित्याचक्षते । ब्रह्मसामनी पृष्ठे पृष्ठे**

---

4. $B^{1-2}M^{3}$ repeat यावत्कृत्व : स्तुवते twice
8. S after प्रभृति ins. इति
10. My S $B^{1-2}$ पद्वे for खद्वे ; $B^{1}$ पल्प for पल्वे
15. $B^{1}$ Om. नारायणं
21. $M^{1}$ Om. अतः ; S. Om. अपि…एकाहौ । एकाहौ (P. 144, L. 2)
22. $B^{1-2}M^{1}M^{3}$My Om. ब्रह्मसामनी पृष्ठे पृष्ठे

**ब्रह्मसामनी सस्तोत्रीये सधर्मणी । तौ ब्रह्मसामपृष्ठावेकाहावेकाहौ ॥१६॥**

इति । श्यैतनौधसे तं वो दस्मम् अभिप्रव इति स्तोत्रीयाभ्यामुपसरणेन धर्मेण सह होतुः पृष्ठं प्राप्नुवतः । बृहद्रथन्तरे च त्वामिद्धयभित्वेति स्तोत्रीयाभ्यां भकाररूपधर्मेण सह ब्रह्मणः पृष्ठं प्राप्नुवत इत्यर्थः । प्रथमस्य क्लृप्तिः । होतुः पृष्ठे नौधसं सामोपधावामि । तं वो दस्ममृचम् । नौधसमृषिम् । बृहतीं च्छन्दः । सप्तदशस्तोमम् । उदीचीं दिशम् । आत्मानमिति विशेषः । ब्रह्मणः पृष्ठे रथन्तरं गेयम् । अन्यत् सर्वं प्रकृतिवत् । द्वितीयस्य श्यैतं होतुःपृष्ठम् । श्यैतं सामोपधावामीत्याद्युपसरणं कार्यम् । ब्रह्मणः पृष्ठं बृहत् । अन्यत् सर्वं प्रकृतिवत् । अभ्यासोऽध्यायसमाप्तिद्योतनार्थः ॥१६॥

इति द्वितीये प्रपाठके नवमः खण्डः ॥९॥

शतक्रतुचतुर्वेदिश्रीनिवासार्ययज्वना ।
क्षुद्रे तृतीयकोऽध्यायो व्याख्यायि प्रीतये हरेः ॥

इति श्रीमद्रामानुजसिद्धान्तस्थापनाचार्यशतक्रतुतातचार्यतनयचतुर्वेदिशतक्रतुश्रीनिवासाचार्यविरचिते क्षुद्रकल्पसूत्रभाष्ये तृतीयोऽध्यायः ॥३॥

इति आर्षेयक्षुद्रकल्पे तृतीयोऽध्यायः ॥

---

4. S. Om. उपसरणेन ··· स्तोत्रीयाभ्यां (L. 19)

7. S. Cm. after ऋचम् adds : उपधावामि

11. $M^3$ °सरणे विशेषः for सरणं कार्यम्

12. $M^3$ परिसमाप्ति° for समाप्ति°

16. $B^2$ उतरे त्रयकः, $B^1M^1$ क्षुद्रे तृतीयः $M^3$ उत्तरे तृतीयकः for क्षुद्रे तृतीयकः

19. S. after तृतीयोऽध्यायः ॥ adds :—श्रीकृष्णस्वामिश्रौतिगुरुभ्यो नमः । कौशिकगोत्रेण प्रयागकुलतिलकेन लक्ष्मणश्रौतिना तृतीयोऽध्यायः यथाग्रन्थं लिखितः । श्रीसमरपुंगवसामसमुद्राध्वरीन्द्रश्रीनिवासगुरवेङ्कटेश्वरवैद्यनाथवेङ्कटेश्वररामचन्द्रश्रीनिवासगुरुभ्यो महागुरुभ्यो नमः ॥

अथ

# चतुर्थोऽध्यायः

## द्वितीये प्रपाठके दशमः खण्डः

श्रीकल्पसूत्रोपग्रन्थकृतो गुरुवरान् भजे ।
श्रीगार्ग्यमशकद्राह्यायणकात्यायनाह्वयान् ॥

अत्र क्षुद्रकल्पसूत्रे पूर्वत्रिकेण प्रतिपदादिभिः सर्वप्रकृतिभूत-ज्योतिष्टोमविचारानुक्त्वा अतः परमुत्तरत्रिकेणाहर्गणप्रकृतिभूत-द्वादशाहविचारान् विवक्षुर्भगवान् गार्ग्यमशकाचार्यो द्वादशाहान्तर्गत-पृष्ठ्यषडहस्य द्वाविंशतिधा भिन्नान् विचारान् शाखान्तरीय-ब्राह्मणानुसारेण वक्तुमारभते—

**अथातः षडहस्य पृष्ठतो विचाराः ॥१॥**

अथ सर्वप्रकृतिभूतज्योतिर्विचारानन्तरम् । अतः ज्योति-र्विचारस्य वृत्तत्वात् हेतोः षडहस्य पृष्ठतो विचाराः आरभ्यन्त इति शेषः । पृष्ठेष्वेव सामभेदेन विविधकल्पनाविचारः । तदुक्तं निदाने—अथ पृष्ठानामनुकल्प (उ० ग्र० सू० २. ६) इति ब्राह्मणोक्तस्य—पृष्ठ्यषडहानन्तरं प्रवृत्तत्वादेतेषामनुकल्पत्वम् । न तु व्रीहिनीवारवत् प्रतिनिधित्वम् । विचारशब्देनैव विविध-कल्पस्योक्तत्वात् तेन प्राकृतषडहेन सहैते षडहविचाराः व्रीहियव-वत् विकल्पन्ते । ते च द्वाविंशतिः । आद्यः पृष्ठ्यस्तोमः । द्वितीयो नानापृष्ठ्यः । प्राकृतः परोक्षपृष्ठ्यस्तृतीयः । सर्व-

परोक्षपृष्ट्यश्चतुर्थः । उभयपरोक्षपृष्ठ्यः पञ्चमः । उपाङ्क्यपृष्ठ्यः षष्ठः । अन्वाहार्यपृष्ठ्यः सप्तमः । धर्मभेदेनोपाङ्क्यपृष्ठान्वाहार्यपृष्ठावष्टमनवमौ । पुरस्ताज्ज्योतिःषडहो दशमः । उपरिष्टाज्ज्योतिःषडह एकादशः । बृहद्रथन्तरपुरस्ताज्ज्योतिःषडहो द्वादशाहः । बृहद्रथन्तरोपरिष्टाज्ज्योतिः षडहस्त्रयोदशः । परोक्षापक्यपृष्ठ्यश्चतुर्दशः । प्रत्यक्षापक्यपृष्ठ्यः पञ्चदशः । परोक्षप्राङ्क्यपृष्ठ्यः षोडशः । प्रत्यक्षप्राङ्क्यपृष्ठ्यः सप्तदशः । बृहद्रथन्तरपृष्ठ्योऽनुगृहीतपृष्ठ्योऽष्टादशः । बृहद्रथन्तरपृष्ठ्योऽनुगृहीतपरोक्षपृष्ठ्य एकान्नविंशः । नानापृष्ठ्योऽनुगृहीतबृहद्रथन्तरो विंशः । नानापृष्ठ्योऽनुगृहीतबृहद्रन्तरपरोक्षतर एकविंशः । ब्रह्मसामपृष्ठ्यो द्वाविंशः ॥१॥

[ पृष्ठ्यस्तोमः ]

तत्र प्रथमस्वरूपमाह—

**बृहद्रथन्तरपृष्ठः षडहः समूढः ॥२॥**

इति । षट्स्वप्यहःसु रथन्तरबृहती एव व्यत्यासेन पृष्ठे यस्य षडहस्य स तथोक्तः । ब्राह्मणे व्यूढस्यैवोक्तत्वात् तद्विकृतित्वादेतस्यापि व्यूढत्वप्राप्तावाह समूढ इति ॥२॥

पृष्ठ्यस्तोमसप्तरात्रवत् क्लृप्तिमाह—

**तस्य कल्पो यथा पृष्ठ्यस्तोमस्य यथाहीनिकः ॥३॥**

इति । गतम् ॥३॥

द्वादशाहस्याहीनसत्त्रोभयात्मकत्वात् तदङ्गत्वात् पृष्ठ्यषडहस्य तत्र तत्र भूते विशेषमाह—

---

6. $B^2M^3My^1$ पृष्ठः for पृष्ठ्यः

14. $B^{1-2}$ My °पृष्ठ्यः for °पृष्ठः

16. $M^3$ तत्र for तद्

**अथ यदि सात्रिकः स एव सन् गौरीवित-स्वरः ॥४॥**

इति । स्पष्टम् । अत्र चतुर्थेऽहनि कल्पकारमतान्नानदस्तोत्रीये गौरीवितं षोडशिसाम कार्यम् । यद्वा । इन्द्रं जुषस्वेति स्वराट्सु गौरीवितं षोडशिसाम । तदुक्तं निदाने—अथ बृहद्रथन्तरपृष्ठे द्वादशाह इत्युपक्रम्य खण्डान्ते एते न मन्यन्ते स्वराज एवेह प्रत्येतव्याः । एता हि प्राकृताश्च भवन्ति । न्यायतराश्चैताश्चैवानादेशे सर्वत्र क्रतुषु प्रतियन्त्येतेनाविच्छिन्नस्य बृहद्रथन्तरपृष्ठः षडहस्य षोडशिस्तोत्रीयो व्याख्यातो यश्चैव षडहविचारेषु यश्च संसत्स्वित यश्च संसत्स्वित (उ० ग्र० सू० ३. ७) इति । स्पष्टम् ॥४॥

[ नानापृष्ठ्यः ]

द्वितीयस्वरूपमाह—

**अथातो नानापृष्ठ्यः षडहः ॥५॥**

इति । नानाविधानि नानापृष्ठानि । तेषां समूहः नानापृष्ठ्यः । पृष्ठादुपसंख्यानम् ( पा० वा० ४. २. ४२) इति यन् प्रत्ययः । रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानि पृष्ठानि ॥५॥

**समूढो वा व्यूढो वा ॥६॥**

इति । शाखान्तरीयमतात् ॥६॥

अस्मद्ब्राह्मणरीत्या च समूढव्यूढयोः अनियममुद्भाव्य नियममाह—

**समूढस्त्वेव ॥७॥**

---

4. $B^{1-2}MyM^{1}$ स्वाराट्सु for स्वराट्सु

8. $B^{1}M^{3}$ सर्वं° for सर्वत्र

14. P. °पृष्ठः for °पृष्ठ्यः

20. $B^{2}M^{3}$ अत्र for अस्मद्

इति । तु-शब्दः पक्षान्तरव्यावृत्त्यर्थः । एवकारोऽवधारणार्थः । एतस्य षडहस्य षड्भिरहोभिर्निर्वर्त्यमानत्वात् नवरात्रापूर्तेर्विच्छिन्नत्वात् त्रिष्टुप्छन्दसो व्यूढाभावाच्च समूढ एव ज्यायान् । यत्र सच्छन्दोमः पृष्ठ्यः षडहस्तत्र व्यूढसमूढयोर्विकल्पः । यत्र विच्छन्दोमस्तत्र समूढ एवेत्याचार्यस्याशयः । तदुक्तं निदाने—तदप्येवमिव ब्राह्मणं भवति । नर्ते छन्दोमेभ्यः पृष्ठ्यो व्यूहमानशः (नि० सू० ५.६) इति ॥७॥

क्लृप्तिमाह—

**तस्य कल्पो यथर्तूनां षडहस्य यद्याहीनिकः ॥८॥**

इति । स्पष्टम् ॥८॥

**अथ यदि सात्रिकः स एव सन् गौरीवितस्वरः ॥९॥**

इति । गतम् ॥९॥

[ परोक्षपृष्ठ्यः ]

तृतीयस्वरूपमाह—

**अथातः परोक्षपृष्ठः षडहः ॥१०॥**

इति । परोक्षे बृहद्रथन्तरे पृष्ठे यस्य स तथोक्तः ॥१०॥

क्लृप्तिमाह—

**तस्य कल्पः । प्रथमस्याह्नोऽ-भि त्वा शूरनोनुम (सा० ६८०—१) इति कण्वरथन्तरं पृष्ठम् । द्वितीयस्याह्नः - त्वामिद्धि हवामह**

2. M[1] तस्य for एतस्य

3. M[1] Om. समूढ…विच्छन्दोमस्तत्र (L. 5)

**(सा० ८०९–१०) इति बृहन्निधनं वार्कजम्भम् । कण्वबृहद्वा । आ त्वा सहस्रमाशतम् (सा० १३९१-३) इत्येतेषां द्वितीयम् । प्रज्ञातपृष्ठ उत्तरश्चतुरहः ॥११॥**

इति । आ त्वा सहस्र-(सा० १३९१–३)मिति वचनं कण्वबृहतो योनित्वप्रदर्शनार्थम् । न त्वत्र स्तोत्रीयार्थम् । प्रज्ञातपृष्ठ इति वैरूपवैराजशाक्वररवारवन्तीयानि प्रज्ञातानि प्रत्यक्षाणि यस्मिन् तृतीयादिचतुरहे स तथोक्तः ॥११॥

[ सर्वपरोक्षपृष्ठ्यः ]

चतुर्थस्वरूपमाह—

**अथातः सर्वपरोक्षपृष्ठः षडहः ॥१२॥**

इति । सर्वाणि रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानि परोक्षाणि पृष्ठानि यस्य स तथोक्तः ॥१२॥

षण्णां पृष्ठानां परोक्षसामान्याह—

**तस्य कल्पः । एते एव प्रथमद्वितीययोरह्नोः पृष्ठे ॥१३॥**

इति । कण्वरथन्तरकण्वबृहती कण्वरथन्तरबृहन्निधनवार्कजम्भे वा ॥१३॥

**तृतीयस्याह्नो-यद्याव इन्द्र ते शतम् ( ८६२-३ ) इति ह्रस्वाबृहद्दोपशा । अन्तरिक्षं वा ॥१४॥**

इति । स्पष्टम् ॥१४॥

**अन्तरिक्षस्य लोकेऽञ्जोवैरूपमनु कल्पयेत् ॥१५॥**

---

11. M[1] श्यैतानि for रैवतानि

इति । माध्यंदिनपवमाने अभि सोमास (सा० ८५६-८) इति तृचेऽन्तरिक्षस्य स्थानेऽञ्जोवैरूपं गायेदित्यर्थः ॥१५॥

पृष्ठस्थाने पक्षान्तरेण सामान्तरमाह—

**महावैष्टम्भं वा ॥१६॥**

इति । यद् द्याव (सा० ८६२-३) इति तृच एव ॥१६॥

संचारदोषपरिहारार्थं ब्रह्मणः पृष्ठे सामान्तरं विधत्ते—

**महावैष्टम्भस्य लोकेऽभिनिधनं काण्वम् ॥१७॥**

इति । वयं घ त्वेति तृच एव ॥१७॥

**चतुर्थस्याह्नः - पिबा सोममिन्द्र मन्दतु त्वे- ( सा० ९२७–९ ) त्यृषभोवैराजः सहोदैर्घतमसं वा हाउ पिबेत्येतत् ॥१८॥**

इति । योनौ सहोदैर्घतमसद्वये द्वितीयं गेयमित्यर्थः ॥१८॥

सामान्तरमाह—

**वसिष्ठस्य वा वैराजम्-अग्निं नर (सा० १३७३-५) इत्येतयोरुत्तरम् ॥१९॥**

इति । स्पष्टम् ॥१९॥

**पञ्चमस्याह्नस्-त्रिकद्रुकेषु महिषो यवाशिरम् (सा० १४८६-८) इति नित्यवत्साः ॥२०॥**

इति । स्पष्टम् । एतासु शक्वरीस्थप्रचेतनप्रचेतययोः प्रत्यक्षपदयोर्निधनात् नात्यन्तपरोक्षं नित्यवत्सानामिति ॥२०॥

---

10. $B^1$ My ऋषभवैराजं for ऋषभोवैराजः ; P, Om. सहो

सामान्तरमाह—

**अतीषङ्गाणां वा प्रथमम् - इन्द्रायाहि चित्रभानो ( सा० ११४६–८ ) यदिन्द्रचित्रम इह ने-(सा० ११७२-४)त्येतासु गायत्रीषु चानुष्टुप्सु च ॥२१॥**

इति । गतम् । गायत्र्यनुष्टुभोर्मेलनात् सप्तपदात्वेन शक्वरीत्वात् सिमानां पारोक्ष्यमेतेषां सुसंगतम् । विदा मघवन्नि-(सा० ६४१–६४६)त्येतासु प्रत्यक्षास्वृक्षु अन्यस्य साम्नोऽभावात् ऋगन्तरेषु सामान्तरं कल्पितमाचार्येण । तदुक्तं निदाने—न तु पञ्चमे भेदान्व हि महानाम्नीष्वन्यद् (उ०ग्र०सू० २. १०) इति । सूत्रे च—न ह्येतास्वन्यत् सामापद्यतेऽपि ह्वा पृष्ठस्तोत्रीयेषु परोक्षाणि कुर्वन्नैतासु नित्यवत्साः करोति (ला० श्रौ० १०. २. २-३) इति ॥२१॥

**षष्ठस्याह्नो वारवन्तीयं पृष्ठम् ॥२२॥**

इति । गतम् ॥२२॥

ननु प्राकृतषडहे वारवन्तीयस्यैव प्रत्यक्षपृष्ठत्वात् अत्र परोक्षपृष्ठत्वविधानं कथमिति चेत् । मैवम् । सर्वत्र रेवतीनामेव प्रत्यक्षत्वात् । तैत्तिरीयादिशाखास्वपि षट्पृष्ठग्रहणे रेवतीनामेव ग्रहणात् वारवन्तीयस्य रेवतीर्ण (सा० १०८४-६) इति तृचे पारोक्ष्यमेव । अत एव माध्यंदिनपवमाने रेवतीनां प्रत्यक्षत्वात् तत्स्थाने परोक्षं सामान्तरमाह—

**रेवतीनां लोके दार्ढच्युतम् ॥२३॥**

---

9. B[1–2] ऋगन्तरे for ऋगन्तरेषु

12. B[1-2] My M[1] कुर्वन्नेतासु for कुर्वन्नैतासु

इति । गतम् । दार्ढ्च्युतस्य निधनत्वात् प्राकृतवत् जामिदोषाभावात् ॥२३॥

ऐडेन बृहतीमारभन्ते (तां० ब्रा० ७.३.१४) इति श्रुत्यनुग्रहार्थमौक्ष्णोरन्ध्रयोर्व्यत्यासमाह—

**विपरिहरत्यौक्ष्णोरन्ध्रे ॥२४॥**

इति ॥२४॥

इति द्वितीये प्रापठके दशमः खण्डः ॥१०॥

---

एकादशः खण्डः

[ उभयपरोक्षपृष्ठ्यः ]

पञ्चमस्वरूपमाह—

**अथात उभयतः परोक्षपृष्ठः षडहः ॥१॥**

इति ॥१॥

उभयशब्दं स्वयमेव व्याचष्टे—

**ऋक्तश्चैव सामतश्च ॥२॥**

इति ॥२॥

क्लृप्तिमाह—

**तस्य कल्पः । प्रथमस्याह्नो-ऽभित्वा पूर्वपीतये (सा० १५७३-४) इति कण्वरथन्तरं पृष्ठम् ॥३॥**

**द्वितीयस्याह्नस्-त्वं ह्येहि चेरव (सा० १५८१-२) इति बृहन्निधनं वार्कजम्भम् । कण्वबृहद्वा ।**

---

10. B[2] °पृष्ठ्यः for °पृष्ठः

आ त्वा सहस्रमाशतम् (सा० १३६१-३) इत्ये-तेषां द्वितीयम् ॥४॥

तृतीयस्याह्नो-यदिन्द्र यावतस्त्वम् (सा० १७६६-७) इति ह्नस्वा बृहदोपशा। अन्तरिक्षं वा ॥५॥

अन्तरिक्षस्य लोकेऽञ्जोवैरूपमनुकल्पयेत् । महावैष्टम्भं वा ॥६॥

महावैष्टम्भस्य लोकेऽभिनिधनं काण्वम् ॥७॥

चतुर्थस्याह्नः - श्रुधी हवं विपिपानस्याद्रेर् ( सा० ८८३-५) इत्यृषभोवैराजः सहोदैर्घतमसं वा हाउ पिबेत्येतत् ॥८॥

वसिष्ठस्य वा वैराजम्-अग्निं नर ( सा० १३७३-५) इत्येतयोरुत्तरम् ॥९॥

पञ्चमस्याह्नः-प्रोष्वस्मै पुरोरथम् (सा० १८०१-३) इति नित्यवत्साः ॥१०॥

अतीषङ्गाणां वा प्रथमम्-इन्द्रायाहि चित्र-भानो ( सा० ११४६-८ ) यदिन्द्र चित्रम इह ने-(सा० ११७२-४)त्येतासु गायत्रीष्वनुष्टुप्सु च ॥११॥

षष्ठस्याह्नो-रेवाँ इद्रेवत स्तोते-(सा० १८०४-६)ति वारवन्तीयं पृष्ठम् ॥१२॥

---

9. वैराजः for वैराजं ; P. Om. सहो°

**रेवतीनां लोके दार्ढच्युतम् ॥१३॥**

**विपरिहरत्यौद्गणोरन्ध्रे ॥१४॥**

इति । पूर्ववद् व्याख्येयम् । प्रोष्वस्मा इति तृचस्य स्वत एव सप्तपदात्वात् शक्वरीपारोक्ष्यं संगतमेव ॥१४॥

इति द्वितीये प्रपाठके एकादशः खण्डः ॥११॥

---

द्वादशः खण्डः

[ उपाङ्च्यपृष्ठ्यान्वाहार्यपृष्ठ्यौ ]

षष्ठसप्तमयोः स्वरूपमाह—

**अथात उपाङ्क्यपृष्ठश्चान्वाहार्यपृष्ठश्च षडहौ ॥१॥**

इति । अङ्कशब्दः स्थानवाची । उप पृष्ठस्य समीपे माध्यंदिनपवमाने अङ्कं स्थानमर्हन्तीति उपाङ्क्यानि । तानि पृष्ठानि यस्मिन् स तथोक्तः । अनु होतुः पृष्ठस्य पश्चात् आर्भवे आहार्याणि कल्प्यानि पृष्ठानि यस्मिन् स तथोक्तः ॥१॥

क्लृप्तिमाह—

**तयोः कल्पः । प्रत्यक्षाणि पृष्ठानि प्रत्यक्षेषु पृष्ठस्तोत्रीयेषु परोक्षाणि माध्यंदिनेषु । बृहतीषु पञ्चानामह्नाम् । गायत्रीषु षष्ठस्य । स उपाङ्क्यपृष्ठः षडहः ॥२॥**

इति । स्पष्टम् । अस्य क्लृप्तिः । अत्र निदानम्—अथ पृष्ठानामनुकल्पः । प्रथमेऽहनि रथन्तरपरोक्षे त्रिणिधनमध्येनिधनयोः स्थाने तृचस्थे स्याताम् । प्रतिष्ठोक्तोहगीति-

---

10. M[8] °दिने for °दिन°

19. B[8]M[8] P निदानसूत्रम् for निदानम्

ब्रह्मरहस्यापचिति तस्मात् बृहद्रथन्तर एकर्चे न कुर्वन्ति (उ० ग्र० सू० २. ६) इति। प्रथमस्याह्नः—प्र सोमासो विपश्चित इति गायत्राश्वसोमसामानि सामतृचः। प्र सोम देववीतय इति कण्वरथन्तरं तिसृषु। प्र तु द्रवेत्यौशनमन्त्यं तिसृषु। अथवा अत्र निदानसूत्रम्—नित्यैर्वा सह एकर्चाः। यज्ञगौङ्गवमध्यो वा बृहत्यां सामतृचः (उ० ग्र० सू० २. ६) इति। प्र सोमासो विपश्चित इति गायत्राश्वसोमसामानि सामतृचः। प्र सोम देव-इति कण्वरथन्तरपञ्चयौधाजयानि सामतृचः। कण्वरथन्तरगौङ्गवयौधाजयानि वा। औशनमन्त्यं तिसृषु। समानमितरत् प्रथमेन। एवं सत्राहीनभूते द्वादशाहे गवामयने च। अभीवर्तकालेयानुकल्पे तु अत्र निदानम्—प्रथमेऽहनि रथन्तराभीवर्तयौधाजयानि सामतृचः। अर्थाज्जामिव्रतगर्भिवद् (उ० ग्र० सू० २. १०) इति। माध्यंदिने बृहत्यां प्र सोम देवेति कण्वरथन्तराभीवर्तयौधाजयानि सामतृच इति विशेषः। यद्वा अत्र निदानम्—सर्वे वैकर्चाः। नव च बृहत्यां पञ्चगौङ्गवाभ्यां व्यवधाय त्रीन् प्रथमायामेवे-(उ० ग्र० सू० २.१०)ति। प्र सोम देववीतय (सा० ७६७-८) इति कण्वरथन्तरपञ्चे प्रथमायाम्। अभीवर्तगौङ्गवयौधाजयानि सामतृचः। औशनमन्त्यमेकस्याम्। इति विशेषः। अत्र माध्यंदिनपवमानेऽपि पृष्ठधर्माः कार्याः। तदुक्तं निदाने—कर्तव्या इत्याचार्याः संप्रयोगाद्ध्येषामेते धर्मा भवन्तीत्यथापि स्थानादपेतनां क्रियमाणान् पश्यामः (उ० ग्र० सू० ३. ५) इति ॥

1. M[1] °नीति for चिति

7. B[1-2] M[1] सामनी for °सामानि

12. M[1] अज्रात् for अर्थात्; B[1-2] M[1] वृत for व्रत

14. M[3] Om. °यौधाजयानि···अभीवर्त्त° (L. 18)

21. M[3] स्थानापेतान् for स्थानादपेतानां

22. M[3] पश्यामि for पश्यामः

द्वितीयस्याह्नः । अत्र निदानम्—आगन्तूनि प्रत्यहं दैर्घश्रवसमैधातिथपूर्वाभिशवहारायणकौल्मलबर्हिषाणि (उ० ग्र० सू० २. ६) इति । माध्यंदिने बृहत्यां पुनानः सोमेति ऐडमायास्यत्रिणिधनमायास्यदैर्घश्रवसानि सामतृचः । कण्व-बृहत्तिसृषु । बृहन्निधनवार्कजम्भं वा । समानमितरत् द्वितीयेन । अभीवर्तकालेयानुकल्पे तु अत्र निदानम्—द्वितीये तदादि-बार्हताद्यादाभीवर्तकालेये । यथा जानामि (उ० ग्र० सू० २. १०) इति । अस्यार्थः । द्वितीयेऽहनि तदादि आगन्त्वादि बृहदादि सामतृच इत्यर्थः । बार्हताद्यादिति । बृहत्यामुत्पन्नं साम बार्हतम् । बार्हताद्यात् ऐडमायास्याभीवर्तकालेयानि सामतृच इत्यर्थः । यथा जानामीति । गवामयने प्राकृतषडहे ऐड-मायास्याभीवर्तकालेयानि सामतृचो यथा कल्पकारेण क्लृप्तस्तथा जानामीति । बृहत्यां पुनानः सोमेति ऐडमायास्याभीवर्त-कालेयानि सामतृचः । कण्वबृहद्दैर्घश्रवसत्रिणिधनमायास्यानि सामतृचः । बृहन्निधनवार्कजम्भदैर्घश्रवसत्रिणिधनमायास्यानि वा । इति विशेषः । अत्र माध्यंदिनपवमानेऽपि पृष्ठधर्माः कार्याः ॥

तृतीयास्याह्नः । अत्र निदानम्—आगन्तु पृष्ठं चान्त (उ० ग्र० सू० २. ६) इति । अभि सोमे-(सा० ८५६-८)ति पौरु-मद्गं प्रथमायाम् । गौतमाञ्जोवैरूपमैधातिथानि सामतृचः । अन्तरिक्षं तिसृषु । आष्कारणिधनमध्यास्यायाम् इति । यद्वा बृहत्यामभि सोमेति पौरुमद्गं प्रथमायाम् । गौतमान्तरिक्षमैधा-तिथानि सामतृचः । ह्रस्वा बृहदोपशा तिसृषु । आष्कारणिधन-मध्यास्यायामिति । यद्वा अत्र निदानम्—निधनवच्चेत्पृष्ठं तृतीये

---

5. $B^{1-2}$ My बहिर् for बृहत्

7. $M^{3}$ बार्हताद्यद् for बार्हताद्याद्

16. $B^{1}$ Om. इति विशेषः

24. $B^{1}M^{1}$ Om. निधनवच्चेत् पृष्ठं

बृहत्यामाद्याद्विपरीते (उ० ग्र० सू० २. ६) इति । अभि सोमेति पौरुमद्गं प्रथमायाम् । महावैष्टम्भं तिसृषु । मैधातिथान्तरिक्षगौतमानि सामतृचः । आष्कारणिधनमध्यास्यायाम् । वयं घ त्वे-(सा० ८६४-६)ति अभिनिधनं काण्वं ब्रह्मणः । समानमितरत् तृतीयेन । अभीवर्तकालेयानुकल्पे तु अत्र निदानम्—ततो अनिधनवत् पृष्ठं तृतीयपञ्चमयोर्गायत्रमेकस्याम् । द्वितीय-तृतीययोरह्नोर् (उ० ग्र० सू० २. १०) इति । अस्यार्थः । तृतीयपञ्चमयोरह्नोरनिधनवत् निधनरहितमैडं साम पृष्ठं चेत् बृहत्यां द्वितीयतृतीययोः साम्नोरेकर्चकरणं कार्यमिति । उच्चा त इति गायत्रमेकस्याम् । क्षुल्लकवैष्टम्भं तिसृषु । अभि सोमेति पौरुमद्गगौतमान्तरिक्षाणि सामतृचः । तस्मिन्नेव तृचे अभीवर्तकालेयमैधातिथानि सामतृचः । ह्रस्वा च बृहद्दोपशा तिसृषु । आष्कारणिधनमध्यास्यायाम् । यद्वा अन्तरिक्षस्य स्थाने अञ्जोवैरूपम् । ह्रस्वाबृहद्दोपशायाः स्थाने अन्तरिक्षमिति विशेषः । यद्वा उच्चा त इति गायत्रक्षुल्लकवैष्टम्भे तृचयोः । अभि सोमेति पौरुमद्गं प्रथमायाम् । महावैष्टम्भमैधातिथान्तरिक्षाणि सामतृचः । तस्मिन्नेव तृचे अभीवर्तकालेयगौतमानि सामतृचः । आष्कारणिधनमध्यास्यायाम् । इति विशेषः । अत्र माध्यंदिनपवमानेऽपि पृष्ठधर्माः कार्याः ॥

चतुर्थस्याह्नः । बृहत्यां तवाहं सोमे-(सा० ६२२-३)ति आष्टादंष्ट्राभीशवस्वःपृष्ठाङ्गिरसानि सामतृचः । आभीशवाद्यं तिसृषु । ऋषभोवैराजस्तिसृषु । सहोदैर्घतमसं वा । वसिष्ठस्य

---

11. B[1] अस्मिन् for तस्मिन्

12. B[1] S Om. च

15. B[2] S Om. उच्चा त इति

17. B[1] अस्मिन् for तस्मिन्

22. M[3] B[2] S ऋषभ for ऋषभो

वैराजं वा। समानमितरत् चतुर्थेन। अभीवर्तकालेयानुकल्पे तु बृहत्यामाष्टदंष्ट्राभीवर्तकालेयानि सामतृचः। तस्मिन्नेव तृचे आभीशवोत्तरस्वःपृष्ठाङ्गिरसाभीशवाद्यानि सामतृचः। ऋषभो-वैराजस्तिसृषु। वसिष्ठस्य वैराजं वा सहोदैर्घतमसं वा। इति विशेषः। अत्र माध्यंदिनपवमानेऽपि पृष्ठधर्माः कार्याः॥

पञ्चमस्याह्नः। अत्र निदानम्—पञ्चमे चान्त्ये व्यतिहृत्य न्यायः समागन्तु (उ० ग्र० सू० २. ९) इति। बृहत्यां सोम उष्वे-(सा० ९९७–८)ति मानवानूपाग्नेस्त्रिणिधनानि साम-तृचः। वाभ्रहारायणनित्यवत्सास्तृचेषु। अतीषङ्गाणां प्रथमं वा। यद्वा। सोमे उष्वेति मानवानूपवाभ्राणि साम-तृचः। अग्नेस्त्रिणिधनहारायणे तृचयोः। नित्यवत्सास्तिसृषु। अतीषङ्गाणां प्रथमं वा। समानमितरत् पञ्चमेन। अभीवर्त-कालेयानुकल्पे तु अर्षा सोमे-(सा० ९९४-६)ति गायत्र-मेकस्याम्। यण्वशाकलवार्शानि तृचेषु। सोमे उष्वेति मानवं तिसृषु। आनूपं प्रथमायाम्। अग्नेस्त्रिणिधनं तिसृषु। वाभ्राभी-वर्तकालेयानि सामतृचः। हारायणमेकस्याम्। नित्यवत्सा-स्तिसृषु। अतीषङ्गाणां प्रथमं वा। यद्वा। अर्षा सोमेति गायत्र-मेकस्याम्। यण्वशाकलवार्शानि तृचेषु। सोम उष्वेति मानवं तिसृषु। आनूपमेकस्याम्। वाभ्राभीवर्तकालेयानि सामतृचः।

---

4. $M^3$ Om. वा ; $B^1$ S after °तमसं वा add तिसृषु

9. S Om. वाभ्र°; $B^2$ $M^3$ वाभ्राणि सामतृचः। हारायणं तिसृषु। नित्यवत्सा-स्तिसृषु for वाभ्रहारायणनित्यवत्सास्तृचेषु

14. $B^1$ after एकस्याम् adds नित्यवत्सास्तिसृषु। अतीषङ्गाणां प्रथमं वा। यद्वा। अर्षासोमेतिगायत्रमेकस्याम्

15. $B^1$ एकस्याम् for प्रथमायाम्; $B^1$ trans. वाभ्रा° ··· सामतृचः after हारायणमेकस्याम्

17. $B^1$ Om. यद्वा ··· प्रथमं वा (P. 159, L. 2)

अग्नेस्त्रिणिधनं तिसृषु । हारायणमेकस्याम् । नित्यवत्सास्तिसृषु । अतीषङ्गाणां प्रथमं वा । इति विशेषः । अत्र माध्यंदिनपवमानेऽपि पृष्ठधर्माः कार्याः ॥

षष्ठस्याह्नः । अत्र निदानम्—षष्ठे द्विपृष्ठाभिमानित्वात् पुरस्तादुपरिष्टादित्युभयोः स्यात् । उपाङ्क्यपृष्ठान्वाहार्यपृष्ठयोश्चैवम् (उ० ग्र० सू० २. १०) इति । इन्द्रायेन्दविति गायत्रेषोवृधीयक्रौञ्चवाजदावर्यरैवतदार्ढच्युतानि तृचेषु । मृज्यमान इति स्वारमौक्ष्णोरन्ध्रैडमौक्ष्णोरन्ध्रवरुणसामानि सामतृचः । वाजजित्कौल्मलबर्हिषगोष्ठास्तृचेषु । समानमितरत् षष्ठेन । अभीवर्तकालेयानुकल्पे तु बृहत्यां मृज्यमान इति स्वारमौक्ष्णोरन्ध्रं तिसृषु । ऐडमौक्ष्णोरन्ध्राभीवर्तकालेयानि सामतृचः । कौल्मलबर्हिषं तिसृषु । वाजजिद्वरुणसामगोष्ठाः सामतृच इति विशेषः । अत्र माध्यंदिनपवमानेऽपि पृष्ठधर्माः कार्याः ॥२॥

द्वितीयमाह—

**तान्येवोपरिष्टादाभवेष्वनुष्टुप्सु पञ्चानामह्नाम् । गायत्रीषु षष्ठस्य । सोऽन्वाहार्यपृष्ठः षडहः ॥३॥**

इति । स्पष्टम् । अस्य क्लृप्तिः । अत्र निदानम्—अथ पृष्ठानामनुकल्पः । प्रथमेऽहनि रथन्तरपरोक्षे त्रिणिधनमध्येनिधनयोः स्थाने तृचस्थे स्याताम् । प्रतिष्ठोक्तोहगीतिब्रह्मरहस्यापचितिं तस्मात् बृहद्रथन्तरे एकर्चे न कुर्वन्ति (उ० ग्र० सू० २. ६) इति । ऐडं कावमन्त्यमेकस्याम् । वैखानसं

7. $B^2$ $M^3$ Om. मृज्यामन ··· बृहत्यां (L. 10)

20. $B^{1-2}$ $M^3$ ब्रह्म° for बृहद्

वा । इडानुग्रहदृष्टान्तात् स्तोमासंभवात् उद्भिदेकत्रिकदर्शनैरिति । आर्भवे प्र सोमासो मदच्युत इति गायत्रसंहिते प्रथमायाम् । अया पवस्व-पवते हर्यत इति सफाक्षारे एकर्च्चयोः । प्र सुन्वान इति गौरीवितमेकस्याम् । कण्वरथन्तरं तिसृषु । अभिप्रियाणीति ऐडं काव्मन्त्यमेकस्याम् । वैखानसं वा । यद्वा । अत्र निदानम्—नित्यैर्वा सहैकर्च्चाः । नित्येऽन्तरानुष्टुभि पृष्ठौदलौ प्रथमायां वा । सर्वं एकर्च्चाः । त्रिणिधनमध्येनिधनानुग्रहवृत्तेः स्वरान्तं न्यायदृष्टेर्विशालार्थोहगीतिर् (उ०ग्र०सू० २.९) इति । प्र सोमासो मदच्युत इति गायत्रसंहिते । अया पवस्व पवत इति सफाक्षारे प्र सुन्वान इति गौरीवितकण्वरथन्तरौदलगौतमानि प्रथमायामेव । अभि प्रियाणीति स्वारंकाव्मन्त्यमेकस्याम् । समानमितरत् प्रथमेन । अत्र आर्भवपवमानेऽपि पृष्ठधर्माः कार्याः ॥

द्वितीयस्याह्नः । अत्र निदानम्—आनुष्टुभान्यनुरूपाग्निष्टोमसाम्न आहीनिके स्वारे द्वितीयपञ्चमयोः (उ०ग्र०सू० २.९) इति । आगन्तुसंयोगे नैकर्च्चाः नित्यानुग्रहस्तोमोपपत्तेः तृचाः कार्याः (उ०ग्र०सू० २.९) इति । यस्ते मद इति गायत्रहाविष्मते प्रथमायाम् । पवस्वेन्द्रमच्छेति शङ्कुसुज्ञाने एकर्च्चयोः । अयं पूषेति गौरीवितमैडक्रौञ्चे प्रथमायाम् । स्वारं क्रौञ्चं तिसृषु । कण्वबृहत्तिसृषु । बृहन्निधनवार्कजम्भं वा । समानमितरत् द्वितीयेन । अत्र आर्भवपवमानेऽपि पृष्ठधर्माः कार्याः ॥

तृतीयस्याह्नः । अत्र निदानम्—तृतीयस्यार्भवे गायत्रमेकस्याम् । अर्थादनुष्टुभ्यावापसंक्रमोऽभिषेचनीयवत् । तथोत्तरयोर्

---

1. $B^2M^3$ ह्रष्टा° for इडा°; $B^2M^3$ स्तोम° for स्तोमा°
5. S. Om. अन्त्यम्
15. $B^2$ $M^1$ सामानि for °साम्नः
16. $M^3$ तृचः कार्यः for तृचाः कार्याः
20. S. आर्भवे for आर्भव°
23. $B^1$ अन्तरयोः for तथोत्तरयोः

(उ० ग्र० सू० २.१०) इति । आर्भवे अन्तरिक्षपक्षे माध्यंदिने उच्चा त इति गायत्र क्षुल्लकवैष्टम्भे । अभि सोमेति पौरुमद्गं प्रथमायाम् । उभयतस्तोभगौतमाञ्जोवैरूपे तृचयोः । आष्कारणिधनमध्यास्याम् । आर्भवे महावैष्टम्भपक्षे वैरूपवामदेव्याभिनिधनकाण्वरौरवाणि पृष्ठानि । तिस्रो वाच इति गायत्रमेकस्याम् । पाष्ठौहं तिसृषु । आसोसखाय इति वाचःसामशौक्ते एकर्चयोः । सुतासो मेति गौरीवितत्रिणिधनत्वाष्ट्रीसामनी प्रथमायाम् । अन्तरिक्षस्वारंत्वाष्ट्रीसामनी तृचयोः । पवित्रं त इत्यरिष्टमन्त्यम् ॥

यद्वा । सुतासो मेति गौरीवितत्रिणिधनत्वाष्ट्रीसामनी प्रथमायाम् । हस्वा च बृहदोपशा स्वारंत्वाष्ट्रीसामनी तृचयोः । पवित्रं त इत्यरिष्टमन्त्यम् । यद्वा । अत्र निदानम्—तृतीयेऽनुष्टुबन्त्ये वागन्तु (उ० ग्र० सू० २.६) इति । सुतासो मेति गौरीवितत्रिणिधनत्वाष्ट्रीसामनी प्रथमायाम् । स्वारंत्वाष्ट्रीसाममहावैष्टम्भे तृचयोः । समानमितरत् तृतीयेन । अत्र आर्भवपवमानेऽपि पृष्ठधर्माः कार्याः ॥

चतुर्थस्याह्नः । अत्र निदानम्—आर्भवे गायत्रमेकस्याम् । अर्थादनुष्टुभ्यावापसक्रमोऽभिषेचनीयवत् । तथोत्तरयोर्जामि चेदन्त्ये नित्ययोः । मध्ये विपरीते व्यत्यासमेकर्चं तृच (उ० ग्र० सू० २.१०) इति । तथोत्तरयोरित्यस्यार्थः । चतुर्थपञ्चमयोरह्नोरिति । परि प्रिया दिवः कविरिति गायत्रमेकस्याम् । और्णायवं तिसृषु । त्वं ह्यङ्ग दैव्य-सोमः पुनान ऊर्मिणा (सा० ६३८–४०) इति बृहत्कातीषादीये तृचयोः । पुरोजितीति नानदमेकस्याम् । ऋषभवैराजस्तिसृषु । सहोदैर्घतमसं वा । वसिष्ठस्य

14. B[1] आर्भवे for आर्भव°

21. B[1] °षातीये for °षादीये

22. B[1] M[1] वैरजं for वैराज।

वैराजं वा । श्यावाश्वमेकस्याम् । आन्धीगवं तिसृषु । यद्वा । अत्र निदानम्—चतुर्थे वा ककुबादयस्त्रय एकर्च्चाः । तृचस्थानीतराणि (उ० ग्र० सू० २. १०) इति । परि प्रिया दिवः कवि-(सा० ६३५-७)रिति गायत्रौशायिवे तृचयोः । त्वं ह्यङ्ग-दैव्य-सोमः पुनान ऊर्मिणे-(सा० ६३८-४२)ति बृहत्कातीषादीये एकर्चयोः । पुरोजितीति नानदमेकस्याम् । वृषभवैराजस्तिसृषु । सहोदैर्घतमसं वा । वसिष्ठस्य वैराजं वा । श्यावाश्वान्धीगवे तृचयोः । समानमितरत् चतुर्थेन । समूढे तु उष्णिक्ककुभावेकर्चयोः । पुरोजितीति नानदमेकस्याम् । अन्धीगवश्यावाश्वे तृचयोः । ऋषभवैराजस्तिसृषु । सहोदैर्घतमसं वा । वसिष्ठस्य वैराजं वा । प्र त आश्विनी-(सा० ८८६-८)रिति लौशमन्त्यम् इति विशेषः । अत्र आर्भवपवमानेऽपि पृष्ठधर्माः कार्याः ॥

पञ्चमस्याह्नः । आर्भवे असाव्य शुर्मदाये-(सा० १००८-१०)ति गायत्रमेकस्याम् । सन्तनि तिसृषु । अभि द्युम्नं-प्राणा शिशु-(सा० १०११-३)रिति च्यावनक्रोशे एकर्चयोः । पवस्व वाजसातये (सा० १०१६-८) इति गौरीवितऋषभःशाक्वरपार्थाष्टेडपदस्तोभात्रेयानि तृचेषु । नित्यवत्सास्तिसृषु । अतीषङ्गाणां प्रथमं वा । समूढे तु अत्र निदानम्—शुद्धाशुद्धीयं समूढे प्रावृषाभिनधनवच्चेत् (उ० ग्र० सू० २. ६) इति । पवस्व वाजसातये (सा० १०१६-८) इति गौरीवितनित्यवत्साशुद्धाशुद्धीय-ऋषभशाक्वराकूपाराष्टेडपदस्तोभास्तृचेषु । यद्वा । नित्यवत्सानां स्थाने अतीषङ्गाणां प्रथमं वा । समानमितरत् पञ्चमेन । अत्र आर्भव-
23 पवमानेऽपि पृष्ठधर्माः कार्याः ॥

---

6. B[1] M[1] °वैरजं for वैराजः

12. B[3] M[3] Om. इति विशेषः ; S trans. इति विशेषः after कार्याः

19. M[3] B[3] Om. चेत्

अथ षष्ठस्याह्नः। अत्र निदानम्—षष्ठे द्विपृष्ठाभिमानितत्वात् पुरस्तादुपरिष्टादित्युभयोः स्यादुपाङ्क्यपृष्ठान्वाहार्यपृष्ठ्योश्चैवम् (उ० ग्र० सू० २.१०) इति। आगन्तुपृष्ठं चान्त (उ० ग्र० सू० २.६) इति च ॥

परिस्वानो गिरिष्ठाः (सा० १०६३-५) इति गायत्रवैदन्वताद्यवैदन्वतचतुर्थवैदन्वतदार्ढच्युतानि। स सुतं वः सखे-(सा० १०६६-११००)ति दीर्घकार्णश्रवसे तृचयोः। सोमाः पवन्त इन्दव (सा० ११०१-३) इति गौरीवितमधुश्चुन्निधनाकूपाराणि सासतृचः। वाङ्निधनक्रौञ्चैडंक्रौञ्चे तृचयोः। यद्वा। दीर्घकार्णश्रवसे एकर्चयोः। गौरीवितमेकस्याम्। मधुश्चुन्निधनवाङ्निधनंक्रौञ्चाकूपारैडंक्रौञ्चानि तृचेषु। समानमितरत् षष्ठेन। अत्र आर्भवपवमानेऽपि पृष्ठधर्माः कार्याः ॥३॥

[ उपाङ्क्यपृष्ठान्वाहार्यपृष्ठौ ]

प्रकारभेदेन उपाङ्क्यपृष्ठान्वाहार्यपृष्ठ्योरष्टमनवमयोः स्वरूपमाह—

**अथात उपाङ्क्यपृष्ठश्चैवान्वाहार्यपृष्ठश्च षडहौ ॥४॥**

**तयोः कल्पो विपर्यासं बृहद्रथन्तरे पृष्ठे ॥५॥**

इति। षण्णामप्यह्नां पृष्ठ्यस्तोमषडहवत् रथन्तरबृहती एव व्यत्यस्ते कार्ये इत्यर्थः ॥५॥

**उत्तरस्य चतुरहस्य ॥६॥**

---

3. $B^1M^1$ अन्तरिक्ष° for अन्त

7. $B^2$ एकतृचएकर्चयोः, $M^3$ एकर्चयोः for तृचयोः

9. $B^2M^3$ S. Om. यद्वा···तृचेषु (L. 11)

19. $M^1$ $B^1$ $M^3$ पृष्ठ° for पृष्ठ्य°

20. $M^1$ S. व्यत्यासेन for व्यत्यस्ते

इति । तृतीयादिचतुरहस्येत्यर्थः । आद्यद्वितीये प्रकृतिवत् कार्ये ॥६॥

**परोक्षाणि माध्यंदिनेषु । बृहतीषु त्रयाणामह्नाम् । गायत्रीषु षष्ठस्य । स उपाङ्क्यपृष्ठः षडहः ॥७॥**

इति । गतम् । अस्य क्लृप्तिः षण्णामह्नां पृष्ठ्यस्तोमषडहवत् कार्या । उत्तरस्य चतुरहस्य उपाङ्क्यपृष्ठषडहवन्माध्यंदिनपवमानः कार्यः । षष्ठे रैवतस्य स्थाने वारवन्तीयमिति विशेषः ॥७॥

**तान्येवोपरिष्टादार्भवेषु । अनुष्टुप्सु त्रयाणामह्नाम् । गायत्रीषु षष्ठस्य । सोऽन्वाहार्यपृष्ठः षडहः ॥८॥**

इति । स्पष्टम् । षण्णामह्नां पृष्ठ्यस्तोमषडहवत् क्लृप्तिः कार्या । उत्तरस्य चतुरहस्यान्वाहार्यपृष्ठषडहवदार्भवपवमानः कार्यः । षष्ठे परिस्वान इति गायत्रतृतीयवैदन्वताद्यवैदन्वतचतुर्थवैदन्वतानीति विशेषः ॥८॥

[ पुरस्ताज्ज्योतिरुपरिष्टाज्ज्योतिषौ ]

दशमैकादशयोः स्वरूपमाह—

**अथातः पुरस्ताज्ज्योतिश्चोपरिष्टाज्ज्योतिश्च षडहौ ॥९॥**

20 इति । षट्स्वप्यहःसु पृष्ठानां पुरस्तात् माध्यंदिनपवमानेषु
21 ज्योतींषि रथन्तरबृहद्वैरूपवैराजशाक्वररैवतरूपाणि यस्य स तथोक्तः ।

---

6. $B^2$ पृष्ठ्य° for पृष्ठ°

9. $M^3$ $M^1$ My S तदार्भवेषु for तान्येवोपरिष्टादार्भवेषु

14. $B^{1-2}$ after तृतीयवैदन्वत ins. वारवन्तीय

15. $B^1M^3$ इतीति for इति

20. $B^2M^3$ °माने for °मानेषु

पृष्ठानामुपरिष्टादाभवेषु रथन्तरबृहद्वैरूपवैराजशाक्वररैवतरूपाणि ज्योतींषि यस्य स तथोक्तः । अयं वै लोको ज्योतिः (ऐ० ब्रा० ४.१५)। इयं वै रथन्तरम् । (तां० ब्रा० १६.१०.८) इति श्रुत्या पृथिवीरथन्तरयोरभेदात् रथन्तरस्य ज्योतिष्ट्वम् । तत्पुत्रत्वात् वैरूपशाक्करयोश्च । स्वर्गो वै लोको ज्योतिः (तै० ब्रा० १.२.२.२)। असौ वै बृहत् (तै० सं० ७.१.४.३) इति श्रुत्या बृहत्स्वर्गयोरभेदात् बृहतो ज्योतिष्ट्वम् । तत्पुत्रत्वात् वैराज-रैवतयोरपि । रथन्तरबृहतोः अस हस् इति निधनाभ्यामहो-रूपत्वात् अह्नः अर्चिरादिमार्गान्तर्गतत्वाच्चोभयोर्ज्योतिष्ट्वम् । वैरूपे दिशं विशं हस् वैराजे ज्योतिर्हा उद्धे इति शक्वरीणां स्वत एव बृहत्त्वेन परंज्योतिष्ट्वात् । स्वर्णांशः अंशुर्न शोचिः अंशुर्मदायेति ज्योतिःपर्यायशब्दस्य विद्यमानत्वाच्च । रेवतीनां गोरूपत्वात् गौर्वै ज्योतिरिति गवां ज्योतिःस्वरूपत्वात् । ओजो वै वीर्यं पृष्ठानीति सर्वपृष्ठेष्टिप्रकरणे । यदिन्द्राय राथन्तराय निर्वपति यदेवाग्नेस्तेजस्तदेवावरुन्धे यदिन्द्राय बार्हताय यदेवेन्द्रस्य तेजस्तदेवावरुन्धे । यदिन्द्राय वैरूपाय यदेव सवितुस्तेजस्तदेवाव-रुन्धे । यदिन्द्राय वैराजाय यदेव धातुस्तेजस्तदेवावरुन्धे । यदिन्द्राय शाक्वराय यदेव मरुतां तेजस्तदेवावरुन्धे । यदिन्द्राय रैवताय यदेव बृहस्पतेस्तेजस्तदेवावरुन्धे ( तै० सं० २. ३. ७. २-३ ) इति च तैत्तिरीयश्रुतेः ज्योतिःपर्यायौजस्तेजोभ्यां सह पृष्ठानामभेदोप-देशाच्च एतेषां षण्णां पृष्ठानां ज्योतिष्ट्वम् । अपि च रथन्तरं भवति । ब्रह्म वै रथन्तरम् (तां०ब्रा० ११.४.६) इति श्रुतेः । रथन्तरं साम भवति । ब्रह्मवर्चसं वै रथन्तरम् (तै० ब्रा० २.७.१.१)

---

1. B[1] वैरूपाणि for रूपाणि

9. B[1] M[3] Om. अह्नः···°र्गतत्वाच्च

11. M[1] रोचिः for शोचिः ; S Om. इति

12. B[2] M[3] S Om. ज्योतिः

14. My B[1] Om. इति सर्वपृष्ठेष्टिप्रकरणे

इति तैत्तिरीयश्रुतेः । ब्रह्म ज्योतिर्ब्रह्म पत्नीषु गर्भम् इति च श्रुतेर्ब्रह्मणो ज्योतिष्ट्वम् । परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते (छां० उ० ८.३.४) । नारायणपरो ज्योतिः (महाना० उ० ११.४) । ओमापो ज्योती रसोऽमृतं ब्रह्मेति । तद् ब्रह्म तदाप आपो ज्योती रसः ( महाना० उ० १५.२ ) । शुक्रेण ज्योतींषि समनुप्रविष्टः (महाना० उ० १.१) । अथ यदतः परो दिवो ज्योतिर्दीप्यते । इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिर् ( छां० उ० ३. १३. ७ ) इत्यादिभिर्ब्रह्मणो ज्योतिःस्वरूपत्वात् रथन्तरस्य ज्योतिष्ट्वम् । किंच । भात्यग्निर्भाति चन्द्रमा भाति सूर्यो भान्ति ज्योतींषि भाति रथन्तरम् इति भकाराणामेव दीप्तिं दर्शयति ( सं० उ० ब्रा० २.२२ ) इति श्रुत्या स्वरूपत एव ज्योतिष्ट्वं सिद्धम् ॥

बृहत्त्वात् बृंहणत्वाच्च तस्माद् ब्रह्मेति शब्दितः ।
बृहद् ब्रह्म महच्चेति शब्दाः पर्यायवाचकाः ॥

बृहत्साम तथा साम्नाम् (गीता १०.३५) अब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् (महाना० उ० ९.३) । अपरिमितं बृहत् । नमो ब्रह्मणे बृहते करोमि इत्यादि-श्रुतिस्मृतिभिर्नाम्नैव बृहतो ब्रह्मत्वम् । मनो वै बृहत् (जै० ब्रा० ३.१२) । मन इव हि प्रजापतिः (जै० ब्रा० २.७७) । मनो ब्रह्म (बृ०उ० ४.१.६) इति वचनाद् मनो ब्रह्मेत्युपासीत (छां० उ० ३. १८. १) । स क्रतुं कुर्वीत । मनोमयः प्राणशरीरः (छां० उ० ३.१४.१-२) मनोज्योतिर्जुषतामाज्यम् (आ० श्रौ० २.५.१४) इति श्रुतिभिः मनसः परंज्योतिःस्वरूपत्वात् तद्रूपत्वाद् बृहतो ज्योतिःस्वरूपत्वम् । किं च ।

9. My B[1] before रथन्तरस्य add ब्रह्मस्वरूपत्वात् ; B[2] M[3] बृहद्रथन्तरस्य for रथन्तरस्य

16. B[1] M[1] Om. अपरिमितं...करोमि

23. B[1] My M[1] °रूपत्वम् for °स्वरूपत्वम्

महस्तवानो अद्रिवः (सा० ८१०) मह इति । ब्रह्मणि ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत (महाना० उ० २४.२)। महाव्याहृत्यां च। ओं महः। ओजश्चेति महश्चेत्युपासीत (छां० उ० ३.१३.५) इति ज्योतिःपर्यायस्य महःशब्दस्य त्वामिद्धीति तृचे प्रगाथे विद्यमानत्वात् स्वरूपत एव ज्योतिष्ट्वम्। वाग्वै रूपम् (तां० ब्रा० १६.५.१६)। वाग्वै ब्रह्म च सुब्रह्म च (ऐ० ब्रा० ६.३) इति। प्रजापतिर्हि वाक् (तै० ब्रा० १.३.४.५) इति वाग्रूपत्वात् वैरूपस्य ब्रह्मत्वम्। न त्वा वज्रिन् सहस्रं सूर्या इति। एतयैवावृता सहस्रसूर्यतया इति वैशम्पायनः। तस्यैषा भवति। यद्याव इन्द्र ते .... अनु न जातमष्ट रोदसी (तै० आ० १.७.५) इति श्रुत्या सूर्यस्य ब्रह्मस्वरूपस्य सर्वोपनिषत्सिद्धत्वात् सूर्यो ज्योतिर्ज्योतिः सूर्य (सा० १८३१) इति श्रुतेः सूर्यस्वरूपत्वादेव वैरूपस्य स्वत एव ज्योतिष्ट्वं सिद्धम्। प्रजापतिर्वैराजम् (तां०ब्रा० १६.५.१७)। ब्रह्म वै प्रजापतिः (माश० १३.६.२.८)। इमा ब्रह्म.सधमादे जुषस्व (सा० ६२६) इति ब्रह्मस्वरूपत्वात् वैराजस्य विराट्संबन्धित्वात् ज्योतिर्विराट्छन्दसां ज्योतिर्विराड्वा च इति। ज्योतिर्हा उद्दधे इति श्रुत्या च नाम्ना स्वरूपतश्च ज्योतिष्ट्वं सिद्धम्। ब्रह्म शक्वर्यः क्रतुच्छन्द ऋतं बृहत्। इन्द्राय साम गायत विप्राय बृहते बृहत्। ब्रह्मकृते विपश्चिते पनस्यवे (सा० ३८८) इति बृहत इन्द्रस्य क्रतुच्छन्दऋतंबृहद्रूपत्वाद् इन्द्रो ब्रह्मेन्द्र ऋषिः। तस्मात्....इदन्द्रं सन्तम् इन्द्र इत्याचक्षते परोक्षेण (ऐ० आ० २.४.३) इति ब्रह्मत्वात्, प्रतर्दनविद्यायां च—प्राणस्तथानुगमात्। न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन्। शास्त्र-

---

9. $B^2M^3$ भवाति for भवति
10. $B^{1-2}$ My अनून for अनु न
11. $B^1$ My $M^1$ after °षत् ins. °षात
16. $M^3B^2$ उद्दायेति, S उदाधे इति for उद्दधे इति
20. $B^1$ My $M^1$ ब्रह्म for ब्रह्मेन्द्र
21. $M^3B^2$ इन्द्रं सन्तं, $M^1$ इन्द्रं संगत, $B^1$ इन्द्रं सन्तमम्, S इन्द्रं सन्ततं for इन्द्रं सन्तम्

दृष्ट्या तूपदेशो वामदेववत् । जीवमुख्यप्राणलिङ्गान्नेति चेत् । न । उपासात्रैविध्यादाश्रितत्वादिह तद्योगात् (ब्र०सू० १.१.२८-३१) इति चतुर्भिर्ब्रह्मसूत्रैः ब्रह्मस्वरूपस्य सिद्धान्तितत्वात् । ऐन्द्रचो महानाम्न्यः प्रजापतेर्वा विष्णोर्वा विश्वामित्रस्य वा सिमा वा मङ्या वा अध्वरमा वा शक्वर्यो वा शक्वर्यो वा (ऐ० ब्रा० ६. ४. २. १५) इति महानाम्नीनामैन्द्रप्राजापत्यवैष्णवादिभिर्नामकरणात् प्रजापतिविष्णुसिमादिसाहचर्यात् इन्द्रस्यापि ब्रह्मत्वात् इन्द्रो ज्योतिर्ज्योतिरिन्द्रः (सा० १८३१) । इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रोम् (आ० श्रौ० ५.६.११) स्वर्णांशुर् (सा० ६४२) अंशुनशोचिः (सा. ६४५) अंशुर्मदाय (सा. ६४८) इति महानाम्नीनां नाम्ना स्वरूपतश्च ज्योतिष्ट्वं सिद्धम् । आपो वै रेवत्यः (तां० ब्रा० ७.६.२०) । अपां वा एष रसो यद्रेवत्यः (तां० ब्रा० १३.१०.५) । आपो रेवतीः क्षयथा हि वस्वः (ऋ० १०.३०.१२) । आपो वै ब्रह्मेत्याचक्षते । आपो वा इदं सर्वम् । विराडापः । अमृतं वा आपः (महाना. उ. १४.१) इत्यादिभिरद्भिः स्तोत्रोपक्रमणाच्च रेवतीनाम्नामपां बृहत्त्वात् छन्दांस्यापो ज्योतींष्यापः (महाना. उ. १४.१) । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः (तै०उ०३. ८.१) । हिरण्यज्योतिः सरिरस्य मध्ये (तै०आ० ३.११.८) इत्यादिश्रुतिभिः अब्रूपरेवतीनां नाम्ना स्वरूपतश्च ज्योतिष्ट्वं सिद्धम् । एवं षण्णां पृष्ठानां ब्रह्मस्वरूपत्वात् ब्रह्मरहस्यापचितत्वात् अरण्येगेयत्वाच्च ज्योतिष्ट्वं प्रसिद्धम् ॥६॥

क्लृप्तिमाह—

**23 तयोः कल्पः । परोक्षाणि पृष्ठानि प्रत्यक्षेषु**

---

8. B[1]MyM[1] after इन्द्रो add वै ; B[1]My M[1] भवो for भुवो

16. B[2] M[3] trans. नम्नामपां ··· रेवतीनां (L. 19) after प्रत्यक्षाणि (P. 169, L. 1)

20. B[2]M[3] °चिर्तित्वात् for °चितत्वात्

21. B[1]M[1] My after ज्योतिष्ट्वं add सिद्धम् ; B[2] Om. प्रसिद्धम्

**पृष्ठस्तोत्रीयेषु प्रत्यक्षाणि माध्यंदिनेषु । बृहतीषु पञ्चानामह्नाम् । गायत्रीषु षष्ठस्य । स पुरस्ताज्ज्योतिः षडहः ॥१०॥**

इति । स्पष्टम् । अस्य क्लृप्तिः । प्रथमद्वितीययोरह्नोरुपाङ्क्यपृष्ठ्यषडहवत् क्लृप्तिः कार्या । प्रथमस्याह्नः माध्यंदिने कण्वरथन्तरस्य स्थाने रथन्तरम् । कण्वरथन्तरं होतुः पृष्ठम् । अत्र उभयत्र पृष्ठधर्माः कार्याः ॥

द्वितीयमाध्यंदिने कण्वबृहतः स्थाने बृहत् । बृहन्निधनवार्कजम्भं वा कण्वबृहद्वा होतुः पृष्ठम् । अत्र उभयत्र पृष्ठधर्माः कार्याः ॥

तृतीयस्याह्नः माध्यंदिने बृहत्याम् अभि सोमे-(सा० ८५६-८)ति पौरुमद्गं प्रथमायाम् । उभयतस्तोभगौतमान्तरिक्षमैधातिथानि सामतृचः । वैरूपं तिसृषु । आष्कारणिधनमध्यास्यायाम् । यद्द्याव (सा० ८६२-३) इति ह्रस्वाबृहदोपशा होतुः पृष्ठम् । यद्वा । अभि सोमेति पौरुमद्गं प्रथमायाम् । गौतमाङ्जोवैरूपमैधातिथानि सामतृचः । वैरूपं तिसृषु । आष्कारणिधनमध्यास्यायाम् । यद्द्याव इति अन्तरिक्षं होतुः पृष्ठम् । यद्वा । यद्द्याव इति महावैष्टम्भं होतुः पृष्ठम् । वयं

1. B²M³ Om. पृष्ठस्तोत्रीयेषु
5. M¹ after षडह ins. ब्रह्म ; B¹ बृहत् for °वत्
7. B¹ उभय for उभयत्र
8. B² M² °रथन्तरस्य for बृहतः ; M³ कण्वरथन्तर° for बृहन्निधन°
9. B¹ My उभय° for उभयत्र
11. M¹ after मैधातिथानि repeats होतुः पृष्ठं (L. 6) मैधातिथानि सा° (L. 12) and thereafter again repeats from ब्रह्मकृते ··· (P. 167; L. 19) upto माध्यंदिने कण्वरथन्तर° (P. 169; L. 3) with omission from °नामेन्द्र···(P. 168; L. 6) upto आप इत्यादि° (L. 15).

घ त्वे-(सा० ८६४-६)ति अभिनिधनं काण्वं ब्रह्मणः। समानमितरत् तृतीयेन। अभीवर्तकालेयानुकल्पे तु उच्चा त इति गायत्रमेकस्याम्। क्षुल्लकवैष्टम्भं तिसृषु। अभि सोमेति पौरुमद्गगौतमान्तरिक्षाणि सामतृचः। तस्मिन्नेव तृचे अभीवर्तकालेयमैधातिथानि सामतृचः। वैरूपं तिसृषु। आष्कारणिधनमध्यास्यायाम्। यद्द्याव इति ह्रस्वाबृहदोपशा होतुः पृष्ठम्। महावैष्टम्भं वा। वय घ त्वेति अभिनिधनं काण्वं ब्रह्मणः। यद्वा। उच्चा त इति गायत्रमेकस्याम्। क्षुल्लकवैष्टम्भं तिसृषु। अभि सोमेति पौरुमद्गगौतमाञ्जोवैरूपाणि सामतृचः। अभीवर्तकालेयमैधातिथानि सामतृचः। वैरूपं तिसृषु। आष्कारणिधनमध्यास्यायाम्। यद्द्याव इति अन्तरिक्षं होतुः पृष्ठम्। इति विशेषः। अत्रोभयत्र पृष्ठधर्माः कार्याः। उत्तरत्र्यहस्य उपाङ्क्यपृष्ठ्यषडहवत् क्लृप्तिः कार्या॥

चतुर्थेऽहनि माध्यंदिने ऋषभवैराजस्य स्थाने महावैराजम्। ऋषभवैराजं होतुः पृष्ठम्। सहोदैर्घतमसं वा। वसिष्ठस्य वैराजं वा। अत्रोभयत्र पृष्ठधर्माः कार्याः॥

पञ्चमेऽहनि माध्यंदिने नित्यवत्सानां स्थाने सिमाः। त्रिकद्रुकेष्विति नित्यवत्सा होतुः पृष्ठम्। इन्द्रायाहि (सा० ११४६-८) यदिन्द्र चित्रमे-(सा० ११७२-४)ति अतीषङ्गाणां प्रथमं वा। अत्रोभयत्र पृष्ठधर्माः कार्याः॥

षष्ठे वाजदावर्यरैवतयोर्मध्ये दार्ढच्युतमिति विशेषः। अत्रोभयत्र पृष्ठधर्माः कार्याः॥१०॥

द्वितीयमाह—

**तान्येवोपरिष्टादाभर्वेसु। अनुष्टुप्सु पञ्चानामह्नाम्। गायत्रीषु षष्ठस्य। स उपरिष्टाज्ज्योतिः षडहः॥११॥**

---

5. M[1] Om. यद्द्याव ··अध्यास्यायाम् (L. 10)

13. B[1] Om. महावैराजं···नित्यवत्सानां स्थाने (L. 16)

इति। स्पष्टम्। अस्य क्लृप्तिः। षण्णामह्नां सर्वपरोक्षपृष्ठ-षडहवत् कार्या। षण्णामह्नामन्वाहार्यपृष्ठषडहवदार्भवपवमानः कार्यः। षण्णामह्नामार्भवपवमानेष्वपि पृष्ठधर्माः कार्याः। प्रथमेऽहनि आर्भवे कण्वरथन्तरस्य स्थाने रथन्तरम्। द्वितीये कण्वबृहत्स्थाने बृहत्। तृतीये ह्रस्वाबृहदोपशास्थाने पञ्चनिधनं वैरूपम्। चतुर्थे ऋषभवैराजस्थाने महावैराजम्। पञ्चमेऽहनि नित्यवत्सानां स्थाने सिमाः। षष्ठे अत्र निदानम्—पुरस्तादुपरिष्टादित्युभयोः स्यात् (उ०ग्र०सू० २.१०) इति। परिस्वानायां च प्रागन्त्यादिति त्रिषामणि चेदैडं चेदन्त्यं प्राक् साम स्यात् (उ० ग्र० सू० २.६) इति च। अस्यार्थः। सर्वत्रागन्तुपृष्ठस्यान्ते निवेशो न्यायः। प्रकृतौ परिस्वानो गिरिष्ठा (सा० १०६३-५) इति गायत्रतृतीयाद्यचतुर्थवैदन्वता-नीत्यध्ययनक्रमः। अत्र ब्राह्मणे वैदन्वतानि भवन्ति (तां० ब्रा० १३.११.६) इत्यविशेषोक्तेरजामिक्रमेण क्लृप्तौ कार्यायां षडह-विचारेष्वध्ययनक्रमक्लृप्तावैडयोश्चतुर्थवैदन्वतरैवत्ययोः संनिपाते जामि स्यादित्यत आह—प्रागन्त्यादिति। अन्त्यात् आद्यवैदन्वतात् प्राक् अतित्रिषामणि चतुर्थवैदन्वते कृते आगन्तुपृष्ठस्यैडस्य रैवत्यस्य वारवन्तीयस्य अन्ते निवेशो युक्त इति भावः। अध्ययनक्रमस्य बलवत्त्वात् तदनुसारेण पक्षान्तरमाह—ऐडं चेदन्त्यम् इति। चतुर्थ-वैदन्वतमित्यर्थः। सामभ्यामाद्यचतुर्थवैदन्वताभ्यां प्राक् पूर्वोक्ता-गन्तुपृष्ठस्य निवेशः। परिस्वान इति गायत्रतृतीयवैदन्वतरैवताद्य-वैदन्वतचतुर्थवैदन्वतानि। यद्वा। गायत्रतृतीयवैदन्वतचतुर्थ-वैदन्वताद्यवैदन्वतरैवतानि इति विशेषः ॥११॥

---

4. M[3] B[2] Om. रथन्तरम्…वैराजस्थाने (L. 6)

11. B[2] M[3] Om. गायत्र°

13. M[3] °शेषेण for °शेष°; M[3] °क्लृप्ते for °क्लृप्तौ

16. M[1] Om. कृते ; S B[2] रेवत्यस्य for रैवत्यस्य

22. M[3] Om. आद्यवैदन्वत°

[ बृहद्रथन्तरपुरस्तात्-बृहद्रथन्तरोपरिष्टात्-ज्योतिषौ ]

द्वादशत्रयोदशयोः स्वरूपमाह—

**अथातो बृहद्रथन्तरपुरस्ताज्ज्योतिश्च बृहद्रथन्तरोपरिष्टाज्ज्योतिश्च षडहौ ॥१२॥**

इति । बृहद्रथन्तरयोः ज्योतिष्ट्वं पूर्ववद्व्याख्येयम् ॥१२॥

क्लृप्तिमाह—

**तयोः कल्पः । परोक्षाणि पृष्ठानि परोक्षेषु पृष्ठस्तोत्रीयेषु बृहद्रथन्तरे मध्यंदिनेषु बृहतीषु विपर्यासम् । स बृहद्रथन्तरपुरस्ताज्ज्योतिः षडहः ॥१३॥**

इति । स्पष्टम् । षण्णामह्नामुभयपरोक्षपृष्ठषडहवत् क्लृप्तिः कार्या । प्रथमद्वितीययोरह्नोः पुरस्ताज्ज्योतिः षडहवत् माध्यंदिनः पवमानः कार्यः । तृतीयस्याह्नः बृहत्याम् अभि सोमे-(सा० ८५६-८)ति पौरुमद्गं प्रथमायाम् । रथन्तरं तिसृषु । गौतमान्तरिक्षमैधातिथानि सामतृचः । आष्कारणिधनमध्यास्यायाम् । यदिन्द्र यावतस्त्व-(सा० १७९६-७)मिति ह्रस्वाबृहदोपशा होतुः पृष्ठम् । यद्वा । यदिन्द्र यावतस्त्वमिति महावैष्टम्भं होतुः पृष्ठम् । वयं घ त्वे-(सा० ८६४-६)ति अभिनिधनं काण्वं ब्रह्मणः । यद्वा । माध्यंदिने अन्तरिक्षस्य स्थाने अञ्जोवैरूपम् । यदिन्द्र यावतस्त्वमिति अन्तरिक्षं होतुः पृष्ठम् । समानमितरत् तृतीयेन । अभीवर्तकालेयानुकल्पे तु बृहत्याम् अभि सोमेति पौरुमद्गं प्रथमायाम् । रथन्तरमैधातिथान्तरिक्षाणि सामतृचः । अभीवर्तकालेयगौतमानि सामतृचः । आष्कारणिधनमध्यास्यायाम् । यदिन्द्र यावतस्त्वमिति ह्रस्वाबृहदोपशा होतुः पृष्ठम् । यद्वा । यदिन्द्र यावतस्त्वमिति महावैष्टम्भं होतुः पृष्ठम् । वयं घ त्वेति

---

3. B[1]M[1]MyM[3] Om. ज्योतिश्च बृहद्रथन्तर° ; B[2] Om. ज्योतिश्च

8. B[2] M[3] Om. माध्यं for मध्यं ; B[2]M[3] Om. बृहतीषु

9. B[2] M[3] Om. सः

अभिनिधनं काण्वं ब्राह्मणः। यद्वा। अभि सोमे-(सा० ८५६-८)ति पौरुमद्गं प्रथमायाम्। रथन्तरमैधातिथाञ्जोवैरूपाणि सामतृचः। अभीवर्तकालेयगौतमानि सामतृचः। आष्कारणिधनमध्यास्यायाम्। यदिन्द्र यावतस्त्वमिति अन्तरिक्षं होतुः पृष्ठम्। इति विशेषः॥

चतुर्थस्याह्नः पुरस्ताज्ज्योतिःषडहवत् मध्यंदिनः पवमानः कार्यः। मध्यंदिने वैराजस्य स्थाने बृहदिति विशेषः॥

पञ्चमस्याह्नः बृहत्यां सोम उ ष्वे-(सा० ६६७-८)ति आकूपार-रथन्तरे तृचयोः। हारायणमानववाम्राणि सामतृचः। अग्नेस्त्रिणिधनं तिसृषु। इति विशेषः। अभीवर्तकालेये तु बृहत्यां सोम उ ष्वेति आनूपं प्रथमायाम्। रथन्तरं तिसृषु। हारायणमानवे प्रथमायाम्। वाम्राभीवर्तकालेयानि सामतृचः। अग्नेस्त्रिणिधनं तिसृषु इति विशेषः। षष्ठे बृहत्यां मृज्यमान इति स्वारमौक्षणोरन्ध्रैडमौक्षणोरन्ध्र-वाजिजितः सामतृचः। वरुणसामगोष्ठकौल्मलबर्हिषबृहन्ति तृचेषु। अभीवर्तकालेयानुकल्पे तु अत्र निदानम्—षष्ठे तु बृहच्चेत् स सामतृचः (उ० ग्र० सू० २.१०) इति। मृज्यमान इति ऐडमौक्षणो-रन्ध्राभीवर्तकालेयानि सामतृचः। स्वारमौक्षणोरन्ध्रं तिसृषु। वाजजित्कौल्मलबर्हिषबृहन्ति सामतृचः। वरुणसामगोष्ठौ तृचयोः। इति विशेषः॥१३॥

द्वितीयस्वरूपमाह—

**त एवोपरिष्टादार्भवेष्वनुष्टुप्सु विपर्यासम्। स बृहद्रथन्तरोपरिष्टाज्ज्योतिः षडहः॥१४॥**

इति। स्पष्टम्। अस्य क्लृप्तिः। षण्णामह्नामुभयपरोक्षपृष्ठ-षडहवत् क्लृप्तिः कार्या। आदितः पञ्चानामह्नामुपरिष्टाज्ज्योतिः-

---

5. B[2]M[3] Om. चतुर्थस्य…विशेषः (L. 6)

7. M[3] B[2] S आनूप° for आकूपार°

21. B[2] M [1]My Om. स

षडहवदार्भवपवमानः कार्यः । तृतीयेऽहनि आर्भवे सुतासो मे- (सा० ८७२-४)ति गौरीवितत्रिणिधनत्वाष्ट्रीसामनी प्रथमायाम् । स्वारंत्वाष्ट्रीसामरथन्तरे तृचयोः । चतुर्थेऽहनि वैराजस्य स्थाने बृहत्पञ्चमे । गौरीवितऋषभशाक्वरपार्थाष्टेडपदस्तोभरथन्तरा-त्रेयाणि । अत्र शक्वरीवदागन्तुपृष्ठस्यान्त्यं चेद् दाशस्पत्येन सह जामि स्यात् । तन्निवृत्त्यर्थम् उपान्त्यत्वकल्पनम् । समूढे तु पवस्व वाजसातय (सा० १०१६-८) इति गौरीवितपदनिधन-शुद्धाशुद्धीयऋषभशाक्वराकूपाराष्टेडपदस्तोभरथन्तराणीति विशेषः । षष्ठस्याह्नः । अत्र निदानम्—बृहतीषष्ठे गौरीवितात् विपरीते व्यूढे (उ० ग्र० सू० २. ६) इति । अत्र सूत्रं च—मधुश्चुन्निधना-दाकूपारम् (ला० श्रौ० ४. ६. ३) इति । षष्ठे च बृहतो व्यूढ इति च बृहत उत्तरे त्रय एकर्चाः इत्यर्थः । आर्भवे अनुष्टुभि सोमाः पवन्त (सा० ११०१-३) इति गौरीवितबृहती तृचयोः । आकूपारमधुश्चुन्निधनवाङ्निधनक्रौञ्चानि सामतृचः । वाङ्निधन-क्रौञ्चमधुश्चुन्निधनाकूपाराणि वा । ऐडं क्रौञ्चं तिसृषु । इति विशेषः ॥

समूढे तु अत्र सूत्रम्—उपोत्तमं समूढ (ला० श्रौ० ४. ६. ४) इति । सोमाः पवन्त इति गौरीवितमधुश्चुन्निधने तृचयोः । वाङ्निधनक्रौञ्चैडंक्रौञ्चाकूपाराणि सामतृचः । बृहत्तिसृषु इति विशेषः ॥१४॥

इति द्वितीये प्रपाठके द्वादशः खण्डः ॥१२॥

---

3. B[2]M[3] Om. चतुर्थे… विशेषः (L. 16)
4. S Om. गौरीवित…°कल्पनम् (L. 6)
5. B[1] अन्त्येऽन्त्ये, after अन्त्यं चेत्
6. उपाङ्क्य° for उपान्त्यत्व°
8. M[1]B[1] Om. इति विशेषः
12. S बृहदुत्तरे for बृहत उत्तरे
17. S बृहद् for उप°

## त्रयोदशः खण्डः

[ परोक्षापक्र्यप्रत्यक्षापक्र्यपृष्ठौ ]

चतुर्दशपञ्चदशयोः स्वरूपमाह—

**अथात आपक्र्यपृष्ठौ षडहौ ॥**

इति । आङ्पूर्वात् पृचि संपर्क इति धातोश्छान्दसो ण्यत्प्रत्ययः । ईषदर्थे आङ् । आ ईषत् पक्र्यः आपक्र्यः । मध्यमपर्याये परोक्षप्रत्यक्षरूपेण ईषत्संबन्धात् पृष्ठानामापक्र्यत्वम् । आपक्र्याणि पृष्ठानि ययोस्तौ तथोक्तौ ॥

उभयोर्धर्मभेदेन संज्ञामाह—

**परोक्षापक्र्यपृष्ठश्च प्रत्यक्षापक्र्यपृष्ठश्च ॥१॥**

इति ॥१॥

क्लृप्तिमाह—

**तयोः कल्पः । प्रत्यक्षस्य प्रथमोत्तमौ पर्यायौ । परोक्षस्य मध्यमः । स परोक्षापक्र्यपृष्ठः षडहः ॥२॥**

इति । स्पष्टम् । प्रथमस्याह्नः अभि त्वा शूरे-(सा० ६८०-१)ति रथन्तरस्य प्रथमोत्तमौ पर्यायौ । तस्मिन्नेव तृचे कण्वरथन्तरस्य मध्यम इति होतुः पृष्ठम् । समानमितरत् प्रथमेन ॥

द्वितीयस्याह्नः । त्वामिद्धि हवामहे (सा० ८०९-१०) इति बृहतः प्रथमोत्तमौ पर्यायौ । तस्मिन्नेव तृचे बृहन्निधनस्य वार्कजम्भस्य वा कण्वबृहतो वा मध्यमः । इति होतुः पृष्ठम् । समानमितरत् द्वितीयेन ॥

20. M[1] after तृचे adds वृषभस्य वैराजस्य and Om. बृहन्निधनस्य ··· तृचे (P. 176, L. 2)

तृतीयस्याह्नः—यद् द्याव (सा० ८६२-३) इति वैरूपस्य प्रथमोत्तमौ पर्यायौ। तस्मिन्नेव तृचे ह्रस्वाबृहदोपशायाः अन्तरिक्षस्य वा महावैष्टम्भस्य वा मध्यमः पर्यायः। इति होतुः पृष्ठम् अन्तरिक्षपक्षे। मध्यंदिने अन्तरिक्षस्य स्थाने अञ्जोवैरूपं महावैष्टम्भपक्षे। वयं घ त्वे-(सा० ८६४-६)ति अभिनिधनं काण्वं ब्रह्मणः। समानमितरत् तृतीयेन ॥

चतुर्थस्याह्नः—पिबा सोम-(सा० ६२७-६)मिति महावैराजस्य प्रथमोत्तमौ पर्यायौ। तस्मिन्नेव तृचे ऋषभस्य वैराजस्य वा सहोदैर्घतमसस्य वा वसिष्ठस्य वैराजस्य वा मध्यमः। इति होतुः पृष्ठम्। समानमितरत् चतुर्थेन ॥

पञ्चमस्याह्नः। अत्र निदानम्—न तु पञ्चमे भेदात् न महानाम्नीष्वन्यत् (उ० ग्र० सू० २.१०) इति। विदा मघवन्निति एतासु महानाम्नीनां प्रथमोत्तमौ पर्यायौ। त्रिकद्रुकेष्विति नित्यवत्सानां मध्यमः। अतीषङ्गाणां प्रथमस्य वा। इन्द्रायाहि-यदिन्द्र चित्रम—इत्येतासु गायत्रीषु चानुष्टुप्सु च। इति होतुः पृष्ठम्। समानमितरत् पञ्चमेन ॥

षष्ठस्याह्नः। अत्र निदानम्—प्राङ्क्च्यादिषु द्विषामत्वात् छन्दस्यं वारवन्तीयं स्यात्। उभयोः पवमानानुकल्पः पृष्ठानुपूर्वेण। स्तोत्रीयनानात्वाद्वा। प्रत्यक्षपरोक्षाप्तिः समानादेशाच्च। उभे पावमानिके रेवतीसंयोगाद्वारवन्तीयेन प्रत्यक्षार्थे। दार्ढच्युतेन परोक्षार्थे। प्रत्यक्षाणीति प्रकृतिपृष्ठात् परोक्षाणीत्युभयतः पारोक्ष्यात् प्रत्यक्षकात्स्न्यात् गर्भिदर्शनाच्च। एकतृचे वा प्रत्यक्षेषु विष्टुतीनां तृचाधिकारत्वादुभयेषां च दर्शनात्। न तु पञ्चमे भेदात्। न महानाम्नीष्वन्यत् (उ० ग्र० सू० २.१०) इति। अत्र

---

2. B[1] My M[1] बृहन्निधनस्य वा वार्कजम्भस्य for ह्रस्वाबृहदोपशायाः अन्तरिक्षस्य

18. B[2] M[3] °पूर्व्येण for पूर्वेण

24. B[2] M[3] Om. न

प्राङ्क्यादिषिवत्यारभ्य पृष्ठानुपूर्वेणेत्यन्तमेकं सूत्रम्। आदिशब्देन प्रत्यक्षपरोक्षप्राङ्क्यप्रत्यक्षपरोक्षापर्यायाणां ग्रहणम्। द्विषामत्वादिति। प्राङ्क्यादिषडहेषु प्रत्यहं पृष्ठानां कल्पकारेण प्रत्यक्षपरोक्षसाम्नां निधानात् द्विषामत्वम्। षष्ठस्याह्नः द्विपृष्ठत्वेन पूर्वं स्वेनैवोक्तत्वात्, अत्र पवमानपृष्ठयोः उभयत्र सामद्वयेन स्तोतव्यत्वात्। अत्र होतुः पृष्ठे सामद्वयप्राप्तावेकमेव सामेत्याह—छन्दस्यं वेति। वा-शब्द एवकारार्थः। रेवतीर्णेति तृच एव प्रत्यक्षपरोक्षात्मकत्वम्। वारवन्तीयमेकमेव सामेत्यर्थः। उक्तं च स्वेनैव पूर्वनिदानसूत्रे—अथ षष्ठेऽहनि रेवतीषु वारवन्तीयं पृष्ठं भवति। तदेके प्रत्यक्षं ब्रुवते (नि० सू० ४. ४) इति। वारवन्तीयस्य पारोक्ष्यं तदेतद्रेवतीपरोक्षमेव भवतीति च। अत्र उत्तरनिदानसूत्रे च उत्तरत्र वक्ष्यति—अथ यत्र परोक्षाणीति तत्र वारवन्तीयम् (उ० ग्र० सू० ३.४) इति। एतेन मन्यन्ते उभे एवैते प्रत्यक्षे भवत इति तयोस्त्वन्यतरदितरेषां पृष्ठानामनुधर्मं करोति। अत्र न परोक्षपृष्ठयोः रेवतीरनुधर्मं करोतीति च। कल्पकारेणापि प्रत्यक्षे प्राकृते षडहे सर्वपरोक्षोभयपरोक्षषडहयोरनुगृहीतपरोक्षे च वारवन्तीयस्यैव प्रत्यक्षपरोक्षाकारत्वेन कल्पितत्वात् उभयात्मकत्वं सिद्धम्। तस्मात् पञ्चाहवत् षष्ठेऽह्नि प्रत्यक्षपरोक्षसामद्वयार्थे रेवतीर्ण इति तृच एव वारवन्तीयमेकमेव साम कार्यमित्याशयः। पृष्ठवत् पवमानेऽप्येकस्यैव रैवतस्योभयात्मकत्वभ्रान्त्या कल्पनं स्यादित्यत आह—उभयोः पवमानानुकल्प इति। रैवतदार्ढच्युतयोरित्यर्थः। पृष्ठानुपूर्वेणेति

4. S निधनात् for निधानत्; B[2] M[3] Om. षष्ठस्याह्नः

5. S तत्र for अत्र

6. B[1] M[1] Om. साम

9. B[1] M[1] Om. पृष्ठं…तत्र वारवन्तीयम् (L. 12)

11. S क्षुद्र° for उत्तर°

13. B[1] M[1] उभये for उभे

कल्पकारक्लृप्तिः। प्रत्यक्षपरोक्षपर्यायानुगुण्येन अनयोः पौर्वापर्यं कल्प्यमित्यर्थः। पक्षान्तरमाह—स्तोत्रीयनानात्वाद्वेति। रेवतीर्णो-रेवाँ इन्द्र इति तृचभेदात् पूर्वतृचे न प्रत्यक्षत्वम्। उत्तरतृचे न परोक्षत्वमित्यर्थः। पृष्ठवत् पवमाने स्तोत्रीयनानात्वप्राप्तावेकतृच एव सामद्वयं कार्यमित्याह—समानादेशाच्चोभे पावमानिक इति। समाने एकस्मिंस्तृचे आदेशात् कल्पकारेण विधानात् उभे प्रत्यक्षपरोक्षरूपे रैवतदार्ढच्युते पावमानिके एवेति पृष्ठे स्तोत्रीय-नानात्वपक्षेऽपि पूर्ववत् प्रत्यक्षपरोक्षार्थे वारवन्तीयमेकमेव स्यादित्यत आह-रेवतीसंयोगादिति। अस्मिन् पक्षे उपपत्तिमाह—प्रत्यक्षाणीति। प्रकृतिपृष्ठ्यादिति। प्राकृतानां प्रत्यक्षाणां पाष्ठिकानां साम्नामेवात्र षडहेऽपि पृष्ठ्यत्वेन कल्पनात् प्रत्यक्षाणीति बहुवचननिर्देश इति भावः। उभयतः पारोक्ष्यादिति। ऋक्तः सामतश्च दार्ढच्युत-स्येत्यर्थः। प्रत्यक्षकात्स्न्यादिति। वारवन्तीयस्य ऋक्तः सामतश्च सर्वत्र प्रत्यक्षत्वेन विधानात्। गर्भिदर्शनाच्चेति। अप्तोर्यामे पृष्ठे तृचद्वये सामद्वयदर्शनात् अष्टौ गर्भिण इत्यादि-ष्वपि तथा दर्शनात्। अत्र प्राङ्क्यादिषु पूर्वेष्वहःसु एकतृच एव प्रत्यक्षपरोक्षसामद्वयदर्शनात्। अत्र षष्ठेऽहनि तृचद्वये सामद्वयकल्पन-मयुक्तमित्यस्वरसात्। पक्षान्तरमाह—एकतृचे वेति। रेवतीर्ण इति तृच एव वारवन्तीयदार्ढच्युते कार्ये। तत्र हेतुमाह—प्रत्यक्षेष्विति। अभि त्वा शूरेत्यादिप्रत्यक्षेषु तृचेषु विष्टुतीनाम् 21 आवृत्तिस्तोत्राणां तृचाधिकारात् एकतृच एव प्रकृतत्वात् उभयेषां

3. M[3] Om. न after उत्तरतृचे

4. B[1] M[1] My °मान° for °माने

6. B[1] M[1] My अविधानात् for विधानात्

10. M[3]B[2] पृष्ठात् for पृष्ठ्यात्; B[1] Om. प्राकृतानां···पारोक्ष्यादिति (L. 12); M[3] परोक्षाणाम् पाष्ठिकानां for प्रत्यक्षाणां पाष्ठिकानाम्

21. B[1] M[1] My प्राकृतत्वात् for प्रकृतत्वात्

रथन्तरकण्वरथन्तरादीनामेकतृच एव दर्शनात्। अत्रापि रेवतीर्ण (सा० १०८४-६) इति तृच एव वारवन्तीयदार्ढच्युते कल्प्ये इति भावः। एवं पञ्चमेऽहनि अपि एकतृचे सामद्वयप्राप्तावाह—न तु पञ्चम इति। भेदादिति। पूर्वेभ्योऽहोभ्यो भेदादित्यर्थः। तमेवोपपादयति न महानाम्नीष्वन्यदिति। महानाम्नीषु विदामघवन्नित्यादिषु अन्यस्य साम्नः श्रुतावदर्शनात् तृचद्वये सामद्वयं नियतमिति भावः। अस्य क्लृप्तिः। इन्द्रायेन्दविति गायत्रेषोवृधीयक्रौञ्चवाजदावर्यरैवतदार्ढच्युतानि। मृज्यमान (सा० १०७९-८०) इति स्वारमौक्ष्णोरन्ध्रैडमौक्ष्णोरन्ध्रे तृचयोः। ऐडमौक्ष्णोरन्ध्रस्वारमौक्ष्णोरन्ध्रे वा। कौल्मलबर्हिषवाजजिद्वरुण-सामानि सामतृचः। गोष्ठस्तिसृषु। एतमुत्यमिति इहवद्वाम-देव्यमन्त्यम्। रेवतीर्णेति वारवन्तीयं होतुः पृष्ठम्। यद्वा। रेवतीर्ण इति वारवन्तीयस्य प्रथमोत्तमौ पर्यायौ। रेवाँ इन्द्रे वेति दार्ढच्युतस्य मध्यमः। अथवा रेवतीर्णेति वारवन्तीयस्य प्रथमोत्तमौ पर्यायौ। तस्मिन्नेव तृचे दार्ढच्युतस्य मध्यमः। समानमितरत् षष्ठेन ॥२॥

द्वितीयमाह—

**परोक्षस्य प्रथमोत्तमौ पर्यायौ। प्रत्यक्षस्य मध्यमः। स प्रत्यक्षापवर्ग्यपृष्ठः षडहः ॥३॥**

इति। स्पष्टम्। प्रथमस्याह्नः। अभि त्वा शूरेति कण्वरथन्तरस्य प्रथमोत्तमौ पर्यायौ। तस्मिन्नेव तृचे रथन्तरस्य मध्यमः। इति होतुः पृष्ठम्। समानमितरत् प्रथमेन ॥

द्वितीयस्याह्नः। त्वामिद्धीति कण्वबृहतो वा बृहन्निधनवार्क-जम्भस्य वा प्रथमोत्तमौ पर्यायौ। तस्मिन्नेव तृचे बृहतो मध्यम इति होतुः पृष्ठम्। समानमितरत् द्वितीयेन ॥

6. B[2] M[3] अन्यत्र for अन्यस्य ; B[1] M[1] श्रुतादर्शनात्, S श्रुताद्दर्शनात् for श्रुतावदर्शनात्

10. B[1] M[1] My Om. ऐडमोक्ष्णो···°रन्ध्रे वा

तृतीयस्याह्नः । यद्द्याव इति हस्वावृहदोपशायाः प्रथमोत्तमौ पर्यायौ । अन्तरिक्षस्य महावैष्टम्भस्य वा । तस्मिन्नेव तृचे वैरूपस्य मध्यमः । इति होतुः पृष्ठम् । अन्तरिक्षपक्षे मध्यंदिने अन्तरिक्षस्य स्थाने अञ्जोवैरूपम् । महावैष्टम्भपक्षे वयं घ त्वेति अभिनिधनं काण्वं ब्रह्मणः । इति विशेषः । समानमितरत् तृतीयेन ॥

चतुर्थस्याह्नः । पिबा सोम-(सा० ९२७-९)मिति ऋषभस्य वैराजस्य वा सहोदैर्घतमसस्य वा वसिष्ठस्य वैराजस्य वा प्रथमोत्तमौ पर्यायौ । तस्मिन्नेव तृचे महावैराजस्य मध्यम इति होतुः पृष्ठम् । समानमितरत् चतुर्थेन ॥

पञ्चमस्याह्नः । त्रिकद्रुकेष्विति नित्यवत्सानां प्रथमोत्तमौ पर्यायौ । इन्द्रायाहि-यदिन्द्र चित्रम इत्येतासु अतीषङ्गाणां प्रथमस्य वा । विदामघवन्नित्येतासु महानाम्नीनां मध्यमः । इति होतुः पृष्ठम् । समानमितरत् पञ्चमेन ॥

षष्ठस्याह्नः । इन्द्रायेन्दवि-( सा० १०७६-८ )ति गायत्रेषोवृधीयक्रौञ्चवाजदावर्यदार्ढच्युतरैवतानि । मृज्यमान ( सा० १०७९-८० ) इति स्वारमौक्ष्णोरन्ध्रैडमौक्ष्णोरन्ध्रे तृचयोः । कौल्मलबर्हिषवाजजिद्वरुणसामानि सामतृचः । गोष्ठस्तिसृषु । एतमु त्यमि-( सा० १०८१-३ )ति इहवद्वामदेव्यमन्त्यम् । रेवतीर्न-( सा० १०८४-६)ति वारवन्तीयं होतुः पृष्ठम् । यद्वा । रेवाँ इद्रेवे-(सा० १८०४-६)ति दार्ढच्युतस्य प्रथमोत्तमौ पर्यायौ । रेवतीर्नेति वारवन्तीयस्य मध्यमः । अथवा । रेवतीर्नेति दार्ढच्युतस्य प्रथमोत्तमौ पर्यायौ । तस्मिन्नेव तृचे वारवन्तीयस्य मध्यमः । समानमितरत् षष्ठेन ॥३॥

[ परोक्षप्राङ्क्य-प्रत्यक्षप्राङ्क्यपृष्ठौ ]

षोडशसप्तदशयोः स्वरूपमाह—

**अथातः प्राङ्क्यपृष्ठौ षडहौ ॥**

---

15. B[1] इन्द्रायाहि for इन्द्रायेन्दो

इति। अङ्कं स्थानमर्हतीति अङ्क्यम्। प्रत्यक्षाणां पृष्ठानाम् उभयत्र स्थानात् किंचित्प्रच्युतत्वात् प्राङ्क्यत्वम्। प्राङ्क्यानि पृष्ठानि ययोस्तौ तथोक्तौ ॥

उभयोर्धर्मभेदेन संज्ञामाह—

**परोक्षप्राङ्क्यपृष्ठश्च प्रत्यक्षप्राङ्क्यपृष्ठश्च ॥४॥**

इति ॥४॥

क्लृप्तिमाह—

**तयोः कल्पः। परोक्षस्य प्रथमः पर्यायः। प्रत्यक्षस्योत्तरौ। स परोक्षप्राङ्क्यपृष्ठः षडहः ॥५॥**

इति। स्पष्टम्। प्रथमस्याह्नः अभि त्वा शूरे-(सा० ६८०-१)ति कण्वरथन्तरस्य प्रथमः पर्यायः। तस्मिन्नेव तृचे रथन्तरस्योत्तरौ। इति होतुः पृष्ठम्। समानमितरत् प्रथमेन ॥

द्वितीयस्याह्नः। त्वामिद्धी-(सा० ८०९-१०)ति कण्वबृहतः प्रथमः पर्यायः। बृहन्निधनस्य वार्कजम्भस्य वा। तस्मिन्नेव तृचे बृहत उत्तरौ। इति होतुः पृष्ठम्। समानमितरत् द्वितीयेन ॥

तृतीयस्याह्नः। यद्द्याव (सा० ८६२-३) इति ह्रस्वाबृहदोपशायाः अन्तरिक्षस्य वा महावैष्टम्भस्य वा प्रथमः पर्यायः। तस्मिन्नेव तृचे वैरूपस्योत्तरौ। इति होतुः पृष्ठम्। अन्तरिक्षपक्षे मध्यंदिने अन्तरिक्षस्य स्थाने अञ्जोवैरूपम्। महावैष्टम्भपक्षे वयं

1. P B² S after अङ्क्यम् ins. प्राङ्क्यम्

8. P प्रत्यक्षस्य for परोक्षस्य

9. P परोक्षस्य for प्रत्यक्षस्य

17. S द्वितीयस्याह्नः for तृतीयस्याह्नः; B²M³ repeats द्वितीयस्याह्नः ··· द्वितीयेन (L. 14-16) in place of तृतीयस्याह्नः ··· अन्तरिक्षपक्षे (L. 17-19)

घ त्वेति अभिनिधनं काण्वं ब्रह्मणः। इति होतुः पृष्ठम्। अन्यत् सर्व तृतीयाहवत् ॥

चतुर्थस्याह्नः। पिबा सोमे-(सा० ६२७-६)ति ऋषभस्य वैराजस्य वा सहोदैर्घतमसस्य वा वसिष्ठस्य वैराजस्य वा प्रथमः पर्यायः। महावैराजस्योत्तराविति होतुः पृष्ठम्। समानमितरत् चतुर्थेन ॥

पञ्चमस्याह्नः। त्रिकद्रुकेष्वि-(सा० १४८६-८)ति नित्य-वत्सानां प्रथमः पर्यायः। इन्द्रायाहि-(सा० ११४६-८)-यदिन्द्र चित्रमे-(सा० ११७२-४)त्येतासु अतीषङ्गाणां प्रथमस्य वा। विदामघवन्निति एतासु महानाम्नीनामुत्तरौ इति। इति होतुः पृष्ठम्। समानमितरत् पञ्चमेन ॥

षष्ठस्याह्नः। रेवतीर्ण इति वारवन्तीयं होतुः पृष्ठम्। यद्वा। रेवाँ इद्रेति दार्ढच्युतस्य प्रथमः पर्यायः। रेवतीर्णेति वारवन्तीय-स्योत्तरौ। अथवा। रेवतीर्णेति दार्ढच्युतस्य प्रथमः पर्यायः। तस्मिन्नेव तृचे वारवन्तीयस्योत्तरौ। अन्यत् सर्वं प्रत्यक्षापवर्यपृष्ठ-षडहषष्ठाहवत् ॥५॥

द्वितीयमाह—

**प्रत्यक्षस्य प्रथमः पर्यायः। परोक्षस्योत्तरौ। स प्रत्यक्षप्राङ्क्यपृष्ठः षडहः ॥६॥**

इति ॥६॥

---

12. S B[1] Om. पृष्ठम्

13. M[1] Om.प्रथमः···वारवन्तीयं होतुः पृष्ठम् (P. 184, L. 7)

18. P परोक्षस्य for प्रत्यक्षस्य; P प्रत्यक्षस्योत्तरौ for परोक्षस्योत्तरौ; B[1-3] M[1] M[3] S My Om. प्रत्यक्षस्य···षडहः (p. 183, L. 6)

[ परोक्षोपाङ्क्य-प्रत्यक्षोपाङ्क्यपृष्ठौ ]

**अथात उपाङ्क्यपृष्ठौ षडहौ। परोक्षोपाङ्क्य-पृष्ठश्च प्रत्यक्षोपाङ्क्यपृष्ठश्च ॥७॥**

[ क्लृप्तिमाह ]—

**तयोः कल्पः। प्रत्यक्षस्य पूर्वौ पर्यायौ। परोक्षस्योत्तमः। स परोक्षोपाङ्क्यपृष्ठः षडहः ॥८॥**

[ द्वितीयमाह ]—

**परोक्षस्य पूर्वौ पर्यायौ प्रत्यक्षस्योत्तमः। स प्रत्यक्षो-पाङ्क्यपृष्ठः षडहः ॥९॥**

इति। स्पष्टम्। प्रथमस्याह्नः। अभि त्वा शूरे-(सा० ६८०-१)ति कण्वरथन्तरस्य पूर्वौ पर्यायौ। तस्मिन्नेव तृचे रथन्तरस्योत्तमः। इति होतुः पृष्ठम्। समानमितरत् प्रथमेन ॥

द्वितीयस्याह्नः। त्वामिद्धीति बृहन्निधनवार्कजम्भस्य वा कण्व-बृहतो वा पूर्वौ पर्यायौ। तस्मिन्नेव तृचे बृहत उत्तमः। इति होतुः पृष्ठम्। समानमितरत् द्वितीयेन ॥

तृतीयस्याह्नः—यद् द्याव (सा० ८६२-३) इति ह्रस्वाबृहदो-पशायाः अन्तरिक्षस्य वा महावैष्टम्भस्य वा पूर्वौ पर्यायौ। वैरूपस्योत्तमः। इति होतुः पृष्ठम्। अन्तरिक्षपक्षे मध्यंदिने अन्तरिक्षस्य स्थाने अञ्जोवैरूपम्। महावैष्टम्भपक्षे वयं घ त्वेति अभि-निधनं काण्वं ब्रह्मणः। समानमितरत् तृतीयेन ॥

चतुर्थस्याह्नः। पिबा सोम-(सा० ९२७-९)मिति ऋषभस्य वैराजस्य वा सहोदैर्घतमसस्य वा वसिष्ठस्य वैराजस्य वा पूर्वौ

---

2. Om. परोक्षोपाङ्क्य···स (L. 6)

11. B[3] M[3] after तृचे add बृहद्

पर्यायौ । महावैराजस्योत्तमः । इति होतुः पृष्ठम् । समानमितरच्चतुर्थेन ॥

पञ्चमस्याह्नः । त्रिकद्रुकेष्वि(सा० १४८६-८)ति नित्यवत्सानां पूर्वौ पर्यायौ । इन्द्रायाहि-यदिन्द्रचित्रमेति एतासु अतीषङ्गाणां प्रथमस्य वा । विदामघवन्निति एतासु महानाम्नीनामुत्तमः । इति होतुः पृष्ठम् । समानमितरत् पञ्चमेन ॥

षष्ठस्याह्नः—रेवतीर्ण इति वारवन्तीयं होतुः पृष्ठम् । यद्वा । रेवाँ इन्द्रे-(सा० १८०४-६)ति दार्ढच्युतस्य पूर्वौ पर्यायौ । रेवतीर्णेति वारवन्तीयस्योत्तमः । अथवा । रेवतीर्णेति दार्ढच्युतस्य पूर्वौ पर्यायौ । तस्मिन्नेव तृचे वारवन्तीयस्योत्तमः । अन्यत् सर्वं परोक्षप्राङ्क्रच-षडहषष्ठाहवत् ॥

ननु उत्तरपक्षद्वये माध्यंदिनपवमानहोतुःपृष्ठयोरुभयत्र दार्ढच्युतस्य करणे संचारदोष इति चेत् । मैवम् । निदानकारेण विधानात् न दोषः । यथा आपकर्यादिविश्वजित्सु प्रथमोक्तयोः स्तोत्रीययोः रथन्तरस्य मध्ये कण्वरथन्तरस्य विधानेऽपि संचारस्य दोषत्वं नाङ्गीकृतं निदानकारेण । यथा वा अनुरूपाग्निष्टोमसाम द्वादशाहे षष्ठेऽहनि वारवन्तीयस्य होतुः पृष्ठे अग्निष्टोमसाम्नि च विधानेऽपि कल्पकारेण संचारस्य दोषत्वं नाङ्गीकृतम् । तद्वदत्रापीति निदानकारस्याशयः । यद्वा । जैमिनिकल्पसूत्रे संसदामयनमध्यगतपृष्ठस्तोमषडहे षष्ठेऽहनि रेवतीनामायतने आमहीयवं वा दार्ढच्युतं वा इति विधानात् अत्रापकर्यादिषु माध्यंदिनपवमाने आमहीयवरैवतयोः होतुः पृष्ठे च होतुः पृष्ठपर्यायानुपूर्वेण

---

13. M[3] °च्युतकरणे, B[1] °च्युतस्याकरणे

17. M[3] पृष्ठं for पृष्ठे

18. B[2] M[3] यद्वा । तत्रापीति for तद्वदत्रापीति

21. M[1] अत्रापङ्क्त्यादिषु for अत्रापकर्यादिषु

वारवन्तीयदार्ढच्युतयोः कल्पने सति न संचारदोषः। निदानसूत्रोक्तपक्षद्वयेऽपि प्रथमपक्ष एव गरीयानिति सर्वसंमतम् ॥६॥

इति द्वितीये प्रपाठके त्रयोदशः खण्डः ॥१३॥

---

चतुर्दशः खण्डः

[ बृहद्रथन्तरपृष्ठोऽनुगृहीतपृष्ठः ]

अष्टादशस्वरूपमाह—

**अथातो बृहद्रथन्तरपृष्ठः सन् षडहोऽनुगृहीतपृष्ठः ॥१॥**

**तस्य कल्पः। तृतीयस्याह्नो वैरूपं मध्यंदिने बृहत्यामनुक्लृप्तम्। चतुर्थस्याह्नो वैराजमार्भवेऽनुष्टुभि। पञ्चमस्याह्नः शक्वर्यो मध्यंदिने बृहत्यामनुक्लृप्ताः। षष्ठस्याह्नो रेवत्य आर्भवे गायत्र्याम्। सोऽनुगृहीतपृष्ठः षडहः ॥२॥**

इति। स्पष्टम्। अस्य क्लृप्तिः षण्णामह्नां पृष्ठस्तोमषडहवत् कार्या। उत्तरस्य चतुरहस्य तु तृतीयपञ्चमयोरह्नोः पुरस्ताज्ज्योतिःषडहवत् माध्यंदिनपवमानः कार्यः। तृतीयेऽहनि प्रथमपक्ष एव ग्राह्यः। चतुर्थषष्ठयोः अह्नोरुपरिष्टाज्ज्योतिः षडहवदार्भवपवमानः कार्य इति विशेषः ॥२॥

[ बृहद्रथन्तरपृष्ठोऽनुगृहीतपरोक्षपृष्ठः ]

एकान्नविंशस्वरूपमाह—

**अथातो बृहद्रथन्तरपृष्ठ एव सन् षडहोऽनुगृहीतपरोक्षः ॥३॥**

---

2. S °त्रये for द्वये

7. B[2] M[3] °हीतः for °हीत° ; B[1] S °पृष्ठ्यः for पृष्ठः

12. S °पृष्ठ्यः for °पृष्ठः

14. M[1] M[3] Om. तु

**तस्य कल्पः। प्रत्यक्षाणां स्थाने परोक्षाणि। सोऽनुगृहीतपरोक्षः षडहः ॥४॥**

इति। स्पष्टम्। अस्य क्लृप्तिः षण्णामह्नां पृष्ठ्यस्तोमषडहवत् कार्या। उत्तरस्य चतुरहस्य तृतीयपञ्चमयोरह्नोरुपाङ्क्यपृष्ठ्यषडहवत् माध्यंदिनपवमानः कार्यः। चतुर्थषष्ठयोरह्नोर्धर्मभेदेनान्वाहार्यपृष्ठ्यषडहवत् आर्भवपवमानः कार्य इति विशेषः ॥४॥

[ नानापृष्ठोऽनुगृहीतबृहद्रथन्तरः ]

त्रिंशस्वरूपमाह—

**अथातो नानापृष्ठः सन् षडहोऽनुगृहीतबृहद्रथन्तरः। तस्योक्तः कल्पः कर्मणि ॥५॥**

इति। स्पष्टम्। अस्य क्लृप्तिः षण्णामह्नां प्राकृतषडहवत्। तृतीयपञ्चमयोरह्नोः बृहद्रथन्तरपुरस्ताज्ज्योतिषडहवत् माध्यंदिनपवमानः कार्यः। तृतीयेऽहनि प्रथमपक्ष एव ग्राह्यः। चतुर्थषष्ठयोरह्नोर्बृहद्रथन्तरोपरिष्टाज्ज्योतिःषडहवत् आर्भवपवमानः कार्यः। इति विशेषः ॥५॥

[ नानापृष्ठोऽनुगृहीतबृहद्रथन्तरपरोक्षतरः ]

एकत्रिंशस्वरूपमाह—

**अथातो नानापृष्ठ एव सन् षडहोऽनुगृहीतपरोक्षतरः ॥६॥**

**तस्य कल्पः। प्रत्यक्षयोः स्थाने परोक्षाणि। सोऽनुगृहीतपरोक्षतरः षडहः ॥७॥**

---

2. M[3] B[2] °गृहीतः for °गृहीत°

9. B[1] S My M[1] उक्तकल्पकर्माणि for उक्तः कल्पः कर्मणि ; B[2] कर्माणि for कर्मणि

14. B[3] M[3] Om. इति विशेषः

इति। प्रत्यक्षयोः रथन्तरबृहतोः स्थाने कण्वरथन्तरकण्वबृहती उत्तरस्य चतुरहस्य व्यत्यासेन कार्ये। चतुरहाभिप्रायेण परोक्षाणीति बहुवचननिर्देशः। स्पष्टमन्यत्। अस्य क्लृप्तिः षण्णामह्नां नानापृष्ठ्यषडहोऽनुगृहीतबृहद्रथन्तरवत्। उत्तरस्य चतुरहस्य तु तृतीयपञ्चमयोरह्नोः रथन्तरस्य स्थाने कण्वरथन्तरम्। चतुर्थषष्ठयोरह्नोर्बृहतः स्थाने कण्वबृहद्वा। बृहन्निधनवार्कजम्भं वा। इति विशेषः ॥७॥

[ ब्रह्मसामपृष्ठ ]

द्वाविंशस्वरूपमाह—

**अथातो ब्रह्मसामपृष्ठः षडहः ॥८॥**

इति। ब्रह्मसामानि नौधसश्यैतमहावैष्टम्भत्रैशोकबार्हद्गिरऋषभरैवतानि होतुः पृष्ठानि यस्मिन् स तथोक्तः ॥८॥

संज्ञान्तरमाह—

**अपि च तनुपृष्ठ इत्याचक्षते ॥९॥**

इति वा। यज्ञस्य शरीररूपाणि ब्रह्मसामानि पृष्ठानि यस्मिन् स तथोक्तः। ब्रह्मसाम्नां यज्ञतनूत्वं सर्वथा सवनत्रयेऽप्यैन्द्रत्वात्। अथ कस्मादैन्द्रो यज्ञ आसंस्थातोरित्याहुरिन्द्रस्य वा एषा यज्ञिया तनुर्यद्यज्ञस्तामेव तद्यजन्ति (तै० सं० ३.३.७.३) इति तैत्तिरीयश्रुतेः। ऐन्द्रो ब्राह्मणाच्छंसी-(तै०ब्रा० १.७.६.१)ति श्रुत्या च यज्ञो वा इन्द्र इति शतपथश्रुत्या च ज्ञेयं यज्ञशरीरं ब्राह्मणाच्छंसी। आत्मा वै होता (ऐ० ब्रा० ६.८) इति श्रुतेः ॥९॥

क्लृप्तिमाह—

**ब्रह्मसामानि पृष्ठानि पृष्ठानि ब्रह्मसामानि सस्तोत्रीयाणि सधर्माणि। स ब्रह्मसामपृष्ठः षडहः ॥१०॥**

---

2. B[1] after चतुरहस्य adds तु ; M[3] B[3] after °प्रायेण ins. आह

12. S M[3] पृष्ठा for पृष्ठ

21. B[1] S B[2] M[3] My Om. पृष्ठानि ब्रह्मसामानि

इति । ब्रह्मसामस्तोत्रीयाणीत्यर्थः । सधर्माणि उपसरणादिधर्मसहितानीति यावत् ॥

अस्य क्लृप्तिः । प्रथमस्याह्नः—स्वासु नौधसं होतुः पृष्ठम् । नौधसं पिबत्विति पृष्ठहोमे विशेषः । अत्र उपसरणादिकं कार्यम् । स्वासु रथन्तरं ब्रह्मणः । रथन्तरस्तवनकाले रथघोषः । समानमितरत् प्रथमेन ॥

द्वितीयस्याह्नः—स्वासु श्यैतं होतुः पृष्ठम् । श्यैतं पिबत्विति पृष्ठहोमे विशेषः । अत्र उपसरणादिकं कार्यम् । स्वासु बृहद् ब्रह्मणः । बृहत्स्तवनकाले दुन्दुभिघोषः । समानमितरत् द्वितीयेन ॥

तृतीयस्याह्नः—स्वासु महावैष्टम्भं होतुः पृष्ठम् । महावैष्टम्भं पिबत्विति पृष्ठहोमे विशेषः । अत्र उपसरणादिकं कार्यम् । यद् द्याव इति वैरूपं ब्रह्मणः । अत्र पृष्ठधर्माः कार्याः । समानमितरत् तृतीयेन ॥

चतुर्थस्याह्नः—स्वासु त्रैशोकं होतुः पृष्ठम् । त्रैशोकं पिबत्विति पृष्ठहोमे विशेषः । अत्र उपसरणादिकं कार्यम् । स्वासु महावैराजं ब्रह्मणः । अत्र पृष्ठधर्माः कार्याः । समानमितरच्चतुर्थेन ॥

पञ्चमस्याह्नः—स्वासु बार्हद्गिरं होतुः पृष्ठम् । बार्हद्गिरं पिबत्विति पृष्ठहोमे विशेषः । अत्र उपसरणादिकं कार्यम् । महानाम्न्यो ब्रह्मणः । अत्र पृष्ठधर्माः कार्याः । समानमितरत् पञ्चमेन ॥

षष्ठस्याह्नः—स्वासु ऋषभरैवतं होतुः पृष्ठम् । ऋषभरैवतं पिबत्विति पृष्ठहोमे विशेषः । अत्र उपसर्पणादिकं कार्यम् । रेवतीषु वारवन्तीयं ब्रह्मणः । अत्र पृष्ठधर्माः कार्याः । समानमितरत्षष्ठेन ॥

---

4. S B[2] before कार्यम् add च

18. B[1] ब्रह्मसाम for ब्रह्मणः

गवामयने षष्ठे मासि त्रयोऽभिप्लवाः षडहाः पृष्ठ्यः षडहः अभिजित्त्रयः स्वरसामानः । प्रायणीयातिरात्रश्चतुर्विंशाभ्यां सह मासषट्कपूर्तिः । मध्ये विषुवान् । दिवाकीर्त्यमेकमहः । सप्तमे मासि आवृत्तास्त्रयः स्वरसमानः । विश्वजिदावृत्तः । पृष्ठ्यः षडहः । त्रयोऽभिप्लवाः षडहाः । अत्र षष्ठसप्तमयोर्मासयोरह्नः क्लृप्तौ पक्षद्वयमुक्तम् । नवाहकारिणः एकविंशत्यहकारिण इति । अभिजित् । त्रयः स्वरसामानः । दिवाकीर्त्यम् । आवृत्तस्वरसामानः । विश्वजित् । इत्येतानि नवाहानि । अभिजित् । पृष्ठ्यः षडहः । त्रयः स्वरसामानः । दिवाकीर्त्यम् । आवृत्तास्त्रयः स्वरसामानः । आवृत्तः पृष्ठ्यः षडहः । विश्वजित् । इत्येतानि एकविंशत्यहानि ॥१०॥

तत्र एकविंशत्यहपक्षे पृष्ठ्यषडहे विकल्पानाह—

**अथात एकविंशत्यहे पृष्ठ्यमन्तरुपयन्तः तृतीयषष्ठे अहनी सस्तोमे सतन्त्रे सपृष्ठे ससंस्थे व्यतिहरेयुः ॥११॥**

इति । एकविंशत्यहपक्षे अन्तः मध्ये पृष्ठ्यं षडहम् उपयन्तः कुर्वन्तः सत्रिण इत्यर्थः । कुत्र ते किं कुर्युरित्याकाङ्क्षायामाह—तृतीयषष्ठ इति । स्पष्टम् ॥११॥

पक्षान्तरमाह—

**स्तोमौ वैनयोर्व्यतिहरेयुः ॥१२॥**

इति । स्पष्टम् । अस्य क्लृप्तिः प्रथमद्वितीययोरह्नोः प्रकृतिवत् ॥

---

4. B[2] Om. पृष्ठ्यः···°प्लवाः

5. M[3] Om. षडहः···प्लवाः ; B[2] M[3] S after षडहाः add समासः

19. B[2] M[3] Om. पक्षान्तरम्···स्पष्टम् (L. 21)

तृतीयस्याह्नः— दविद्युतत्येते राजा तन्त्वानृम्णानीति पञ्चर्चम् । असृग्रं नवर्चम् । यवं यवं ( सा० ९७५ ) चतुर्ऋचम् । अपघ्नन् पवसे मृध-(सा० १२३६) ईषे पवस्व-धारये-( सा० ८४१–३ )ति बहिष्पवमानम् । अग्निना-मित्रं-हुव-इन्द्रेण-ता हुव (सा० ८४४–५५) इत्याज्यानि । उच्चा त इति गायत्रक्षुल्लकवैष्टम्भसौमित्रैटतानि । अभि सोमे-(सा० ८५६–८ )ति पौरुमद्गसदोविशीयगौतमान्तरिक्षमैधातिथाष्कारणिधनकाण्वानि । तिस्रो वाच (सा० ८५९-६१ ) इत्यङ्गिरसां संक्रोशोऽन्त्यः । सर्वे तृचाः । वैरूपवामदेव्यमहावैष्टम्भरौरवाणि पृष्ठानि । तिस्रो वाच उदीरत (सा० ८६९-७१) इति गायत्र-पाष्ठौहैडंसिन्धुक्षितानि । आसो- ( सा० १३९४ )- सखे- (सा० ११५७)ति वाचःसामशौक्ते । सुतासो मे-(सा० ८७२-४)ति गौरीवितसाध्रश्यावाश्वत्रिणिधनत्वाष्ट्रीसामस्वारत्वाष्ट्रीसामानि । पवित्रं त ( सा० ८७५-७ ) इत्यरिष्टमन्त्यम् । सर्वे तृचाः । यज्ञायज्ञीयमग्निष्टोमसाम । प्रमंहिष्ठीयहारिवर्णतैरश्चमित्युक्थानि । सर्वं त्रयस्त्रिंशम् । चतुर्थपञ्चमयोरह्नोः प्रकृतिवत् ॥

षष्ठस्याह्नः—असृक्षत-(सा० १०३४-६) - एतमु त्यं ( सा० १०८१ - ३) पवस्वदेव वी-( सा० १०३७-४६ )रिति दशर्चम् । एते सोमा अभि प्रिय-( सा० ११७८-९ )मिति बहिष्पवमानम् । दशर्चस्यान्त्योपान्त्ययोरुद्धारः । स्तोमासंभवात् । यमग्ने पृत्सु-( सा० १४१५ - ७ )-प्रति - भिन्धि यज्ञस्ये-( सा० १०६७-७५ )-त्याज्यानि । इन्द्रायेन्द-(सा० १०७६ - ८)विति गायत्रं तिसृषु । इषोवृधीयक्रौञ्चवाजदावर्यः सामतृचः । रेवत्यस्तिसृषु । मृज्यमान ( सा० १०७९-८० ) इति स्वारमौक्ष्णोरन्ध्रैडमौक्ष्णोरन्ध्रे प्रथमायाम् । वाजजिद्वरुणसामगोष्ठाः सामतृचः । अया पवा

23. S On, इषो··· तिसृषु ; S My दावर्याः for दावर्यः

पवस्वे-(सा० ११०४-६)ति इहवद्वासिष्ठमन्त्यं तिसृषु । वारवन्तीय-वामदेव्यऋषभरैवतश्येनाः पृष्ठानि । परिस्वान (सा० १०६३-५) इति गायत्रं तिसृषु । तृतीयाद्यचतुर्थवैदन्वतानि सामतृचः । ससु-तं वः सखे-(सा० १०६६-७)ति दीर्घकार्णश्रवसे एकर्चयोः । सोमाः पवन्तः (सा० ११०१-३) इति गौरीवितमधुश्चुन्निधनशाङ्‌ निधनक्रौञ्चानि सामतृचः । ऐडंक्रौञ्चं तिसृषु । ज्योतिर्यज्ञस्ये-(सा० १०३१-३)ति मरुतांधेन्वन्तम् । यज्ञायज्ञीयमग्निष्टोमसाम । गूर्दभद्रोद्वंशपुत्रा उक्थानि । सर्वं सप्तदशम् ॥१२॥

पक्षान्तरमाह—

**सप्तदशं वोद्‌धृत्य प्राचः स्तोमान् समूह्य षष्ठ-तन्त्रे सप्तदशं कल्पयेयुः ॥१३॥**

इति । पृष्ठे षडहे क्रमप्राप्तं सप्तदशं स्तोमं तृतीयमहरुद्‌धृत्य एकविंशतित्रिणवत्रयस्त्रिंशस्तोमानि चतुर्थपञ्चमषष्ठान्यहानि । समूह्य कल्पयित्वा पृष्ठतन्त्रे समाप्ते मध्वशनादीनि कृत्वा षष्ठे दिने उद्‌धृतं सप्तदशं स्तोमं तृतीयमहः कल्पयेयुः स्थापयेयुरित्यर्थः । अयमर्थः सामगाचार्यैः स्वप्नोपदिष्टः । अत्र प्रमाणं तलवकारश्रुति-रिति च । तदुक्तं जैमिनीयकल्पसूत्रे—पृष्ठषडहस्य यन्मध्ये सप्त-दशमहस्तदुपरिष्टात् त्रयस्त्रिंशस्य पर्यूहति इति । तथा च शाट्यायनिब्राह्मणम्—तदाहुः स्तोमकृन्तत्रमिव वा एतत्स्तोमा यन्ति यत् त्रयस्त्रिंशत् सप्तदशमुपयन्ती-(जैमि०ब्रा० २.३८६)ति । अस्मद्‌ब्राह्मणेऽपि—तदाहुः कर्तप्रस्कन्द इव वा एष यत् त्रयस्त्रिंशत् सप्तदशमुपयन्तीति पृष्ठचोऽन्तरः कार्यः ॥ तस्य यत् सप्तदशमहस्तदुत्तमं कार्यं सलोमत्वाय ॥ तदाहुरुदर वा एष स्तोमानां यत् सप्तदशो यत् सप्तदशं मध्यतो निर्हरेयुरशनायवः

---

10. My M[1] B[2]M[3] S पृष्ठ° for षष्ठ°

17. S जैमिनि° for जैमिनीय°

प्रजाः स्युरशनायवः सत्रिणः इति ॥ त्रयस्त्रिंशादेव सप्तदश उपेत्यो वर्ष्म वै त्रयस्त्रिंशो वर्ष्म सप्तदशो वर्ष्मण एव तद्वर्ष्माभिसङ्क्रामन्ति (तां० ब्रा० ४. ५. १३-१६) इति विहित प्रतिषिद्धत्वात् वैकल्पिकत्वम् । तलवकारश्रुतावप्रतिषिद्धत्वात् नित्यत्वम् ॥१३॥

अत्रैव पक्षान्तरमाह—

**प्रसिद्धं त्वेवोपेयू रथन्तरपृष्ठमेव ॥१४॥**

इति रथन्तरपृष्ठ एव प्रसिद्धमेव सप्तदशस्तोमं तृतीयमेवाहः उपेयुः कुर्युरित्यर्थः । वैरूपनिवृत्त्यर्थः तु-शब्दः । पूर्वस्मिन् पक्षे वैरूपं पृष्ठम् । उत्तरस्मिन् पक्षे रथन्तरं पृष्ठम् । त्रयस्त्रिंशादनन्तरभाविन एवोद्धृत्य सप्तदशस्तोमस्य तृतीयस्याह्नः वैरूपरथन्तरयोरन्यतरस्य पृष्ठत्वेन कल्पनमित्याचार्यस्याशयः । रथन्तरपृष्ठपक्षे प्रथमस्वरसामाहे बृहत्याम् अभिसोमास (सा० ८५६-८) इति पौरुहन्मनं प्रथमायाम् । द्वैगतमैधातिथबृहन्निधनवार्कजम्भानि सामतृचः । गौङ्गवं तिसृषु । यौधाजयमध्यास्याम् । इति विशेषः । आवृत्तेषु स्वरसामसु तृतीयमहः प्रकृतिवत् । ततः सप्तदशस्तोमे तृतीयेऽहनि बृहत्यामभिसोमास इति पौरुमद्गं प्रथमायाम् । उभयतः स्तोभगौतमबृहन्निधनवार्कजम्भमैधातिथानि सामतृचः । अन्तरिक्षं तिसृषु । आष्कारणिधनमध्यास्यायाम् । इति विशेषः । ततस्त्रयस्त्रिंशादिरावृत्तः । पृष्ठ्यः षडहः । अत्र द्वयोरप्यह्नोः रथन्तरस्य पृष्ठत्वात् जामि स्यात् । तत्परिहारार्थं बृहन्निधनवार्कजम्भस्य करणम् । उत्तमत्रयस्त्रिंशद्रात्रे आवृत्ताभिप्लवपञ्चाहे तथा दर्शनात् ॥१४॥

---

7. P अथ य एव, V अत एव, $B^1$ S रथन्तर एव for रथन्तरपृष्ठमेव; $M^3B^2$ Om. रथन्तरपृष्ठमेव

11. $B^3$ $M^3$ Om. भाविनः'' रथन्तर° (L. 12)

उक्तानां षडहविचाराणां संवत्सरसत्रेषु पृष्ठ्यषडहप्राचुर्यात् प्रायेण तेषु कर्तव्यतेत्याह—

संवत्सरे षडहस्य पृष्ठतो विचारः ॥१५॥

इति। यद्याहीनिकः अथ यदि सात्रिक इति स्ववचनेनैव द्वादशाद्यहीनसत्रान्तर्गतपृष्ठ्यषडहेष्वपि तेषां कर्तव्यत्वविधानात् संवत्सर एवेति न नियमः। तदुक्तं निदाने—यद्याहीनिके (उ० ग्र० सू० ३.६) इति। संवत्सराङ्गभूतस्य नोपपद्यते। द्वादशाङ्गभूते तु उभयमुपपद्यते। यद्याहीनिकोऽथ यदि सात्रिक इति तस्माद् द्वादशाङ्गाः स्युरिति द्वादशाहविकृतित्वविधानात् षड्रात्राद्यहीनानां त्रयोदशरात्रादिसत्राणां च तत्रस्थपृष्ठषडहेष्वप्येते विचारा भवन्त्येव ॥१५॥

विश्वजिति षण्णां पृष्ठानां ब्राह्मणेन विधानात् तत्रैतान् षडहविचारानतिदिशति—

ते विश्वजितः ॥१६॥

इति। एकाहभूते सत्राहीनाङ्गभूते च विश्वजिति निदानकारोक्तन्यायेन एते विचाराः प्रवर्तन्त एव। विश्वजिच्छिल्पाप्तोर्याम्णोरपि षट्पृष्ठसमवायात् तत्रापि षडहविचाराः विश्वजिन्न्यायेन प्रवर्तन्त एव। निदानसूत्रोक्तप्रकारेण द्वाविंशतिधा भिन्नानां षडहविचाराणां विश्वजिति क्लृप्तिर्लिख्यते। तत्र नानापृष्ठविश्वजितः क्लृप्तिः—उप त्वाजा (सा० १५७०-२)-जनीयन्तो न्वग्रवः-उत नः प्रियाप्रियासु-तत्सवितुः-सोमानां स्वरणम् अग्न आयूंषि पवसे (सा० १४६०-४)-पवमानस्य ते कव (सा०

1. B[2] M[3] पृष्ठ° for पृष्ठ्य°

9. B[2] °विकृतित्वात् for °विकृतित्वविधानात्

10. B[1] before °पृष्ठ° ins. ins. स्व°

६५७-९) इति बर्हिष्पवमानम् । सुषमिद्धो न आवह (सा० १३४७-५०) ता नः शक्तं-युञ्जन्ति ( सा० १४६५-७० )-तमीडिष्वे-( सा० ११४९-५१ )त्याज्यानि । अस्य प्रत्नाम् ( सा० ७५५-७ ) इति गायत्रामहीयवे । परीतोषी-(सा० १३१३-५)ति कालेयमेकस्याम् । रथन्तरदैर्घश्रवसे तृचयोः । यौधाजयमध्यास्यायाम् । अयं सोम (सा० १४७१-३) इति पार्थमन्त्यम् । वैराजमहानाम्नीवैरूपरैवतानि पृष्ठानि । परि स्वान (सा० १०९३-५) इति गायत्रसंहिते । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सत्रासाहीयश्रुध्ये । पर्यूष्वि-(सा० १३६४-६)ति वामदेव्यम् । पुरोजिती-(सा० ६९७-९)ति आन्धीगवगौरीवितयद्वाहिष्ठीयानि सामतृचः । यज्ञायज्ञीयं तिसृषु । परि प्र धन्वेति द्विपदासु वारवन्तीयम् । सूर्यवतीषु कावमन्त्यम् । त्वमग्ने यज्ञानाम् (सा० १४७४-६) इति बृहदग्निष्टोमसाम । एकाहीनयोस्तु पुरोजित्याम् आन्धीगवयज्ञायज्ञीये तृचयोरिति विशेषः । त्रिवृद्बहिष्पवमानम् । पञ्चदशं होतुराज्यम् । सप्तदशं प्रस्तोतुः । एकविंशं ब्रह्मणः । पञ्चदशमच्छावाकस्य । सप्तदशो माध्यंदिनः पवमानः । एकविंशं होतुः पृष्ठम् । तृणवं प्रशास्तुः । सप्तदशं ब्रह्मणः । एकविंशमच्छावाकस्य । तृणव आर्भवः । त्रयस्त्रिंशोऽग्निष्टोम इति ॥

अथ परोक्षपृष्ठविश्वजितः । माध्यंदिने रथन्तरस्य स्थाने कण्वरथन्तरम् । त्वमग्ने यज्ञाना-(सा० १४७४-६)मिति कण्वबृहद्वा । बृहन्निधनवार्कजम्भं वा तिसृषु । यज्ञायज्ञीयमग्निष्टोसाम । अन्यत् सर्वं प्राकृतिकविश्वजिद्वत् ॥

अथ सर्वपरोक्षपृष्ठविश्वजितः । माध्यंदिने रथन्तरस्य स्थाने कण्वरथन्तरम् । पिबा सोमे-( सा० ९२७-९ )ति ऋषभवैराजं

---

22. $B^2$ $M^3$ after वा add—अग्निष्टोमसाम । यद्वा । अत्र सूत्रम्—यज्ञायज्ञीयबृहतीव्यतिहरन्त्वेत इति । पुरोजित्यामान्धीगवगौरीवितयद्वाहिष्ठीयानि यानि सामतृचः । कण्वबृन्निधनवार्कजम्भं वा ($M^3$ after कण्व° ins. °बृहद्वा°).

होतुः पृष्ठम् । सहोदैर्घतमसं वा वसिष्ठस्य वैराजं वा । त्रिकद्रुकेष्वि-(सा० १४८६–८)ति नित्यवत्साः प्रशास्तुः । इन्द्रायाहि-( सा० ११४७ – ८ )यदिन्द्र-चित्रमे-( सा० ११७२ - ४ )त्येतासु अतीषङ्गाणां प्रथमं वा । यद् द्याव (सा० ८६२–३) इति ह्स्वाबृहदोपशा ब्रह्मणः । अन्तरिक्षं वा महावैष्टम्भं वा । रेवतीर्ण-(सा० १०८४-६)ति वारवन्तीयमच्छावाकस्य । अन्यत् सर्वं परोक्षपृष्ठविश्वजिद्वत् ॥

अथ उभयपरोक्षपृष्ठविश्वजितः । श्रुधी हवं विपिपानस्याद्रे-( सा० १७९८–१८०० )रिति ऋषभवैराजं होतुः पृष्ठम् । सहोदैर्घतमसं वा वसिष्ठस्य वैराजं वा । प्रोष्वस्मै पुरोरथ-(सा० १८०१–३)मिति नित्यवत्साः प्रशास्तुः । इन्द्रायाहि-यदिन्द्र-चित्रमेत्येतासु अतीषङ्गाणां प्रथमं वा । यदिन्द्र यावतस्त्व-(सा० १७९६-७)मिति ह्स्वाबृहदोपशा ब्रह्मणः । अन्तरिक्षं वा महावैष्टम्भं वा । रेवाँ इन्द्रे-(सा० १९०४-६)ति वारवन्तीयमच्छावाकस्य । अन्यत् सर्वं परोक्षपृष्ठविश्वजिद्वत् ॥

अथ पुरस्ताज्ज्योतिर्विश्वजितः । अत्र निदानम्—विश्वजिति प्रज्ञाताः पृष्ठदेशाः । तेषु तस्य तस्य विचारस्य पृष्ठान्यनुकल्पयेत् । यथाभक्तीनि पावमानिकानि । पृष्ठव्यपदेशास्तु पुराभावाद् विश्वजिति चान्यत्र पृष्ठदर्शनात् उभयसामन्यायत्वाच्चोक्त आवापसंक्रमो माध्यंदिनापदेशानि गायत्रीबृहत्योर्यथोक्तमजामिक्रमेण विश्वजित्येव दर्शनात् । सिमास्तिसृषु । अन्त्यं च ( उ० ग्र० सू० २. ११ ) इति । अस्य प्रत्ना-(सा० ७५५-७)मिति गायत्रामहीयवरैवतानि सामतृचः ।

---

11. $B^{2}$ $M^{3}$ Om. प्रशास्तुः

12. $M^{3}$ Om. चित्रमे···पृष्ठ° (L. 15)

13. $M^{1}$ Om. ह्स्वा°···पुरस्ताज्ज्योतिः (L. 16)

18. $B^{1}$ °शक्तीनि for °भक्तीनि; $B^{1}$ पावमानानि कानि for पावमानिकानि

19. $M^{1}$ °भाव° for भावाद् ; S वा for च; $M^{3}$ प्रदर्शनात् for पृष्ठदर्शनात्

परीतोषी-( सा० १३१३-५ )ति रथन्तरं प्रथमायाम् । कालेयकण्वरथन्तरदैर्घश्रवसानि सामतृचः । तस्मिन्नेव तृचे बृहद्वैरूपवैराजानि सामतृचः । सिमास्तिसृषु । यौधाजयमध्यास्यायाम् । अन्यत् सर्वं सर्वपरोक्षपृष्ठविश्वजिद्वत् ॥

अथ उपरिष्टाज्ज्योतिर्विश्वजितः । अत्र निदानम्—एवमेवार्भवे यज्ञायज्ञीयन्यायानि च चित्रेषु (उ० ग्र० सू० २.११) इति । आर्भवे परि स्वान (सा० १०६३-५) इति गायत्रसंहितरैवतानि सामतृचः । पत्रस्वेन्द्रमच्छे-(सा० ६९२-६)ति सत्रासाहीयश्रुद्धये एकर्च्चयोः । पर्यूष्विव-(सा० १३६४-६)ति वामदेव्यं तिसृषु । पुरोजितीति आन्धीगवगौरीवितयद्वाहिष्ठीयानि सामतृचः । यज्ञायज्ञीयं तिसृषु । बृहत् प्रथमायाम् । सिमास्तिसृषु । रथन्तरवैरूपवैराजानि सामतृचः । परि प्र धन्वे-( सा० १३६७-९ )ति वारवन्तीयं तिसृषु । सूर्यवतीषु कावमन्त्यम् । यद्वा । पुरोजितीति बृहत् प्रथमायाम् । आन्धीगवगौरीवितयद्वाहिष्ठीयानि सामतृचः । कण्वबृहत्तिसृषु । बृहन्निधनवार्कजम्भं वा । सिमास्तिसृषु । रथन्तरवैरूपवैराजानि सामतृचः । परि प्र धन्वेति वारवन्तीयं तिसृषु । सूर्यवतीषु कावमन्त्यम् । यज्ञायज्ञीयमग्निष्टोमसाम । अन्यत् सर्वं सर्वपरोक्षपृष्ठविश्वजिद्वत् ॥

अथ उपाङ्क्षपृष्ठविश्वजितः । अत्र निदानम्—सिमास्तिसृषु । अन्त्यं च । एवमेवार्भवे यज्ञायज्ञीयन्यायानि च तृचेषूपाङ्क्षपृष्ठान्वाहार्यपृष्ठयोश्चैवं प्रत्यक्षस्थाने परोक्षाणि ( उ० ग्र० सू० २. ११) इति । अस्य प्रत्ना-( सा० ७५५-७ )मिति गायत्रामहीयवदार्ढच्युतानि सामतृचः । परीतोषीति कण्वरथन्तरं प्रथमायाम् । कालेयरथन्तरदैर्घश्रवसानि सामतृचः । बृहन्निधनवार्कजम्भहस्वाबृहदोपशात्रृषभवैराजानि सामतृचः ।

9. B[1] after श्रुद्धये ins. अन्त्ये

18. B[2] M[3] Om. सर्वं°

25. B[2] M[3] S after °तृचः add : यद्वा

बृहन्निधनवार्कजम्भान्तरिक्षऋषभवैराजानि वा । यद्वा । बृहन्निधनवार्कजम्भह्रस्वाबृहदोपशासहोदैर्घतमसानि सामतृचः । बृहन्निधनवार्कजम्भह्रस्वाबृहदोपशावसिष्ठवैराजानि कण्वबृहत्ह्रस्वाबृहदोपशावसिष्ठवैराजानि वा । यद्वा । कण्वबृहत्ह्रस्वाबृहदोपशर्षभवैराजानि सामतृचः । अथवा कण्वबृहदन्तरिक्षवसिष्ठस्यवैराजानि सामतृचः । नित्यवत्सास्तिसृषु । अतीषङ्गाणां प्रथमं वा । अन्यत् सर्वं प्राकृतविश्वजिद्वत् ॥

अथ अन्वाहार्यपृष्ठविश्वजितः । परि स्वान इति गायत्रसंहितदार्ढच्युतानि सामतृचः । पवस्वेन्द्रमच्छेति सत्रासाहीयश्रुध्ये एकर्चयोः । पर्यू ष्विव(सा० १३६४. ६)ति वामदेव्यं तिसृषु । पुरोजितीति आन्धीगवगौरीवितयद्वाहिष्ठीयानि सामतृचः । यज्ञायज्ञीयं तिसृषु । बृहन्निधनवार्कजम्भं प्रथमायाम् । नित्यवत्सास्तिसृषु । अतीषङ्गाणां प्रथमं वा । कण्वरथन्तरह्रस्वाबृहदोपशाऋषभवैराजानि सामतृचः । यद्वा । कण्वरथन्तरान्तरिक्षऋषभवैराजाः । यद्वा । कण्वरथन्तरह्रस्वाबृहदोपशासहोदैर्घतमसानि सामतचः । कण्वरथन्तरह्रस्वाबृहदोपशावसिष्ठस्यवैराजानि वा सामतृचः । यद्वा । कण्वरथन्तरान्तरिक्षवसिष्ठस्यवैराजानि सामतृचः । कण्वरथन्तरान्तरिक्षसहोदैर्घतमसानि वा सामतृचः । अन्यत् सर्वं प्राकृतविश्वजिद्वत् ॥

---

1. M[3] B[2] S °वैराजाः for वैराजानि वा

3. S बृहन्निधनवार्कजम्भान्तरिक्षसहोदैर्घतमसानि वा सामतृचः । यद्वा । बृहन्निधनवार्कजम्भान्तरिक्षवसिष्ठवैराजानि सामतृचः । यद्वा । कण्वबृहत्ह्रस्वाबृहदोपशासहोदैर्घतमसानि सामतृचः । कण्वबृहत्ह्रस्वाबृहदोपशावसिष्ठवैराजानि वा । यद्वा । कण्वबृहत्ह्रस्वाबृहदोपशार्षभमवैराजाः सामतृचः । अथवा । कण्वबृहदन्तरिक्षऋषमवैराजाः सामतृचः । यद्वा । कण्वबृहदन्तरिक्षसहोदैर्घतभसानि सामतृचः । अथवा कण्वबृहदन्तरिक्षऋषभवैराजाः सामतृचः । यद्वा कण्वबृहदन्तरिक्षसहोदैर्घतमसानि सामतृचः for कण्व ··· °वैराजानि सामतृचः । (L. 5)

6. S Om. नित्यवत्सास्···सामतृचः (L. 9)

13. B[1] M[1] My Om. कण्व°···सामतृचः (L. 15)

अथ बृहद्रथन्तरपुरस्ताज्ज्योतिर्विश्वजितः । अत्र निदानम्— बृहद्रथन्तरपुरस्तादुपरिष्टाज्ज्योतिषोर्गायत्र्यां जराबोधीयान्तः सामतृचः । एवमेकद्व्यनुकल्पे रथन्तरबृहतीमैधातिथमध्यः सामतृचः । प्रकृत्या शेषः ( उ० ग्र० सू० २.११ ) इति । अस्य प्रत्ना(सा० ७५५.७)मिति गायत्रामहीयवजराबोधीयानि सामतृचः । परीतोषीति रथन्तरमैधातिथबृहन्ति सामतृचः । कालेयं प्रथमायाम् । कण्वरथन्तरदैर्घश्रवसे तृचयोः । यौधाजयमध्यास्यायाम् । अन्यत् सर्वं उभयपरोक्षपृष्ठविश्वजिद्वत् ॥

अथ बृहद्रथन्तर उपरिष्टाज्ज्योतिर्विश्वजितः । अत्र निदानम्— आर्भवे गायत्र्यामुष्णिक्ककुभौ वैकर्च्चाः । सामतृचावभितः । रथन्तरबृहती तृचयोः ( उ० ग्र० सू० २. ११) इति । आर्भवे परि स्वान ( सा० १०६३-५ ) इति गायत्रमेकस्याम् । संहितं तिसृषु । पवस्वेन्द्रमच्छेति सत्रासाहीयश्रुध्ये एकर्च्चयोः । पर्यूष्विति वामदेव्यं तिसृषु । पुरोजितीति रथन्तरं तिसृषु । आन्धीगवगौरीवितयद्वाहिष्ठीयानि सामतृचः । बृहत्तिसृषु । यज्ञायज्ञीयं तिसृषु । परि प्र धन्वेति वारवन्तीयं तिसृषु । सूर्यवतीषु कावमन्त्यम् । त्वमग्ने यज्ञाना-( सा० १४७४–६ )मिति कण्वबृहदग्निष्टोमसाम । बृहन्निधनवार्कजम्भं वा । यद्वा । सूत्रकारपक्षे बृहत्कण्वबृहतोः संनिपाते प्राप्तमिति चेन्न । सर्वेषां तुल्यान्तःसंनिपाते जामित्वाचोऽन्यत्रे(ला०श्रौ० ६.९)ति सूत्रकारवचनात् वाङ्निधनत्वान्न जामिदोषः । पुरोजितीति रथन्तरं तिसृषु । आन्धीगवगौरीवितयद्वाहिष्ठीयानि सामतृचः । बृहत्कण्वबृहती तृचयोः । परि प्र धन्वे-(सा० १३६७-९)ति वारवन्तीयं तिसृषु । सूर्यवतीषु कावमन्त्यम् । यज्ञायज्ञीयमग्निष्टोमसाम । अन्यत् सर्वमुभयपरोक्षपृष्ठविश्वजिद्वत् ॥

---

4. S after प्रकृत्या ins. इति

14. S Om. आन्धीगव ··· बृहत्तिसृषु (L. 15)

अथ परोक्षापकर्यपृष्ठविश्वजितः । अत्र निदानम्—न प्राङ्क्यादिषु पत्पूर्वं स्यात् । तदादितो बृहत्यां पर्यायवदिति चेन्न । द्व्यृचा कार्यः संचाराभ्यां रेवत्योऽच्छावाकस्य वारवन्तीयं च्युतं चेत् पृष्ठार्थे छन्दस्यद्विपात्स्वेकतृचेषु अग्निष्टोमसामानी पार्ष्ठिकनिवृत्तेर्देवताभेदादादेशाच्च (उ० ग्र० सू० २. ११) इति । अस्यार्थः । एकसामावापकृतौ गायत्र्यां जराबोधीयान्तः-सामतृच इत्युक्तरीत्यात्रापि तत्क्लृप्तिप्राप्तौ निषेधति न प्राङ्क्यादिषु पत् पूर्वं स्यादिति । पततीति पत् । पतेर्धातोः क्विबन्तः । आगन्त्वित्यर्थः । पूर्वं पूर्वोक्तं तृचेन पृष्ठवत्पर्याय-कृतिं निषेधति—तदादितो बृहत्यां पर्यायवदिति चेन्नेति । तर्हि कथं क्लृप्तिरिति चेत्तत्राह—द्व्यृचा कार्य इति । समा-सान्तस्यानित्यत्वात् ऋक्पूर (पा० ५. ४. ७४) इति ना-प्रत्ययः । रथन्तरकण्वरथन्तररथन्तराणि सामतृचः । रथन्तररथन्तर-कण्वरथन्तराणि सामतृचः । इति प्रत्यक्षपरोक्षप्राङ्क्यापकर्भेदेन कार्य इति यावत् । प्राङ्क्यादिषु पृष्ठेषु परोक्षप्रत्यक्षसामद्वय-विधानादच्छावाकपृष्ठे परोक्षार्थं वारवन्तीयकल्पनस्यावश्यकत्वात् । आर्भवे च द्विपदासु वारवन्तीस्य विधानात् संचारदोषे सत्यपि तमभ्युपगम्याह—संचाराभ्यां रेवत्योऽच्छावाकस्य वारन्तीयं च्युतं चेत् पृष्ठार्थे इति । पृष्ठस्थानात् प्रच्युतं वारवन्तीयमार्भवे पृष्ठे च यदि कुर्युस्तदा संचार इति भावः । विचार्यमाणे संचारदोषो नास्तीति सयुक्तिकमाह—छन्दस्यद्विपत्स्वित्यादिना ।

---

4. $B^{1-2}$ $M^{1}$ सामानि for °सामनी

11. S Om. चेत्तत्र ; $B^{1}$ $B^{2}$ $M^{3}$ Om. चेत् and अत्र for तत्र; $B^{1-2}M^{3}$ कार्या for कार्यः

15. $B^{1-2}$ $M^{2}$ $M^{3}$ कार्या for कार्यः

16. $B^{2}$ $M^{3}$ पृष्ठ° for पृष्ठे ; $B^{1}$ परोक्षार्थं for परोक्षार्थं ; $B^{2}$ $M^{3}$ after आवश्यकत्वात् add संचारदोषे

17. $B^{2}$ $M^{3}$ after °विधानात् add च

गायत्रीद्विपदाच्छन्दोभेदादित्यर्थः। एकतृचेषु भिन्नतृचेषु रेवतीर्ण परि प्र धन्वेत्यर्थः। भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावापि: (अ० को० ३.१.८२) इत्यमरः। अग्निष्टोमसामनी इति वारवन्तीयद्वयमित्यर्थः। सर्वत्र ब्राह्मणे वारवन्तीयस्याग्निष्टोमसामत्वेन विधानात् वारवन्तीयाग्निष्टोमसामेति नाम। पार्ष्ठिकनिवृत्तेरिति। रेवतीर्ण इति वारवन्तीयस्य पार्ष्ठिकत्वात् परि प्र धन्वेति वारवन्तीयस्य च्युतानुग्रहार्थत्वेन तद्भिन्नत्वादित्यर्थः। देवताभेदात् इति। रेवतीर्णः परिधन्वेति तृचयोः इन्द्रसोमदेवत्यत्वादित्यर्थः। आदेशाच्चेति। कल्पकारेणोभयविधानादित्यर्थः। माध्यंदिने परीतोषीति कालेयमेकस्याम्। रथन्तरकण्वरथन्तररथन्तराणि सामतृचः। दैर्घश्रवसं तिसृषु। यौधाजयमध्यास्यायाम्। पिबा सोममिति वैराजस्य प्रथमोत्तमौ पर्यायौ। तस्मिन्नेव तृचे ऋषभस्य वैराजस्य मध्यमः। सहोदैर्घतमसस्य वा। वसिष्ठस्य वैराजस्य वा। इति होतुः पृष्ठम्। विदामघवन्नि-(सा० १४१-६) त्येतासु महानाम्नीभिः प्रथमोत्तमौ पर्यायौ। त्रिकद्रुकेष्वि-(सा० १४८६-८)ति नित्यवत्साभिर्मध्यमः पर्यायः। इन्द्रायाहि—यदिन्द्र चित्रमेत्यातासु अतीषङ्गाणां प्रथमो वा। इति प्रशास्तुः। यद् द्याव (सा० ८६२) इति वैरूपस्य प्रथमोत्तमौ पर्यायौ। तस्मिन्नेव तृचे ह्रस्वाबृहदोपशायाः मध्यमः। अन्तरिक्षस्य वा महावैष्टम्भस्य वा इति ब्रह्मणः। रेवतीर्न-(सा० १०८४-६)ति रेवतीनां प्रथमोत्तमौ पर्यायौ। तस्मिन्नेव तृचे वारवन्तीयस्य मध्यमः। त्वमग्ने यज्ञानामि-(सा० १४७४-६)ति बृहतः प्रथमोत्तमौ पर्यायौ। कण्वबृहतो वा बृहद्वृन्निधनवार्कजम्भस्य वा मध्यमः। यद्वा। पुरोजितीति आन्धीगवगौरीवितयद्वाहिष्ठीयानि सामतृचः। बृहत्कण्वबृहद्बृहन्ति सामतृचः। बृहद्बृहन्निधनबृहन्ति वा सामतृचः। यज्ञायज्ञीयमग्निष्टोमसाम। अन्यत् सर्वं प्रकृतिवत्।

---

12. B[1] M[1] My Om. तस्मिन्नेव तृचे...पर्यायौ (L. 18)

25. S after निधन° ins. वार्कजम्भ°

अथ प्रत्यक्षापवर्ग्यपृष्ठविश्वजितः । मध्यंदिने परीतोषीति कालेयमेकस्याम् । कण्वरथन्तररथन्तरकण्वरथन्तराणि सामतृचः । दैर्घश्रवसं तिसृषु । यौधाजयमध्यास्यायाम् । पिबा सोममिति ऋषभस्य वैराजस्य प्रथमोत्तमौ पर्यायौ । सहोदैर्घतमसस्य वा वसिष्ठस्य वैराजस्य वा तस्मिन्नेव तृचे वैराजस्य मध्यम इति होतुः पृष्ठम् । त्रिकद्रुकेष्विति नित्यवत्सानां प्रथमोत्तमौ पर्यायौ । इन्द्रायाहि-यदिन्द्रचित्रमेत्येतासु अतीषङ्गाणां प्रथमस्य वा । विदामघवन्नि-(सा० ६४१-९)त्येतासु महानाम्नीनां मध्यमः पर्याय इति प्रशास्तुः । यद् द्याव (सा० ८६२-३) इति ह्स्वाबृहदोपशायाः प्रथमोत्तमौ पर्यायौ । अन्तरिक्षस्य वा महावैष्टम्भस्य वा वैरूपस्य वा मध्यम इति ब्रह्मणः । रेवतीर्णेति वारवन्तीयस्य प्रथमोत्तमौ पर्यायौ । रैवतस्य मध्यम इति अच्छावाकस्य । त्वमग्ने यज्ञानामि-(सा० १४७४-६)ति कण्वबृहतः प्रथमोत्तमौ पर्यायौ । बृहन्निधनस्य वार्कजम्भस्य वा । तस्मिन्नेव तृचे बृहतो मध्यमः । इत्यग्निष्टोमसाम । यद्वा । पुरोजितीति आन्धीगवगौरीवित-यद्वाहिष्ठीयानि सामतृचः । कण्वबृहद्बृहत्कण्वबृहन्ति सामतृचः । प्रथमोत्तमयोः स्थाने बृहन्निधनवार्कजम्भं वा । यज्ञायज्ञीयमग्निष्टोमसाम । अन्यत् सर्वं प्रकृतिवत् ॥

अथ परोक्षप्राङ्क्यपृष्ठविश्वजितः । परीतोषीति कालेयकण्वरथन्तरे प्रथमायाम् । रथन्तरमुत्तरयोः । दैर्घश्रवसं तिसृषु । यौधाजयमध्यास्यायाम् । पिबा सोम-(सा० ९२७-९)मिति ऋषभस्य वैराजस्य वा सहोदैर्घतमसस्य वा वसिष्ठस्य वैराजस्य वा प्रथमः पर्यायः । महावैराजस्योत्तराविति होतुः पृष्ठम् । त्रिकद्रुकेष्विति नित्यवत्सानां प्रथमः पर्यायः । इन्द्रायाहि-(सा० ११४६-८)यदिन्द्रचित्रमे-(सा०

2. M[3] Om. °रथन्तरकण्व°

8. B[2] M[3] Om. एतासु…मध्यम इति (L. 11)

16. B[2] M[3] Om. °बृहत् after कण्वबृहद्

24. M[3] after पर्यायः । adds : अन्तरिक्षस्य वा ।

११७२-४)त्येतासु अतीषङ्गाणां प्रथमस्य वा। विदामघवन्नित्येतासु महानाम्नीनामुत्तराविति प्रशास्तुः। यद् द्याव (सा० ८६२-३) इति ह्रस्वाबृहदोपशायाः प्रथमः पर्यायः। अन्तरिक्षस्य वा महावैष्टम्भस्य वा वैरूपस्योत्तराविति ब्रह्मणः। रेवतीर्णेति वारवन्तीयस्य प्रथमः पर्यायः। तस्मिन्नेव तृचे रैवतस्योत्तरावित्यच्छावाकस्य। त्वमग्ने यज्ञाना-(सा० १४७४-६)मिति कण्वबृहतो बृहन्निधनवार्कजम्भस्य वा प्रथमः पर्यायः। बृहत उत्तरावित्यग्निष्टोमसाम। यद्वा। पुरोजितीति आन्धीगवगौरीवितयद्वाहिष्ठीयानि सामतृचः। कण्वबृहत् प्रथमायाम्। बृहन्निधनवार्कजम्भं वा। बृहदुत्तरयोः यज्ञायज्ञीमग्निष्टोमसाम। अन्यत् सर्वं प्रकृतिवत् ॥

अथ प्रत्यक्षप्राङ्क्यपृष्ठविश्वजितः। मध्यंदिने परीतोषीति कालेयमेकस्याम्। कण्वरथन्तरं पूर्वयोः। रथन्तरमुत्तमायाम्। दैर्घश्रवसं तिसृषु। यौधाजयमध्यास्यायाम्। पिबा सोममिति ऋषभस्य वैराजस्य पूर्वौ पर्यायौ। सहोदैर्घतमसस्य वा। वसिष्ठस्य वैराजस्य वा। महावैराजस्योत्तमः। इति होतुः पृष्ठम्। त्रिकद्रुकेष्विति नित्यवत्सानां पूर्वौ पर्यायौ। इन्द्रायाहि-यदिन्द्रचित्रमेत्येतासु अतीषङ्गाणां प्रथमस्य वा। विदामघवन्नित्येतासु महानाम्नीनामुत्तम इति प्रशास्तुः। यद् द्याव इति ह्रस्वाबृहदोपशायाः पूर्वौ पर्यायौ। अन्तरिक्षस्य वा महावैष्टम्भस्य वा वैरूपस्योत्तम इति ब्रह्मणः। रेवतीर्णेति वारवन्तीयस्य पूर्वौ पर्यायौ। रैवतस्योत्तम इत्यच्छावाकस्य। त्वमग्ने यज्ञानामिति कण्वबृहतः पूर्वौ पर्यायौ। बृहन्निधनस्य वार्कजम्भस्य वा बृहत उत्तमः। इत्यग्निष्टोमसाम। यद्वा। पुरोजितीति आन्धीगवगौरीवितयद्वाहिष्ठीयानि सामतृचः। कण्वबृहत् पूर्वयोः। बृहन्निधनवार्कजम्भं वा। बृहदुत्तमायां यज्ञायज्ञीयमग्निष्टोमसाम। अन्यत् सर्वं प्रकृतिवत् ॥

---

1. B[2] M[3] एतासां for एतासु; B[1] प्रथमं for प्रथमस्य

4. B[2] M[3] Om. महावैष्टम्भस्य वा

अथानुगृहीतबृहद्रथन्तरविश्वजितः । अत्र निदानम्—अनुगृहीतबृहद्रथन्तरे नित्यकृतत्वादसंचाराच्च (उ० ग्र० सू० २. ११) इति । अनुगृहीते बृहद्रथन्तरे चैवम् (उ० ग्र० सू० २. १२) इति च । प्रकृत एव विश्वजिद्विषयः ॥

अथानुगृहीतबृहद्रथन्तरपरोक्षविश्वजितः । अत्र निदानम्—अनुगृहीतबृहत्परोक्षतरे यथोक्तं माध्यंदिने आर्भवे गायत्र्या-मैडंसौपर्णं सामतृचान्त्यम् अनुष्टुबाद्यं बृहत्परोक्षम् (उ० ग्र० सू० २. ११) इति । अस्य प्रत्नामिति गायत्रा-महीयवजराबोधीयानि सामतृचः । परीतोषीति कण्वरथन्तरं तिसृषु । कालेयमेकस्याम् । रथन्तरदैर्घश्रवसे तृचयोः । यौधाजयमध्यास्यायाम् । आर्भवे परिस्वान इति गायत्रसंहितै-डंसौपर्णानि सामतृचः । पवस्वेन्द्रमच्छेति सत्रासाहीयश्रुध्ये । पर्यूष्विति वामदेव्यम् । पुरोजितीति कण्वबृहत्तिसृषु । बृहन्निधनवार्कजम्भं वा । आन्धीगवगौरीवितयद्वाहिष्ठीयानि सामतृचः । यज्ञायज्ञीयं तिसृषु । अन्यत् सर्वं प्रकृतिवत् ॥

अथ पृष्ठस्तोमविश्वजितः । अत्र निदानम्—बृहद्रथन्तरपृष्ठस्य साहस्रान्त्यात् पूर्वे सवने तृतीयाद्वा आज्यानि श्यैतमिन्द्रक्रता-वुष्णिक्प्रभृतिव्रता-(उ० ग्र० सू० २. १२)दिति । उपास्मै-उपोषु-पवस्ववाचोग्र्य-दविपवेति बहिष्पवमानम् । उत्तमौ तृचौ । इतरे त्रय एकर्चाः । अग्न आयाहि (सा० १५५२) पुरूरुणा (सा० ९८५-७) इन्द्रमिद्गेन्द्रे अग्ने-(सा० ७९६-८०२)

---

2. B[1] M[1] My Om. अनु···°विश्वजितः (L. 5); B[2] °रथन्तरनित्यं कृतत्वं संचारात् for रथन्तरे नित्यकृतत्वादसंचारात्

3. S °गृहीत° for °गृहीते

4. S कार्यम् for विषयः

7. B[2] M[3] M[1] °तृचोऽन्त्यम् My °क्रमवान्त्यं, B[1] °त्रमवान्त्यं for तृचान्त्यं ; B[1] M[1] My अनुष्टुबन्त्यम् for अनुष्टुबाद्यम्

त्याज्यानि । यद्वा । अग्निदू-मित्रं वयम् - आयाहीन्द्राग्नी-त्याज्यानि । अग्निदूतमानो मित्रा-इन्द्रमिद्धेन्द्राग्नीति वा । उच्चा त इति गायत्रामहीयवे । पवस्व मधुमत्तम इति इडानांसंक्षारमेक-स्याम् । प्रत्नं पीयूष-( सा० १४६४-६ )मिति यौधाजयं तिसृषु । पुनानः सोमेति रौरवमेकस्याम् । रथन्तरं तिसृषु । शिशुं जज्ञान-( सा० १३३४ )मिति वामदेव्यमन्त्यम् । बृहद्वाम-देव्यस्यर्क्षु स्वारंसौपर्णम् । इन्द्रक्रतौ श्यैतम् । स्वासु कालेयमिति पृष्ठानि । परिस्वान इति गायत्रसंहिते । पवस्वेन्द्रमच्छेति सत्रासाहीयश्रुध्ये । पुरोजितीति गौरीवितमधुश्चुन्निधनश्यावाश्वा-न्धीगवानि । सूर्यवतीषु कावमन्त्यम् । यज्ञायज्ञीयमग्निष्टोमसाम । एकाहाहीनयोस्तु स्वासु श्यैतम् । गौरीवितस्य लोके औदलमिति विशेषः । रात्रिसत्रे तु स्वासु श्यैतमेव । तत्र गौरीवितं नित्यम् ॥

तत्र धर्मभेदेन उपाङ्क्यपृष्ठविश्वजितः । अत्र निदानम्—बृहद्रथन्तरपृष्ठस्य साहस्रान्त्यात् पूर्वे सवने तृतीयाद्वा आज्यानि । श्यैतमिन्द्रक्रतावुष्णिक्प्रभृतिव्रतादेतस्मिन् उपाङ्क्यपृष्ठान्वाहार्य-पृष्ठौ तन्नामधेयात् गायत्र्यां बृहत्यां वैरूपादीनामपरोक्षाणि सामतृचः । नित्यान्त्ये व्यतिहरेत् । अजाम्यर्थमिडारम्भणाकृत-त्वात् । उच्चा त इति (उ० ग्र० सू० २. १२) इति गायत्रामहीयव-वारवन्तीयानि सामतृचः । पवस्व मधुमत्तमेति इडानांसंक्षार-मेकस्याम् । प्रत्नं पीयूषमिति यौधाजयं तिसृषु । पुनानः सोमेति ह्रस्वाबृहदोपशाऋषभवैराजानि नित्यवत्साः सामतृचः । यद्वा । ह्रस्वाबृहदोपशासहोदैर्घतमसानि नित्यवत्साः सामतृचः ।

---

12. M[1] Om. तु ; B[1] Cm. तत्र; B[1] °वितवत् for °वितं

16. S B[2] M[3] परोक्षाणि for अपरोक्षाणि

21. B[2] M[3] S °वैराज° for °वैराजानि

22. B[2] M[3] S °तमस° for °तमसानि

अथवा ह्रस्वाबृहदोपशावसिष्ठस्यवैराजनित्यवत्साः सामतृचः । अथवा ह्रस्वाबृहदोपशाऋषभवैराजातीषङ्गाः सामतृचः । यद्वा । ह्रस्वाबृहदोपशा-सहोदैर्घतमसातीषङ्गाः सामतृचः । ह्रस्वाबृहदोपशावसिष्ठस्यवैराजातीषङ्गा वा । यद्वा । अन्तरिक्षऋषभवैराजनित्यवत्साः सामतृचः । अथवा । अन्तरिक्षसहोदैर्घतमसनित्यवत्साः सामतृचः । अथवा अन्तरिक्ष-वसिष्ठस्यवैराजनित्यवत्साः सामतृचः । अन्तरिक्षऋषभवैराजातीषङ्गा वा । यद्वा । अन्तरिक्षसहोदैर्घतमसातीषङ्गाः सामतृचः । यद्वा । अन्तरिक्षवसिष्ठस्यवैराजातीषङ्गाः सामतृचः । रथन्तरं तिसृषु । रौरवमेकस्याम् । अन्यत् सर्वं पृष्ठस्तोमविश्वजिद्वत् ॥

अथ धर्मभेदेनान्वाहार्यपृष्ठविश्वजितः । अत्र निदानम्— अनुष्टुभि गौरीवितात् तृचस्थानीति चेत् पूर्व एकर्चा (उ० ग्र० सू० २. १२) इति । आर्भवे परिस्वान (सा० १०६३-५) इति गायत्रसंहितवारवन्तीयानि सामतृचः । पवस्वेन्द्रमच्छेति सत्रा-साहीयश्रुध्ये एकर्चयोः । पुरोजितीति मधुश्चुन्निधनमेकस्याम् । गौरीवितान्धीगवश्यावाश्वानि तृचेषु । ह्रस्वाबृहदोपशा तिसृषु । अन्तरिक्षं वा ऋषभवैराजस्तिसृषु । सहोदैर्घतमसं वा । वसिष्ठस्यवैराजं वा । नित्यवत्सास्तिसृषु । अतीषङ्गाणां प्रथमं वा । अन्यत् सर्वं पृष्ठ-स्तोमविश्वजिद्वत् ॥

अथानुगृहीतपृष्ठविश्वजितः । अत्र निदानम्—अनुगृहीत-प्रत्यक्षे जराबोधीयस्य स्वारं सौपर्णं शक्वर्यो बृहत्यां समन्तस्य वैरूपम् । नित्यानुग्रह इति चेत् । दैघश्रवसपूर्वे मैधा-

1. B[1] वसिष्ठ° for वसिष्ठस्य

3. B[2] My °वसिष्ठ° for वसिष्ठस्य

4. B[1] M[1] My Om. यद्वा ...°षङ्गा वा (L. 7)

11. B[2] after चेत् adds—न ; B[2] °पूर्व° for °पूर्वे

15. B[2] M[3] सामतृचेष for तृचेषु

16. B[1] M[1] °वैराजं for °वैराजः; S Om. सहो...स्तिसृषु (L. 17)

तिथसमन्ते आर्भवे ककुबादयस्त्रय एकर्चाः । गायत्र्यामनुष्टुबन्त्ये आर्भवीये यथाच्छन्द ( उ० ग्र० सू० २. १२ ) इति पवस्व वाचोग्रिय-दवि-पवेति बहिष्पवमानम् । अग्निंदू-मित्रं-वयम्-आयाहीन्द्राग्नीत्याज्यानि । अग्निंदू-आनोमित्रा-इन्द्रमिद्गेन्द्राग्नी इति वा । अस्य प्रत्नामिति गायत्र्यामहीयवस्वारंसौपर्णानि सामतृचः । परोतोषी-( सा० १३१३-५ )ति वैरूपमेकस्याम् । रथन्तरं तिसृषु । दैर्घश्रवसं तिसृषु । मैधातिथसमन्तदैर्घश्रवसानि सामतृचः । सिमास्तिसृषु । यौधाजयमध्यास्यायाम् । अयं सोम ( सा० १४७१-३ ) इति पार्थमन्त्यम् । बृहच्च वामदेव्यं च इन्द्रक्रतौ श्यैतं कालेयं चेति पृष्ठानि । परिस्वान इति गायत्रसंहितरैवतानि तृचेषु । पवस्वेन्द्रमच्छेति सफश्रुध्ये एकर्चयोः । पुरोजितीति गौरीवितमेकस्याम् । मधुश्चुन्निधनश्यावाश्वान्धीगवमहावैराजानि तृचेषु । सूर्यवतीषु कावमन्त्यम् । यज्ञायज्ञीयमग्निष्टोमसाम । इयं च क्लृप्तिः सूत्रकारपक्षमाश्रित्य निदानकारोक्ता । तथा च सूत्रम्—बृहत्पृष्ठश्चेत् तृतीयात् साहस्रात् प्रातःसवनं । कालेयस्थाने समन्तम् । आभिजितानि पृष्ठानि । इन्द्रक्रतौ श्यैतं गोःककुबुष्णिहावुद्धरति पिपीलिकामध्या अनुष्टुप्प्रभृतिव्रतात् (ला० श्रौ० ४. ७. ३) इति । यद्वा । अनुगृहीतप्रत्यक्षे वा नित्यः । सार्वपृष्ठ्यादनुग्रहो हि यथायतनं न्यायः । कृतान्तादसंचाराच्च संभार्या वारवन्तीयानि च पृष्ठसंयोगात् कालेयवामदेव्ययज्ञायज्ञीयानां च्युतानुग्रहसाद्यस्क्रेषु यथाशिल्प इति प्राकृत एव विश्वजित् कार्यः ॥

अथानुगृहीतपरोक्षविश्वजितः । अत्र निदानम्—एवमेवोत्तरे 24 प्रत्यक्षाणां स्थाने परोक्षाणि (उ० ग्र० सू० २.१२) इति ।

---

7. B[1] after °श्रवसानि adds वा

11. B[2] M[3] सामतृचेषु for तृचेषु

23. B[1] Om. अथानु···कार्यः (P. 207, L. 1); M[3] तदुक्तं for अत्र

अनुगृहीतपृष्ठविश्वजिद्वत् कार्यः । माध्यंदिने वैरूपस्थाने ह्रस्वाबृहदोपशा । अन्तरिक्षं वा शक्वरीणां स्थाने नित्यवत्साः । अतीषङ्गाणां प्रथमं वा । आर्भवे रैवतस्य स्थाने दार्ढच्युतम् । महावैराजस्य स्थाने ऋषभवैराजं सहोदैर्घतमसं वा वसिष्ठस्य वैराजं वा । इति विशेषः ॥

अथ ब्रह्मसामपृष्ठविश्वजितः । प्रातःसवनं प्रकृतिवत् । उपाकरणदर्भमुष्टिं प्रतिगृह्य ब्रह्मणानुज्ञातः नौधसं सामोपधावामि । परीतोषिञ्चर्चमुपधावामि । नौधसमृषिं सोमं देवतां बृहतीच्छन्दः सप्तदशं स्तोमम् उदीचिं दिशमात्मानं कामं ध्यायन् अग्नेस्तेजसेत्यादि हिंकृत्य अस्यप्रत्नामिति गायत्रामहीयवे । परीतोषीति कालेयमेकस्याम् । नौधसं तिसृषु । दैर्घश्रवसं तिसृषु । यौधाजयमध्यास्यायाम् । यद्वा । तलवकारमतेन परीतोषीति कालेयमेकस्याम् । दैर्घश्रवसं तिसृषु । रौरवयौधाजयसमन्तानि सामतृचः । यौधाजयमध्यास्यायाम् । अयं सोम (सा० १४७१-३) इति पार्थमन्त्यं गायेयुः । त्रैशोकं होतुः पृष्ठम् । त्रैशोकं सामोपधावामि । विश्वाः पृतनर्चं (सा० ६३०) त्रिशोकमृषिम् इन्द्रदेवताम् अतिजगतीबृहत्यौ छन्दसी । एकविंशं स्तोमम् उदीचीं दिशम् आत्मानमुपधावामि । कामं ध्यायन् दीक्षायै वर्णेनेत्यादि बार्हद्गिरं प्रशास्तुः पृष्ठम् । बार्हद्गिरं सामोपधावामि । इन्द्रो मदायर्चं (सा० १००२) बृहद्गिरमृषिं पङ्क्तिच्छन्दः इन्द्रदेवतां तृणवं स्तोमम्

---

1. B[1] मध्यं for माध्यं

3. B[1] आर्भव° for आर्भवे

9. B[1] आध्यानं for आत्मानं

13. B[2] °तमसं for °श्रवसं

18. B[1] आध्यानम् for आत्मानम्

उदीचीं दिशमात्मानं कामं ध्यायन् दीक्षायै वर्णेनेत्यादि महावैष्टम्भरैवतरथन्तरशाक्वरवैराजवैरूपबृहन्ति ब्राह्मणाच्छंसिनः पृष्ठानि । सर्वेषां ब्रह्मणः पृष्ठन्यायत्वात् अग्निष्टोमे ब्रह्मसामपृष्ठे च तथा दर्शनात् । अत्र निदानम्—सप्तदशवत् त्रिहिंकारं कुशाविधानं च तस्य प्रयोगः । पञ्चभ्यो हिंकृत्य महावैष्टम्भं तिसृषु । रैवतीरेकस्याम् । रथन्तरमेकस्याम् । पञ्चभ्यो हिंकृत्य शक्वरीर्मध्यमः पर्यायः । सप्तभ्यो हिंकृत्य वैराजमेकस्याम् । वैरूपं तिसृषु । बृहत् तिसृषु ( उ० ग्र० सू० २. १३ ) इति । उपाकरणार्थं दर्भौ दूर्वावापः । ता अपः अरणीं च आधावं च प्रतिगृह्य ब्रह्मणानुज्ञातः अरणीद्वयं दर्भद्वयं चादाय उद्गाता दक्षिण ऊरौ गायत्रं छन्दोऽनुप्रजायस्वेत्यादिभिः वैराजं छन्दोऽनुप्रजायस्वेत्यन्तैर्मन्त्रैरभिमन्त्रयेत् । तेजोऽसीति मन्त्रेण पाणी उपजिघ्रेत् । मथ्यमाने स्तोमं युञ्ज्यात् । जाते स्तुवीरन् । महावैष्टम्भं सामोपधावामि । वयं घ त्वचं (सा० ८६४-६) विष्टम्भमृषिम् इन्द्रं देवतां बृहतीछन्दः सप्तदशं स्तोमम् उदीचीमात्मानं कामंध्यायन् ऐरं वै बृहद्दीक्षायै वर्णेनेति महावैष्टम्भरैवतरथन्तरशाक्वरवैराजवैरूपबृहतां साम्नां विष्टम्भरैवतवसिष्ठेन्द्रेन्द्रविरूपभरद्वाजा इत्यृषयः । बृहती-गायत्री-बृहती-शक्वरी-विराट्-बृहत्यश्छन्दांसि । सर्वेषां साम्नाम् इन्द्रो देवता । प्रजापतिः प्रजा असृजत । उप त्वा जामयो गिर (सा० १५७०-२) इति खण्ड-द्वयम् । यद् द्याव इन्द्र ते शत-(सा० ८६२-३)मिति खण्डः । यातयामान्यन्यानीति खण्डः । प्रजापतिरकामयत । स तूष्णीं मनसा ध्यायन्निति खण्डः । इन्द्रः प्रजापतिमुपाधावदिति खण्डः । पिबा सोममिन्द्र मन्दतु त्वे-(सा० ९२७-९)ति खण्डः । यद्द्याव इन्द्र ते शतमिति खण्डः । प्रजापति-

10. S अभ्यनु° for अनु°

रकामयत। स तूष्णीं मनसा ध्यायन्निति खण्डः। एतानि विधायकब्राह्मणानि। त्रयीविद्या हिंकारः। अजा हिंकारः अभिमन्थति स हिंकारः। पृथिवी हिंकारः। वसन्तो हिंकारः। आन्त्राणि संप्लवन्ते स हिंकारः। उद्यन् हिंकारः। एतान्युद्गीथोपासकस्य। प्राणः प्रस्तोतुर्देवतेत्यादि अमृतत्वादीनां ध्यानमित्यन्तमुक्त्वा पञ्चभ्यो हिंकृत्य वयं घ त्वो हाइ इति तिसृषु। हाउ रेवा इत्येकस्याम्। आभि त्वा शूर नोनुमो वा इत्येकस्याम्। पञ्चभ्यो हिंकृत्य। एऽ२। विदा मघवन्विदाः। इति शक्वरीभिर्मध्यमः पर्यायः। सप्तभ्यो हिंकृत्य होइया होइया होइयाऽ३४३पीब। इति एकस्याम्। यद् द्याव इन्द्र ते शतम् इति वैरूपं तिसृषु। औ होइ त्वामिद्धि हवामहाऽ३ए। इति तिसृषु। यजमानान् वाचयित्वा हव्ये काम्ये इत्यादिभिरनुमन्त्र्य पुनरूर्जेत्यग्निमनुमन्त्र्य वात आवात्विति वातमनुमन्त्र्य पूर्वया द्वारा निष्क्रम्य उत्तरेणाग्नीध्रीयं गत्वा आस्तावे अप उपनीय आपोहिष्ठीयाभिरात्मानं प्रोक्ष्य अनाधृष्टोऽसीति मन्त्रेण सावका अप उपनीय आहवनीयं गत्वा प्रेद्धो अग्न (सा० १३७५) इति मन्त्रेण हुत्वा स्वाहाकारेण च हुत्वा यथैतं सदः प्रविशेत्। ऋषभरैवतमच्छावाकस्य। ऋषभरैवतं सामोपधावामि। सुरूपकृत्नुमृचम् (सा० १०८७) रुद्रमृषिम्, इन्द्रं देवताम् सम्पत्याजगतीं छन्दः, एकविंशं स्तोमम्, उदीचीमात्मानम् कामं ध्यायन्। प्रकृत्य आर्भवः। त्वमग्ने यज्ञानामिति श्यैतमग्निष्टोमसाम। श्यैतं सामोपधावामि। त्वमग्ने यज्ञानामिति ऋचम्, प्रजापतिमृषिम्,

---

9. S सप्तदशभ्यो for सप्तभ्यो

12. S आदिना for आदिभिर्

14. S °आग्नीध्रं for आग्नीध्रीयं

18. $B^2$ $M^3$ तृचम् for ऋचम्

गायत्रीं छन्दः, अग्निं देवताम्, त्रयस्त्रिंशम् [स्तोमम्], उदीचीमात्मानम् कामं ध्यायन्। सूत्रकारपक्षे तु बृहतः स्थानापन्नत्वात् श्यैतस्य तत्स्थानापन्नस्य तद्धर्मत्वनियमात् इति न्यायेन आर्भवे पुरोजित्यां बृहत्स्थाने श्यैतं तिसृषु। यद्वा। श्यावाश्वश्यैतमधुश्चुन्निधनानि सामतृचः। श्यैतं सामोपधावामि। पुरोजित्यृचम्, प्रजापतिमृषिम्, अनुष्टुभं छन्दः, सोमं देवताम्, तृणवं स्तोमम्, उदीचीमात्मानम्, कामं ध्यायन्। यज्ञायज्ञीयमग्निष्टोमसामेति विशेषः। अस्मिन् विश्वजिति ब्रह्मसामनि स्तूयमाने रैवतगाने गवां घोषः। रथन्तरगाने रथघोषः। शक्वरीणां गाने अपां घोषः। वैराजगाने अग्नेर्घोषः। वैरूपगाने आधाववातघोषः। बृहद्गाने दुन्दुभिघोषः कार्यः। स्तनयित्नोर्वा ॥६॥

इति द्वितीये प्रपाठके चतुर्दशः खण्डः ॥१४॥

---

पञ्चदशः खण्डः

## [ अथ द्वादशाहकल्पाः ]

द्वादशाहाङ्गभूतस्य षडहस्य पृष्ठतो विचारानुक्त्वा प्रधानभूतद्वादशाहस्य बहुधा विचारानाह—

**अथातो द्वादशाहाः ॥१॥**

इति। बहुधोच्यन्त इति शेषः ॥१॥

[ भरतद्वादशाहाः ]

तेषु सर्वप्रकृतिभूतज्योतिष्टोमविकारांश्चतुर आह—

**चत्वारो भरतद्वादशाहाः ॥२॥**

इति। ज्योतिष्टोमधर्ममेव बिभ्रतीति भरताः ॥२॥

प्रथमस्य क्लृप्तिमाह—

24 **तेषां प्रथमस्य कल्पोऽयमेव ज्योतिष्टोमः।**

---

15, B[1] M[1] My °भूतान् for भूतस्य षडहस्य

इति । रथन्तरपृष्ठो ब्राह्मणोक्त एवेत्यर्थः ॥

**अविक्लृप्तः ॥**

इति । अविक्लृप्तः अविकृतः । गौरीवितस्वरहीन इत्यर्थः ॥

**द्वादशाहक्लृप्त इति प्रथमः ॥३॥**

इति । द्वादशस्वप्यहस्सु अग्निष्टोमसंस्थ एव क्लृप्त इत्यर्थः । तदुक्तमापस्तम्बसूत्रे—द्वादशाग्निष्टोमा रथन्तरसामानः सभरतद्वादशाहाः (आप० श्रौ० २१.१४.१४–१५) इति । तथा च कात्यायनः—द्वादशाहविकल्पाः । सर्वाग्निष्टोमो भरतद्वादशाहः (का० श्रौ० २४.७.१०-११) इति ॥३॥

द्वितीयस्वरूपमाह—

**अथ द्वितीयः । एतस्यैव सतोऽतिरात्रावभितो दशाग्निष्टोमा मध्यतः । इति द्वितीयः ॥४॥**

इति । स्पष्टम् । अत्रातिरात्राबषोडशिमन्तौ कार्यौ । उत्तरत्र षोडशिमत्त्वेन विधानात् ॥४॥

तृतीयस्वरूपमाह—

**अथ तृतीयः । एतस्यैव सतोऽतिरात्रावभितो बृहद्रथन्तरपृष्ठानि दशाहानि मध्यतः ॥५॥**

इति । बृहद्रथन्तरे व्यत्यासः पृष्ठे येषामह्नां तानि ॥५॥

---

1. M³ Om. एव

4. P द्वादशकृत्वः for द्वादशाहक्लृप्तः

12. P मध्यः for मध्यतः

14. M³ Om. अत्र

19. B²M³ °रथन्तर° for रथन्तरे ; M¹ B² व्यत्यासं for व्यत्यासः

रथन्तराहस्य क्लृप्तिमाह—

तेषां प्रथमस्य कल्पः । पुरोजिती वो अन्धसः (सा० ६९७–९) इति गौरीवितमेकस्याम् । पदनिधनं शुद्धाशुद्धीयमेकस्याम् । श्यावाश्वमेकस्याम् । आन्धीगवं तिसृषु । समानमितरं ज्योतिष्टोमेन । इति रथन्तरम् ॥६॥

इति । स्पष्टम् । क्लृप्तिश्च ॥६॥

बार्हताहस्य क्लृप्तिमाह—

अथ बार्हतम् । अग्रियवती प्रतिपत् । बार्हतान्याज्यानि । बृहत्पृष्ठम् । श्यैतं ब्रह्मसाम । श्रुध्यमुष्णिगाहि । पुरोजिती वो अन्धस (सा० ६९७–९) इति गौरीवितमेकस्याम् । मधुश्चुन्निधनमेकस्याम् । श्यावाश्वमेकस्याम् । आन्धीगवं तिसृषु । समानमितरं ज्योतिष्टोमेन । एताभ्यामेव विपर्यासं दशाहानि मध्यतः । इति तृतीयः ॥७॥

इति । स्पष्टम् । क्लृप्तिश्च । अहीने तु सामतृचस्थाने श्यावाश्वमेव ॥७॥

ज्योतिष्टोमद्वादशाहोभयधर्मकं चतुर्थं भरतद्वादशाहमाह—

अथ चतुर्थः । एतस्यैव सतः षोडशिमन्ता-

---

10. B[1]M[1] My अग्र° for अग्रिय°

वतिरात्रावभितोऽग्निष्टोमावन्तराष्टौ मध्य उक्थ्याः । षोडशिमच्चतुर्थमहरुभयसाम सप्तमं बृहत्पृष्ठं कण्वरथन्तरमध्यंदिनम् ॥८॥

इति । अनेन स्वरूपकथनेन द्वादशाहसंस्थाधर्माश्चोक्ताः ॥८॥

दशरात्रे द्वितीयस्याह्नः क्लृप्तिमाह—

तस्य कल्पो बार्हतस्याह्नः साकमश्वं सौभरमाष्टादंष्ट्रमित्युक्थानि ॥९॥

इति । स्पष्टम् ॥९॥

तृतीयस्य क्लृप्तिमाह—

प्रमंहिष्ठीयं हारिवर्णं तैरश्चमिति राथन्तरस्य॥१०॥

इति । स्पष्टम् ॥१०॥

चतुर्थस्य क्लृप्तिमाह—

चतुर्थस्याह्नो नानदं स्वारमाष्टादंष्ट्रस्य लोके नार्मेधम् । प्रत्यस्मै पिपीषते (सा० १४४०-३) इति गौरीवितं षोडशिसाम ॥११॥

इति । स्पष्टम् । पुरोजितीति नानदमधुश्चुन्निधनश्यावाश्वानि सामतृचः । आन्धीगवं तिसृषु । आष्टादंष्ट्रस्य स्थाने नार्मेधम् । प्रत्यस्मै पिपीषत इति गौरीवितं षोडशिसाम ॥११॥

सप्तमस्य क्लृप्तिमाह—

सप्तमस्याह्नः । पुनानः सोमधारया-(सा० ६७५-६)

6. M[3] Om. आष्टा°···स्वारम् (L. 14)

13. M[1]B[1] स्वरम् for स्वारम्

**इति रौरवमेकस्याम् । कण्वरथन्तरमेकस्याम् । मैधातिथमेकस्याम् । यौधाजयं तिसृषु ॥१२॥**

इति । स्पष्टम् ॥१२॥

पक्षान्तरमाह—

**यद्यु वै कण्वरथन्तरं तृचस्थं चिकीर्षेत् । कण्वरथन्तरयौधाजये अन्योन्यस्य स्थानं व्यतिहरेत् ॥१३॥**

इति । रौरवयौधाजयमैधातिथानि सामतृचः । कण्वरथन्तरं तिसृष्विति यावत् ॥१३॥

**उद्वंशीयान्तानि षष्ठनवमयोरह्नोरुक्थानि बार्हतं षष्ठमहर्बार्हतं सप्तमं राथन्तरमष्टमं बार्हतं नवमं राथन्तरं दशमम् । तस्मिन्त्सार्पराज्ञम् ॥१४॥**

इति । स्पष्टम् । अस्मिन् द्वादशाहे सर्वेष्वप्यहस्सु ज्योतिष्टोमस्तोम एव । अत्र दशमेऽहनि सार्पराज्ञीनां विधानात् पूर्वेषु त्रिष्वपि द्वादशाहेषु सार्पराज्ञस्तवनं न कार्यमित्याचार्याणामाशयः । अत्र जैमिनिकल्पे ज्योतिष्टोमद्वादशाहप्रभेदाः बहव उक्ताः । तत्र सत्रभूतास्त्रयो द्वादशाहाः पृष्ठसंस्थाकृतविशेषाः आचार्यै-

10. $M^3M^1$ Om. अह्नोः

13. $M^3$ °राज्ञीम् for राज्ञम्

16. $B^2M^3$ Om. त्रिष्वपि द्वादशाहेषु; $M^3$ Om. न

17. $B^2M^3$ S before तत्र add तद्यथा

विनिर्दिश्यन्ते । वैश्वानरः प्रायणीयोऽतिरात्रः समूढच्छन्दसो द्वादशाहस्य दशाहान्युदयनीयोऽतिरात्रः । वैश्वानरः प्रायणीयोऽतिरात्रो व्यूढच्छन्दसो द्वादशाहस्य दशाहान्युदयनीयोऽतिरात्रः । इमौ द्वादशाहौ अस्मत्कल्पकारक्लृप्तावेव । वैश्वानरः प्रायणीयोऽतिरात्रः बृहद्रथन्तराभ्यां विपर्यासः । दशाग्निष्टोमाः । उदयनीयोऽतिरात्रः । वैश्वानरः प्रायणीयोऽतिरात्रोभयसामानो विपर्यासः । दशाग्निष्टोमाः उदयनीयोऽतिरात्रः । तत्र मध्यमानि दशाहानि । उभयसामकानि । रथन्तरपृष्ठः बृहदनुष्टुप्कः । बृहत्पृष्ठं रथन्तरं माध्यंदिनम् । एवंरूपेण व्यत्यस्ततया कार्याणि । वैश्वानरः प्रायणीयोऽतिरात्रो ज्योतिष्टोमो रथन्तरपृष्ठ्योऽष्टावुक्थ्याः । ज्योतिष्टोम-बृहद्रथन्तराभ्यां विपर्यासमुभयसाम सप्तममहर्ज्योतिष्टोमो रथन्तर-पृष्ठः । उदयनीयोऽतिरात्रः । अत्र उपान्त्यभूतज्योतिरग्निष्टोम ऐकाहिक एव । वैश्वानरः प्रायणीयोऽतिरात्रो ज्योतिरग्निष्टोमो बृहत्पृष्ठोऽष्टावुक्थ्याः । ज्योतिष्टोमोभयसामानो विपर्यासं यत् षष्ठं तत् सप्तममहः ज्योतिरेवाग्निष्टोमो बृहत्पृष्ठः । उदयनीयोऽतिरात्रः । अष्टावुक्थ्या इत्यत्र आदितः पञ्चानामुक्थ्यानाम् उभयसाम्नां

---

1. B[2]M[3] Om. वैश्वानरः ∙∙ °तिरात्रः (L. 3)

4-5. M[2]M[3] S before वैश्वानरः add वैश्वानरः प्रायणीयातिरात्रो । रथन्तर-पृष्ठाः दशाग्निष्टोमाः । उदयनीयोऽतिरात्रः; M[3] विपर्यासं, B[3] पर्यासं for विपर्यासः; S after अतिरात्रः adds बृहत्पृष्ठा दशाग्निष्टोमाः उदयनीयोऽतिरात्रः वैश्वानरः प्रायणीयोऽतिरात्रः

6. B[2]M[3] S विपर्यासं for विपर्यासः; S °ष्टोमः for ष्टोमाः

7. S °ष्टोमः for °ष्टोमाः

8. M[3] रथन्तरं पृष्ठम् । बृहदनुष्टुप्कम् for रथन्तरपृष्ठः बृहदनुष्टुप्कः ; S °पृष्ठं for पृष्ठः ; M[1] before बृहत् add अथ

9. S व्यस्ततया for व्यत्यस्ततया

10. B[2] after °ष्टोम ins. महर्

12. M[2]M[3]M[1] Om. °अग्नि°

16. B[3]M[3] उक्थानां for पञ्चानां

रथन्तरपृष्ठः बृहदनुष्टुप्कः । बृहत्पृष्ठं रथन्तरमध्यंदिनमित्येवं व्यत्यासः कार्यः। षष्ठसप्तमाष्टमानाम् उक्थ्यानाम् उभयसाम्नां रथन्तरपृष्ठः बृहदनुष्टुप्कः । बृहत्पृष्ठं रथन्तरमध्यंदिनमित्येवं व्यत्यासः कार्यः। षष्ठसप्तमाष्टमानामुक्थानामुभयसाम्नाम् । अत्रापि उपान्त्यभूतज्योतिरग्निष्टोमः ऐकाहिक एव ॥

द्वादश अग्निष्टोमाः रथन्तरपृष्ठाः सभरतद्वादशाहाः । द्वादशाग्निष्टोमाः बृहत्पृष्ठाः । तन्नाकसदामयनं द्वादशोक्थ्याः तद्विश्वेषां देवानामयनम् । द्वादशषोडशिमन्तः तदिन्द्रस्यायनम् । द्वादशातिरात्राः । तद् द्यावापृथिव्योरयनमिति । अत्र भरतद्वादशाहादिषु पञ्चसु द्वादशाहादिषु प्रसिद्धस्यैव ज्योतिष्टोमस्यावृत्तिः। न त्वैकाहिकस्य। विश्वेषां देवानामयनादिषु त्रिषु द्वादशाहेषु रथन्तरं बृहदिति विपर्यासं पृष्ठे भवत इति जैमिनिकल्पभाष्ये व्याख्यातम् । तदुक्तमाश्वलायनेन—अथ द्वादशाहाः भवेयुः सत्राणि भवेयुरहीना वोक्तो दशरात्रः समूळ्हो व्यूळ्हो वा तमभितोऽतिरात्रौ संभार्ययोर्वा वैश्वानरमुपदध्यात् संवत्सरप्रबल्हं श्रीकामोऽतिरात्रश्चतुर्विंशं विषुवद्वर्जो नवरात्रो महाव्रतम् (आ० श्रौ० १०.५.१-७) ॥

अथ भरतद्वादशाह इममेवैकाहं पृथक्संस्थाभिरुपेयुरतिमात्रमग्रेऽथाग्निष्टोममथाष्टावुक्थ्यानथाग्निष्टोममथातिरात्रमिति

2. M[1] Om. उक्थानाम्

4. M[3]B[2] S Om. षष्ठ° ··· उभयसाम्नाम् (The sentence is incomplet.) [रथन्तरपृष्ठः बृहदनुष्टुप्कः ?] ?

10. S द्वादशाहेषु for द्वादशाहादिषु

11. B[2]M[3] अभावे वृत्तिः for आवृत्तिः ; S after आवृत्तिः adds भवेत् ; B[2] Om. त्रिषु

14. S द्वादशाहाः for द्वादशाहः

15. M[3]B[2] °रात्रसंभार्ययोर्वा for °रात्री संभार्ययोर्वा

16. B[2] प्रबहं for प्रबल्हं

18. B[2] इमे वैका° for इममेवैका°

19. B[2] उक्थान् M[1] उक्थ्यानि for उक्थ्यान्

द्वादशाहास्तैरात्मना बुभूषन्तः प्रजया पशुभिः प्रजनयिष्यमाणाः स्वर्गलोकमेष्यन्तः स्वानां श्रैष्ठ्यमैच्छन् । त उपेयुर्वा यजेत वेति पृथक्त्वमिति संवत्सरप्रवर्हद्वादशाहस्य क्लृप्तिः । अतिरात्रश्चतुर्विंशं प्रायणीयमहः अभिजित्त्रयस्स्वरसामानः । आवृत्ताः स्वरसामानः । विश्वजिन्महाव्रतं चातिरात्रश्चेति । तस्य गवामयनवदहानि कर्तव्यानि । अत्र चतुर्विंशमहरग्निष्टोम उक्थ्यो वेति पक्षद्वयं ब्राह्मणेनैवोक्तम् । उक्थ्यसंस्थस्य क्लृप्तिः कल्पकारेणोक्ता । सैव क्लृप्तिरग्निष्टोमस्यापि । अग्निष्टोमपक्षे स्तोमभेद उच्यते । अत्र सूत्रम्—अग्निष्टोमसंस्थां चेत् त्रिंशान्याज्यानि षट्त्रिंशानि पृष्ठानि (ला० श्रौ० सू० ४. २. ११) इति । सर्वाण्याज्यानि त्रिंशस्तोमानि । सर्वाणि पृष्ठानि षट्त्रिंशस्तोमानि । इतराणि चतुर्विंशानि ॥

त्रिंशस्तोमस्य दशभ्यो हिंकरोति । स तिसृभिः स षड्भिः स एकया दशभ्यो हिंकरोति । स एकया स तिसृभिः स षड्भिः दशभ्यो हिंकरोति । स षड्भिः स एकया स तिसृभिः इति ।

षट्त्रिंशस्य द्वादशभ्यो हिंकरोति । स तिसृभिः सोऽष्टाभिः स एकया द्वादशभ्यो हिंकरोति । स एकया स तिसृभिः सोऽष्टाभिः द्वादशभ्यो हिंकरोति । सोऽष्टाभिः स एकया स तिसृभिः इति । यद्वा । अत्र सूत्रम्—षट्त्रिंशानि वा होतृकसामानि (ला० श्रौ० ४. ५. १२) इति । मैत्रावरुणब्राह्मणाच्छंस्यच्छा-

---

2. M[3] S ऐच्छन्त: for ऐच्छन् ; B[2] तदपेयुर् for त उपेयुर् ; B[2] M[3] जयेत for यजेत

8. M[3]B[2] तस्य for सा

9. S M[3] B[2] संस्थं for °संस्थां

15. B[2] Om. इति

वाकानां षट्त्रिंशानि स्तोमानि । इतराणि चतुर्विंशानि । अथवा अत्र सूत्रम्—पृष्ठानां वाष्टाचत्वारिंशानि (ला० श्रौ० ४.५.१३) इति पृष्ठस्तोत्रेषु मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानाम् अष्टाचत्वारिंशस्तोमानि । इतराणि चतुर्विंशानि । यद्वा । सर्वाणि वा त्रिंशानि स्तोत्राणि (ला० श्रौ० ४.५.१४) इति । सर्वाणि स्तोत्राणि त्रिंशानीत्यर्थः । यद्वा । व्यत्यासं वा त्रिणवत्रयस्त्रिंशाविति द्वादशस्वपि स्तोत्रेषु त्रिणवं त्रयस्त्रिंशमित्येवं व्यत्यासः कार्यः । अभिजितो मध्यंदिने बृहत्यां पुनानः सोमेति अभीवर्तस्तिसृषु । रौरवकण्वरथन्तरमैधातिथानि सामतृचः । यौधाजयं तिसृषु । यद्वा । कण्वरथन्तरं तिसृषु । रौरवाभीवर्तमैधातिथानि सामतृचः । यौधाजयं तिसृषु । अथवा पुनानः सोमेति अभीवर्तस्तिसृषु । रौरवयौधाजयमैधातिथानि सामतृचः । कण्वरथंतरं तिसृषु । इति विशेषः । चतुर्विंशाभिजितो बृहत्पृष्ठत्वात् अभिजितो मध्यंदिने अजाम्यर्थं कण्वरथन्तरकल्पनम् । पूर्दशरात्रे तथा दर्शनात् । पृष्ठस्तोमप्रकृतिकत्वात् त्रयाणां साम्नाम् अभीवर्तस्य स्थाने नौधसश्यैतमहावैष्टम्भानि क्रमेण कुर्युः । आर्भवे सुज्ञानस्थाने पौष्कलश्रुध्ये व्यत्यासेन कार्ये । गवामयने प्रत्यहमभीवर्तः ब्रह्मसामत्वेन कल्पकारेणोक्तः गवामयनादन्यत्र अभीवर्तं ब्रह्मसामत्वेन कुर्युः । अत्र यत् सामावसृजेयुरव स्वर्गाल्लोकात् पद्येरन् (तां० ब्रा० ४. ३. ६) इति श्रुतेः । षष्ठसप्तमयोरह्नोः रथन्तरपृष्ठत्वात् सप्तमेऽहनि बृहत्याम् अभि सोमे-(सा० ८५६)ति पौरुमद्गं प्रथमायाम् । उभयोः स्तोभगौतमबृहन्निधनवार्कजम्भमैधातिथानि सामतृचः । अन्तरिक्षं तिसृषु ।

---

2. $M^1$ Om. अथवा···चतुर्विंशानि (L. 4)

6. $B^2M^3$ Om. स्तोत्राणि after सर्वाणि

9. S °यौधाजयानि for °मैधातिथानि

13. S जितोः for जितो

14. S °जितोर् for °जितो

19. $M^3$ विसृजेयुः for अवसृजेयुः

अग्नेस्त्रिणिधनमभ्यास्यायाम् । इति विशेषः । त्रयाणां स्वरसाम्नाम् अग्निष्टोमसंस्थैव । तदुक्तं निदाने—अथैते स्वरसामानः । तानग्निष्टोमानाह नवाहकारिणः कुर्युरुक्थ्यान्येकविंशत्यहकारिणो योऽन्यथा कुर्यादकुशलः पुरुष इति विद्यात् ( नि० सू० ५. ७) इति । अहीने तु द्वितीयस्याह्नः आर्भवे गौरीवितस्य स्थाने आत्रेयं प्रथमच्छन्दोमप्रकृतिकत्वात् । तृतीयस्याह्नः आर्भवे सामतृचस्य स्थाने श्यावाश्वं त्रयाणां स्वरसाम्नां गौरीवितस्य स्थाने औदलमासितं त्वाष्ट्रीसामेति क्रमेण कुर्युः । विश्वजितः आर्भवे सामतृचस्य स्थाने आन्धीगवे कृते गौरीवितस्य स्थाने औदलमिति विशेषः ॥१४॥

इति द्वितीये प्रपाठके पञ्चदशः खण्डः ॥१५॥

---

## षोडशः खण्डः

### [ त्रिकद्रुकद्वादशाहाः ]

अथ एकाहाहीनद्वादशाहान् विवक्षुर्भगवान् सर्वप्रकृतिभूतज्योतिष्टोमद्वादशाहप्रभेदानुक्त्वा विकृतिभूतज्योतिर्गौरायुरभिजिद्विश्वजिदाद्येकाहाहीनद्वादशाहान् विधित्सुः न्यायप्रदर्शनार्थं समस्तव्यस्तरूपेण त्रिकद्रुकद्वादशाहानाह—

**अथातस्त्रयस्त्रिकद्रुकद्वादशाहाः ॥१॥**

इति । त्रिकद्रुका इति ज्योतिर्गोआयुषां संज्ञा ॥१॥

---

3. B[1] उक्थानि for उक्थ्यानि

5. B[1] My Om. अहीने तु

6. M[3] S °च्छन्दोमः for च्छन्दोम

9. M[1] Om. आन्धीगवे कृते गौरीवितस्य स्थाने

17. M[1] त्रिककुद्° for त्रिकद्रुक°

19. M[2] S °गौरायुषां for गोआयुषां; M[3]B[2] संज्ञाः for संज्ञा

प्रथमस्वरूपमाह—

**तेषां प्रथमस्य कल्पोऽतिरात्रावभितो दशकृत्वो गोआयुषी मध्यतो विपर्यासम् ॥२॥**

इति । गोआयुषोरेकैकस्य पञ्चधावृत्तौ मिलित्वा दशधावृत्तिरित्यर्थः । अतिरात्रयोर्ज्योतिष्टोमत्वात् तयोः करणादेव ज्योतिष्टोमः कृत इति गोआयुषोर्मध्यतः कृतिरुक्ता ॥२॥

क्लृप्तिमाह—

**ते सर्वे ऐकाहिकाः गौरीवितस्वराः ॥३॥**

इति । सांवत्सरिकसामव्युदासार्थमैकाहिकग्रहणम् । यत्राहर्भेदस्तत्र न गौरीवितस्वरः । यत्राह्नामैकरूप्यम् तत्र गौरीवितस्वरः । तापश्चितामयनादौ भरतद्वादशाहेष्वपि तथा दर्शनात् । तदुक्तं निदाने तापश्चितामयनप्रकरणे—यान्येकाहैर्वर्तन्ते गौरीवितानि तानि । यानि नानाहोभिः सगौरीवितानि । तानि नानाह्नो हि संतानार्थं गौरीवितम् ( नि० सू० १०. ८ ) इति । अस्य क्लृप्तिः—पवस्व वाचो अग्र्यो-दविद्युतत्या-पवस्वेन्दो-वृषा सोम-पवमानस्य ते कवे इति बहिष्पवमानम् । अग्निन्दूमित्रं वयम्-इन्द्रमिद्गा-चतुर्ऋचम् । इन्द्रे अग्ने-त्याज्यानि । चतुर्ऋचे अन्त्याया उद्धारः । अस्य प्रत्नाम् ( सा० ७५५-७ ) इति गायत्रामहीयवे । परीतोषीति समन्तं प्रथमायाम् । दैर्घश्रवसबार्हदुक्थे तृचयोः । यौधाजयमध्यास्यायाम् । अयं सोम इति पार्थमन्त्यम् । बृहद्वामदेव्यश्यैतकालेयानि पृष्ठानि । यस्ते

---

2. PV पञ्चकृत्वो for दशकृत्वो

3. M[3] आयूंषि for आयुषी

8. B[3]M[3] °हिकः । ··· °स्वरः for °हिकाः । ··· °स्वराः

10. S Om. न; B[3] M[3] Om. यत्राह्नाम्···स्वरः; S adds न after °रूप्यं तत्र

18. S चतुर्ऋचानाम् for चतुर्ऋचे

मद इति गायत्रमौक्षे। पवस्वेन्द्रमच्छेति सफश्रुध्ये। पुरोजितीति गौरीवितान्धीगवे। सूर्यवतीषु कावमन्त्यम्। सर्वे तृचाः। यज्ञायज्ञीयमग्निष्टोमसाम। साकमश्वं सौभरमुद्वंशीयमित्युक्थानि। अहीने तु गौरीवितस्य स्थाने श्यावाश्वं पञ्चदशं बहिष्पवमानम्। तृवृन्त्याज्यानि। सप्तदशं माध्यंदिनं सवनम्। एकविंशं तृतीयं सवनम्। सोक्थमिति॥

द्वितीयस्य उच्चा त इति गायत्रामहीयवे। अभि सोमेति द्विहिंकारं वामदेव्यं प्रथमायाम्। मैधातिथरौरवे तृचयोः। यौधाजयमध्यास्यायाम्। औशनमन्त्यम्। पुरोजितीति गौरीवितान्धीगवे। प्रमंहिष्ठीयं हारिवर्णमुद्वंशीयमित्युक्थानि। अन्यत् सर्वं प्रकृतिवत्॥

त्रिवृद्बहिष्पवमानम्। पञ्चदशान्याज्यानि। सप्तदशं माध्यंदिनं सवनम्। एकविंशं तृतीयसवनं सोक्थयमिति। वैश्वानरातिरात्रयोः ज्योतिष्टोमत्वेऽपि त्रिकद्रुकान्तर्भूतज्योतिष्टोमस्याग्निष्टोमसंस्थात्वात् तस्यातिरात्रान्तर्भावकरणमयुक्तमिति॥३॥

पक्षान्तरमाह—

**अतिरात्रावभितोऽष्टौकृत्वो गोआयुषी मध्यतो विपर्यासं ज्योतिष्टोमः प्रथमदशमेऽहनी॥४॥**

इति। पूर्ववद्व्याख्येयम्॥४॥

**ते सर्वे ऐकाहिका गौरीवितस्वराः॥५॥**

इति। गतम्॥५॥

---

10. M$^{3}$ उक्थ्यानि for उक्थानि

15. M$^{3}$S °संख्यत्वात् for °संस्थात्वात्

17. PV चतुर् for अष्टौकृत्वो

18. SB$^{2}$ My °ष्टोमे for °ष्टोमः

द्वितीये गोआयुर्भ्यां सह ज्योतिषः आवृत्तिरूपसाम्याभावात् तत्सिद्ध्यर्थं पक्षान्तरमाह—

**अतिरात्रावभितस्त्रिस्त्रिकद्रुकानूर्ध्वानुपयन्ति ज्योतिष्टोम एव दशममहः ॥६॥**

इति । सर्वप्रकृतिभूतज्योतिष्टोमस्यैव दशमाहत्वात् पूरणार्थत्वान्न साम्यविरोधः ॥६॥

**ते सर्वे ऐकाहिका गौरीवितस्वराः ॥७॥**

इति । गतम् ॥७॥

समस्तानुक्त्वा व्यस्तांस्त्रिकद्रुकद्वादशाहानाह—

**अथातः सुकरजातयः ॥८॥**

इति । सुखेन कर्तुं शक्यानि सुकराणि । तज्जातयः । तत्प्रभेदा इत्यर्थः । एकस्यैवाह्नोऽभ्यासात् सुकरत्वम् ॥८॥

संज्ञान्तरमाह—

**अपि च निकायिन इत्याचक्षते ॥९॥**

इति । निकायः समूहः । तद्वतो निकायिनः । ज्योतिर्गोआयूंषि निकायिनो नाम । प्रकृतेर्विलक्षणाः परस्परतुल्यधर्मानुयायिनः किंचिद्व्यावृत्ता निकायिनः । तदुक्तमापस्तम्बेन—निकायिनां तु प्रथमः (आप० श्रौ० २२.१.२) इति । निकायिसंज्ञायाः प्रजोजनं साहस्रसाद्यस्कादिषु व्यस्तसमस्तकरणम् ॥९॥

---

1. S° स्वरूप° for °रूप°

3. SM[1]M[3]B[1-2] S Om. त्रिस्

4. SM[3]B[2]B[3] °ष्टोमं for °ष्टोम एव; B[1] दशमेऽहनि for दशममहः

10. PV सूकर° for सुकर°

16. B[1] MyM[1]M[3] अर्थं for धर्मं

19. B[1]M[3] °संस्थाया for °संज्ञायाः

तत्राद्यमाह—

**अतिरात्रावभितो दशकृत्वो ज्योतिष्टोमो मध्यतोऽविक्लृप्तः । स ज्योतिर्दशाहः ॥१०॥**

इति । अविक्लृप्तः अविकृतः । गौरीवितस्वरहीन इति यावत् । अह्नामैकरूप्यात् गौरीवितस्वर इति भावः ॥१०॥

द्वितीयमाह—

**अतिरात्रावभितो दशकृत्वो गोष्टोमो मध्यतोऽविक्लृप्तः । स गोर्द्वादशाहः ॥११॥**

इति । गतम् ॥११॥

**अतिरात्रावभितो दशकृत्व आयुष्टोमो मध्यतोऽविक्लृप्तः । स आयुर्द्वादशाहः ॥१२॥**

इति । गतम् ॥१२॥

क्रमप्राप्तमभिजिदेकाहद्वादशाहं विधत्ते—

**एवमेवाभिजिद्द्वादशाहः ॥१३॥**

इति । दशधावृत्तः गौरीवितस्वरहीन उभयोऽतिरात्र इत्येवं शब्दार्थः ॥१३॥

**एवं विश्वजिद्द्वादशाहः । एवं सर्वजिद्द्वादशाहः ॥**

इति । गतम् ॥१४॥

---

5. S ऐक्य° for ऐक°

9. B[1] दशधावृत्तगौरीवितस्वरहीनः for गतम्

अन्येष्वपि एकाहाहीनेषु द्वादशाहत्वमतिदिशति—

**एतेन प्रदेशेन यावन्तोऽहीनैकाहास्तावन्तो द्वादशाहाः इति प्रदिशन्ति ॥१५॥**

**अभ्यासान्तर्हितैरविक्लृप्तैर्दशाहानि पूरयेत् ॥१६॥**

इति। स्पष्टम् ॥१५-१६॥

अहीनेषु षड्रात्रादिषु अभ्यासकृतावहराधिक्यं स्यादित्यत आह—

**यत्राभ्यासो नोपपद्येत ज्योतिष्टोमेन तत्र पूरयेदिति। पूरयेदिति ॥१७॥**

इति। स्पष्टम्। षड्रात्रे चत्वारो ज्योतिष्टोमाः पूरकाः। सप्तरात्रे त्रयः। अष्टरात्रे द्वौ। नवरात्रे एकः। इति योज्यम्। अभ्यासोऽध्यायसमाप्तिद्योतनार्थः। राजसूयाप्तोर्यामौ विना इतरेषामेकाहाहीनानां द्वादशाहत्वकल्पनम्। तदुक्तं कात्यायनेन—त्रिकद्रुकैर्वाहीनैकाहानां वैकैकेनाप्तोर्यामिराजसूयवर्जं गोआयुर्भ्यां वाभ्यासानुपपत्तौ ज्योतिष्टोमः पूरणः (का० श्रौ० २४. ७. १६-१८) इति। साहस्रसाद्यस्क्रादिषु निकायिषु त्रिकद्रुकन्यायेन समस्तव्यस्तभेदेन अभ्यासानुपपत्तौ ज्योतिष्टोमः पूरकः अभितोऽतिरात्रौ च कृत्वा द्वादशाहः कार्यः। चत्वारस्त्रिवृतः षट् सप्तदशा इत्यादियज्ञभेदात् प्रथमधर्मस्य द्वितीयादिष्वभावात् न निकायित्वम्। अत एव तेषु समस्तत्वं न कार्यम्। किं तु

4. B[3] अभ्यासमन्तर्हितैर्, PV. अभ्यासमहीनैर् for अभ्यासान्तर्हितैर्

6. B[2]M[3] अहीने तु for अहीनेषु

13. B[2]M[3] °द्रुकेषु for °द्रुकैः

14. B[2]M[3] Om. पूरणः···°ष्टोमः (L. 16)

18. B[1-3] इत्यादिषु for इत्यादि°

व्यस्तकरणमेव । पौण्डरीकस्य अभ्यासङ्ग्यः षडहस्त्रयश्छन्दोमाश्चतुष्टोमोऽग्निष्टोमो विश्वजिदतिरात्र इति विधानात् तस्य द्वादशाहत्वकृतौ वैश्वानरोऽतिरात्रः कल्प्यः । अन्तिमे विश्वजिदतिरात्रे त्रिवृत्पञ्चदशसप्तदशैकविंशानां ज्योतिषामपि सत्त्वात् वैश्वानराधिकरणन्यायेन सहस्रे शतं भवतीति न्यायेन च सर्वस्तोमसर्वपृष्ठत्वेऽपि रथन्तरस्य त्रिवृदादीनामप्यन्तर्भावात् वैश्वानरातिरात्रत्वमव्याहतमेवेति सर्वँ समञ्जसम् ॥१७॥

इति द्वितीये प्रपाठके षोडशः खण्डः ॥१६॥

इति क्षुद्रकल्पसूत्रे द्वितीयः प्रपाठकः ॥२॥

शतक्रतुचतुर्वेदिश्रीनिवासाख्ययज्वना ।
क्षुद्रे तुरीयकोऽध्यायो व्याख्यायि प्रीतये हरेः ॥

इति श्रीमद्रामानुजसिद्धान्तस्थापनाचार्यशतक्रतुताताचार्यतनयशतक्रतुचतुर्वेदिश्रीनिवासाचार्यविरचिते क्षुद्रकल्पसूत्रभाष्ये चतुर्थोऽध्यायः ॥४॥

इति आर्षेयक्षुद्रकल्पसूत्रे चतुर्थोऽध्यायः ॥४॥

---

7. $B^1M^1$ after समञ्जसम् adds हरिः ओम् ; S ओम्

9. My $B^3M^3$ S Om. इति क्षुद्र ··· प्रपाठकः

10. $B^2M^3$ Om. शतक्रतु···विरचिते (L. 13)

13. $B^2M^3$ उत्तर° for क्षुद्र°

14. S $B^2M^3$ after अध्यायः ins. हरिः ओम्

अथ

# पञ्चमोऽध्यायः

## तृतीयः प्रपाठकः

### प्रथमः खण्डः

श्रीकल्पसूत्रोपग्रन्थकृतो गुरुवरान् भजे ।
श्रीगार्ग्यमशकद्राह्यायणकात्यायनाह्वयान् ॥

### [ अथ द्वादशाहविकल्पाः ]

भरतद्वादशाहेषु ज्योतिष्टोमस्तोमकं बृहद्रथन्तरपृष्ठद्वादशाहमुक्त्वा इदानीं द्वादशाहविकल्पान् विवक्षुः प्रथमं बृहद्रथन्तरपृष्ठं समूढद्वादशाहं नानापृष्ठसमूढद्वादशाहं च विधित्सुः ब्राह्मणोक्तस्यैव नानापृष्ठव्यूढद्वादशाहस्य प्रकारद्वयेन बृहद्रथन्तरपृष्ठत्वमुपपादयति—

**अथातोऽस्यैव सतो विचारान् वेदयिष्यामहे द्वादशाहस्य ॥१॥**

इति । अस्यैव ब्राह्मणोक्तस्यैव विचारान् विकल्पान् । ते वयमिति शेषः ॥१॥

व्यूढसमूढसाधारण्येन द्वादशाहस्य बृहद्रथन्तरपृष्ठत्वे ब्रह्मवादिनां चोद्यमुद्भावयति—

**बृहद्रथन्तरपृष्ठो द्वादशाहः स्यादित्याहुः । कस्य हेतोरिति ॥२॥**

गतम् ॥२॥

---

7. B[3]M[3]. Om. द्वादशाहमुक्त्वा इदानीम्

12. B[3] M[3]. Om सतो ; My M[1]M[3] ते दर्शयिष्यामहे for वेदयिष्यामहे

परिहरति—

भूम्ना ॥३॥

इति। भूम्ना बृहद्रथन्तरपृष्ठाधिक्येनेत्यर्थः ॥३॥

तमेवोपपादयति—

अस्य बृहद्रथन्तरपृष्ठान्यहानि भवन्ति। प्रथमश्च द्व्यहः। उत्तरश्चतुरहः। भूम्नो वशं नेष्याम इत्येतस्य हेतोरिति ॥४॥

दशरात्रे प्रथमद्वितीयसप्तमाष्टमनवमदशमानामह्नां बृहद्रथन्तरपृष्ठत्वात् पूर्वं भूयस्त्वमात्रेण दशरात्रस्य बृहद्रथन्तरपृष्ठत्वमुक्तम् ॥४॥

इदानीं कृत्स्नस्य दशरात्रस्य बृहद्रथन्तरपृष्ठत्वमुपपादयति—

अथापरम्। रथन्तरं परोक्षं वैरूपम्। बृहत्परोक्षं वैराजम्। रथन्तरं परोक्षं शक्वर्यः। बृहत्परोक्षं रेवत्यः। ययोरियं परोक्षकृतिर्हन्त ते एव साक्षात् करवाणीति ॥५॥

इति। वैरूपवैराजशाक्वररैवतानामियं परोक्षकृतिः ययोः बृहद्रथन्तरयोः संबन्धिनीत्यर्थः। कृत्स्ने दशरात्रे वैरूपादीनां बृहद्रथन्तरपरोक्षत्वोपपादनेन परोक्षकृत्या बृहद्रथन्तरपृष्ठत्वं गौणतयोक्तम्। इदानीं त एव बृहद्रथन्तर एव साक्षात् प्रत्यक्षेण मुख्यतः प्रत्यहं व्यत्यासेन करवाणि। करोमीत्यर्थः। हन्तेति हर्षे। बृहद्रथन्तरयोर्महिमैवंभूत इत्याचार्यस्य हर्षः। लडर्थे

---

2. P भूमा, V भूया (यो ?) for भूम्ना
5. P Om. भवन्ति
6. M[3] B[1-2] My उत्तमः for उत्तरः
15. B[2]M[3] Om. इयं…वैरूपादीनां (L. 16)
16. B[1-2] M[3] Om. कृत्स्ने
18. B[1]My °रथन्तरेण for °रथन्तर एव

लोट् छान्दसः। वैरूपवैराजादीनां बृहद्रथन्तरपरोक्षत्वं रथन्तरमेतत् परोक्षं यद्वैरूपम् ( तां० ब्रा० १२. २. ६ ) । बृहद्ध्येतत् परोक्षं यद्वैराजम् (तां० ब्रा० १२.८.४)। रथन्तरमेतत् परोक्षं यच्छाक्वरं (तां० ब्रा० १३.२.१०) इत्यादिभिः स्पष्टमाम्नातम्। ऐतरेयब्राह्मणे च नवमाध्याये रथन्तपुत्रत्वं वैरूपस्य। बृहत्पुत्रत्वं वैराजस्य। रथन्तरपुत्रत्वं शाक्वरस्य। बृहत्पुत्रत्वं रैवतस्याम्नातम्। यथा—बृहच्च वा इदमग्रे रथन्तरं चास्ताम्। वाक् च वै तन्मनश्चास्ताम्। वाग्वै रथन्तरम्। मनो बृहत्। तत् बृहत्पूर्वं ससृजानं रथन्तरमत्यमन्यत। तद्रथन्तरं गर्भमधत्त। तद्वैरूपमसृजत। ते द्वे भूत्वा रथन्तरं च वैरूपं च बृहदत्यमन्येताम्। तत् बृहद् गर्भमधत्त। तद्वैराजमसृजत। ते द्वे भूत्वा बृहच्च वैराजं च रथन्तरं च वैरूपं चात्यमन्येताम्। तद्रथन्तरं गर्भमधत्त। तच्छाक्वरमसृजत। तानि त्रीणि भूत्वा रथन्तरं च वैरूपं च शाक्वरं च बृहच्च वैराजं चात्यमन्यन्त। तद् बृहद् गर्भमधत्त। तद्रैवतमसृजत। तानि त्रीण्यन्यानि त्रीण्यन्यानि षट् पृष्ठान्यासन् (ऐ० ब्रा० ४.२८) इति। तत्रैव सप्तमाध्याये च—यद्वै रथन्तरं तद्वैरूपम्। यद्बृहत् तद्वैराजम्। यद्रथन्तरं तच्छाक्वरम्। यद् बृहत्तद्रैवतम्। एवमेते उभे अनवसृष्टे भवतः (ऐ० ब्रा० ४.१३) इति। अन्यत्र च तृतीयेऽहनि—राथन्तरं ह्येतदहरायतनेन ( ऐ० ब्रा० ५.१ ) इति। चतुर्थे—बार्हतं ह्येतदहरायतनेन ( ऐ० ब्रा० ५. ४ ) इति। पञ्चमे—राथन्तरं ह्येतदहरायतनेन ( ऐ० ब्रा० ५.७ ) इति। षष्ठे बार्हतं ह्येतदहरायतनेन ( ऐ० ब्रा० ५ - १२ ) इति च। पितापुत्रयोरेकत्वात् आत्मा वै पुत्रनामासि (श० ब्रा० १४. ६. ४. २६) इति श्रुतेः पुत्राणां वैरूपादीनां करणम्। पित्रोः बृहद्रथन्तरयोः प्रत्यक्षकरणमेव तलवकारैश्च प्राकृतपृष्ठ्यषडहे तृतीयपञ्चमयोरह्नोः माध्यंदिनपवमाने रथन्तरं चतुर्थषष्ठयोश्चार्भवे बृहच्च निधाय

---

15. M[3] त्रीण्यानि for second त्रीण्यन्यानि

क्लृप्तत्वात् एतेषां चतुर्णामह्नां राथन्तरबार्हतत्वं राथन्तरं पञ्चममहः बार्हतं षष्ठमहः इति तैत्तिरीयश्रुतेश्च । आचार्यमते तु वैरूपादीनां बृहद्रथन्तरयोः प्रत्यक्षकात्स्न्यात् पवमानेषु तयोः कल्पनं न कृतमिति विशेषः । द्राह्यायणमतेऽपि पृष्ठ्यषडहे उत्तरस्य चतुरहस्य पवमानेषु रथन्तरबृहतोः कल्पनात् राथन्तरबार्हतत्वं सिद्धम् । तदुक्तं सूत्रे—व्यूढं पृष्ठ्यमेके । तस्य समूढात् प्रथमस्याह्नो बहिष्पवमानम् । समूढमेके रथन्तरबृहत्पृष्ठम् । नानापृष्ठे चोत्तरे चतुरहे रथन्तरबृहती व्यत्यासं पवमानेषु बृहतीषु रथन्तरमनुष्टुप्सु बृहत्ते द्वितीये ।। बृहदुत्तमं समूढे । आष्कारणिधनात् पूर्वं कौल्मलबर्हिषम् ।। आन्धीगवात् श्यावाश्वम् । उपोत्तम समूढे ।। (ला० श्रौ० ४.५.२१–२८) । आनूपोपक्रमात् बृहतीपञ्चमे ।। मानवात् पूर्वं हारायणम् ।। मधुश्चुन्निधनादाकूपारम् । उपोत्तमं समूढे ।। बृहतः पूर्वे त्रय एकर्चाः ।। रथन्तरादुत्तरे ।। षष्ठे च बृहतो व्यूढे ।। नित्यौ च शशकर्णौ तृतीये पृष्ठ्ये ।। (ला० श्रौ० सू० ४.६.१–८) इति । आश्वलायनेनापि उत्तरस्य चतुरहस्य द्विपृष्ठत्वमुक्त्वा छन्दोगैः पृष्ठत्वेन यत् साम स्तुतं तत् स्तोत्रीयत्वेन शस्तव्यम् । यन्न स्तुतं तत् योनिशंसनरूपेण कार्यम् इति । तथा च सूत्रम्—अभिप्लवपृष्ठ्याहानि रथन्तरपृष्ठान्ययुजानि बृहत्पृष्ठानीतराणि तृतीयादिषु पृष्ठ्यस्यान्त्र्यहं द्वितीयानि वैरूपवैराजशाक्वररैवतानि तेषां यथास्थाने क्रियायां योनीः शंसयेत् । सर्वत्र चास्वयोनिभावेऽन्यत्राश्विनात् (आ० श्रौ० ७.५.१-६) इति । तस्मादेतत् सर्वमभिप्रेत्याचार्यैः कृत्स्नस्य दशरात्रस्य बृहद्रथन्तरपृष्ठत्वमुपपादितम् ।।५।।

[ बृहद्रथन्तरपृष्ठः समूढद्वादशाहः ]

द्वादशाहो द्विविधः । समूढो व्यूढश्चेति । तत्र समूढोऽपि द्विविधः । बृहद्रथन्तरपृष्ठो नानापृष्ठश्चेति । तत्र बृहद्रथन्तरपृष्ठस्य क्लृप्तिमाह–

3. M[3] आम्नानात् for कात्स्न्यात् ; B[2] M[3] Om. तयोः

8. M[1]My S वा for च

10. B[1] My M[1] Om. पूर्वं

20. B[1–2] M[1] My योनिः for योनीः

**स खलु बृहद्रथन्तरपृष्ठः सन्त्समूढः ॥६॥**

इति । स खल्वित्यत्र तच्छब्देन ब्राह्मणोक्तो नानापृष्ठो व्यूढद्वादशाहः प्रसिद्ध उच्यते । बृहद्रथन्तर एव पृष्ठे यस्य स तथोक्तः । ब्राह्मणोक्तो बृहद्रथन्तरपृष्ठो भवन् समूढ एव भवतीत्यर्थः ॥६॥

नानापृष्ठस्यैव समूढत्वं मन्यमानं प्रत्युत्तरमाह—

**कथं हि बृहद्रथन्तरपृष्ठः सन्न समूढः स्यादिति ॥७॥**

इति । नानापृष्ठत्वे वा बृहद्रथन्तरमात्रपृष्ठत्वे वा सामस्तोमक्लृप्तौ विरोधाभावात् न समूढत्वहानिरिति भावः ॥७॥

**उक्तः पृष्ठ्यस्य समूढः ॥८॥**

इति पृष्ठ्यस्तोमसप्तरात्रे उक्त इत्यर्थः । अत्र चतुर्थेऽहनि इन्द्र जुषस्वेति स्वराट्स्वेव गौरीवितं षोडशिसाम कार्यम् । तदुक्तं निदाने—अथ बृहद्रथन्तरपृष्ठो द्वादशाह इत्युपक्रम्य खण्डान्ते एते न मन्यन्ते स्वराज एवेह प्रत्येतव्याः एता हि प्राकृताश्च भवन्ति । न्यायतराश्चैताश्चैवानादेशे सर्वक्रतुषु प्रतियन्त्येतेनाविच्छिन्नस्य बृहद्रथन्तरपृष्ठषडहस्य षोडशिस्तोत्रीयो व्याख्यातो यश्चैव षडहविचारेषु यश्च संसत्स्विति । यश्च संसत्स्विति (उ० ग्र० सू० ३.७) इति ॥८॥

**उक्तश्छन्दोमानाम् । यथा छन्दोमवति दशरात्रे ॥९॥**

---

6. SMyM[3] Om. हि ; P Om. न ; V Om. सन्न

8. B[1] Om. °मात्र°; B[2]M[3] Om. वा before साम°

14. B[2]M[3] अप्राकृताः for प्राकृताः

15. B[1]M[1]My सर्वत्र तु for सर्वक्रतुषु

16. B[1]M[1]My °पृष्ठः for °पृष्ठ

17. B[2]M[3] Om. second यश्च संसत्स्विति

इति । स्पष्टम् ॥९॥

पृष्ठ्यस्तोमसप्तरात्रच्छन्दोमदशरात्रयोरहीनत्वात् तत्र गौरीविताभावात् अत्रापि न स्युरित्यत आह—

**तथा ते सन्तो गौरीवितस्वराः ॥१०॥**

इति ॥१०॥

**नवमादह्नोऽर्कः प्रच्यवते तमनुष्टुभ्यनुगृह्णाति ॥११॥**

इति । व्यूढे असावि सोम इति जगत्यामर्कस्य विधानात् समूढे तु माध्यंदिनान्ते त्रिष्टुभोऽवश्यकत्वात् अर्कानिति त्रिष्टुभि वासिष्ठे विहिते सति स्थानात् दीर्घतमसोऽर्कः प्रच्युतः । तम् आर्भवे परि त्यं हर्यतं हरिम् इति अनुष्टुभ्यनुगृह्णाति । निदध्यादित्यर्थः ॥११॥

**तस्योक्तः कल्पः ॥१२॥**

इति । छन्दोमदशाहे मध्यमस्तोत्रीयत्वेनार्कः क्लृप्त इत्यर्थः । यथा परि त्यं हर्यतं हरिमिति गौरीवितदीर्घतमसोऽर्काभ्यस्ताकूपाराणि सामतृचः । अहीने तु आसितोत्तरदीर्घतमसोऽर्काकूपाराणि सामतृचः ॥१२॥

**समापद्यन्ते दशमेऽहनि सामानि । यथा छन्दोमदशमाहे तथा दशममहरिति ॥१३॥**

इति । स्पष्टम् । पर्यूष्विति श्यावाश्वस्थाने गौरीवितमौष्णिहमोकोनिधनश्यावाश्वानि सामतृचः । इति विशेषः ॥१३॥

---

2. B¹M¹My पृष्ठ° for पृष्ठ्य°; M³ Om. तत्र

13. B¹MyM¹ Om. °अभ्यस्त°

14. B¹MyM¹ °आद्य° for °उतर°

16. B¹ समाप्यन्ते for समापद्यन्ते

उपसंहरति—

**एष बृहद्रथन्तरपृष्ठो द्वादशाहस्तेनैतेन प्रतिष्ठाकामो यजेत । प्रतिष्ठा वै बृहद्रथन्तरे साम्नामिति हि भवति ॥१४॥**

इति । स्पष्टम् ॥१४॥

[ नानापृष्ठः समूढद्वादशाहः ]

बृहद्रथन्तरपृष्ठं समूढद्वादशाहमुक्त्वा नानापृष्ठं समूढद्वादशाहमाह—

**अथातो नानापृष्ठो द्वादशाहः स्यादित्याहुः । सोऽयमेव द्वादशाहो यमिमं वयमधीमहे ॥१५॥**

इति । ब्राह्मणोक्तो व्यूढः पूर्वोक्तप्रकारेण समूढक्लृप्तः कार्य इत्यर्थः । समूढ इत्यनुवर्तमानत्वात् द्वादशाहविकल्पानां प्रक्रान्तत्वाच्च व्यूढे द्वादशाहे पुनरपि विधीयमाने वैयर्थ्याद्विरोधाच्चोत्तरत्र च व्यूढस्य रूपेण समूढे समूढस्य रूपेण व्यूढे च द्वादशाहद्वये व्यूढस्येव सामान्ताः समूढस्येव छन्दांसीति समूढस्येव सामान्ता व्यूढस्येव छन्दांसीति च समूढस्योपमानकथनं पूर्वं विहितस्य प्रसिद्धस्यैव संभवति। नाविहितस्या-

---

3. $B^1$ $^2My M^1 M^3$ प्रतिष्ठायै for प्रतिष्ठा वै

4. V after इति ins. तैर् ; $M^3 B^2$ भवन्ति for भवति

7. $B^1$ पृष्ठद्वादशाहम् for पृष्ठं समूढद्वादशाहम्

11. $B^1$ व्यूढ for व्यूढः ; $M^3$ after व्यूढ: adds इति ; $M^1$ समूढ: for समूढ°; $B^1$ क्लृप्तिः कार्या for क्लृप्तः कार्यः

12. $B^1 M^3$ समूढव्यूढः for समूढः

13. $B^{1-2} M^3 My M^1$ सद्वादशाहे for द्वादशाहे ; $B^2$ व्यूढेऽस्य, $M^3$ व्यूढे स्व° for व्यूढस्य

14. M Om. च; $B^{1-2}$ व्यूढस्यैव for व्यूढस्येव

15. $M^1 B^2 M^3$ Om. समूढस्येव…व्यूढस्येव छन्दांसीति ; $B^1$ समूढस्यैव छन्दांसि for समूढस्येव छन्दांसि

16. $B^1$ °कथन° for °कथनं

प्रसिद्धस्य। न चार्षेयकल्पे पूर्वं विहितः समूढः। अत्रापि क्षुद्रकल्पे तद्विधानाभावे दृष्टान्तत्वेन कथनायोगाच्च व्यूढधर्मेडान्तत्वरहितेन शुद्धसमूढद्वादशाहस्य विधास्यमानत्वेन अत्र व्यूढधर्मसहितसमूढ-द्वादशाहेनावश्यं भाव्यमिति समूढक्लृप्त इति व्याख्यातम्। आचार्येण वयमधीमहे इति ब्राह्मणविहितस्यैवानूदितत्वात् अत्र व्यूढद्वादशाहपरत्वेनापि संगतमिति प्रतिभाति ॥१५॥

इति तृतीये प्रपाठके प्रथमः खण्डः ॥१॥

---

द्वितीयः खण्डः

[ अन्नाद्यकामद्वादशाहः ]

अन्नाद्यकामद्वादशाहमाह—

**अथातो विराट्संपन्नो द्वादशाहः स्यादित्याहुः ॥१॥**

इति। ब्राह्मणोक्त एव द्वादशाहः विराट्संपदं प्राप्त इति ब्रह्मवादिन आहुः ॥१॥

तत्र प्रश्नपूर्वकं हेतुमुपन्यस्यति—

**कस्य हेतोरिति। विराडपचिता यज्ञक्रतवो भवन्ति। विराजो हि सर्वेषु यागेषु सर्वाणि स्तोमच्छन्दांसि प्रतिष्ठितानि भवन्ति ॥२॥**

---

2. B[2] धर्मेतिडान्त°, M[3] °धर्मेतिधातत्व° for धर्मेडान्तत्व°

15. SM[3] °पूर्वं for °पूर्वकं ; M[3] after °न्यस्यति adds पूर्वमाह

16. PV °क्रतं भवति for °क्रतवो भवन्ति

17. PV विराजि हि सर्वेऽया अयेषु for विराजो हि सर्वेषु यागेषु

इति। तस्य नवतिशतं स्तोत्रीया (ऐ० ब्रा० ३. ४१) इति श्रुत्या सर्वप्रकृतिभूतज्योतिष्टोमो विराट्संपन्नः। अभिजिद्विश्वजितौ च गोष्टोमायुष्टोमौ च। एवमन्यत्रापि विराट्संपत्त्या अपचिताः पूजिताः यज्ञाः इत्यर्थः। द्वादशाहे त्रिवृदादित्रिकान्तानां स्तोमानां दशसंख्यत्वात् विराट्संपत्तिः। गायत्रीककुबुष्णिगनुष्टुप्बृहतीपङ्क्तित्रिष्टुब्जगतीविराडतिजगतीनां छन्दसां दशसंख्यत्वात् विराट्संपत्तिः। एवं यो यज्ञो विराट्संपन्नः सोऽत्यन्तं श्रेष्ठतम इति भावः ॥२॥

प्राकृतद्वादशाहस्य नवत्यधिकसप्तशतोत्तरचतुःसहस्रस्तोत्रीयावत्त्वेन विराट्संपत्तेः सिद्धत्वात् इदानीमन्त्रहं विराट्संपत्तिं कल्पयिष्यामीत्याह—

**सोऽयं पुरा द्वादशाहः संपरेतो विराजं संपद्यते। स यथा मेऽहरहश्च विराजं संपत्स्यते संपरेतश्च तथा करवाणीति ॥३॥**

संपरेतः समुदायतः। विराजं संपद्यत इत्यत्र भूते लट्। संपन्न इत्यर्थः। संपरेतश्च तथेति अहःसमुदायत इत्यर्थः ॥३॥

क्लृप्तिश्च—

**तस्य षोडशिकावतिरात्रावभितः स्यातां पञ्चदशे पृष्ठानां ब्रह्मसाममैत्रावरुणसामनी स्याताम्। अत्र विराजं संपद्येते ॥४॥**

इति। प्रायणीयातिरात्रे ब्रह्मसाम्नः पञ्चदशस्तोमत्वम्। उदयनीये

---

9. B[1]MyM[1] Cm. °वत्त्वेन…विराजं सं (L. 11)

11. P B[2] विराट्संपन्नो, V विराट् for पुरा

14. V संपद्यते for संपत्स्यते ; B[2] M[3] संपत्तिः for संपन्न इत्यर्थः

18. PV Om. ब्रह्मसाम

मैत्रावरुणसाम्नः पञ्चदशस्तोमत्वम् इति विवेकः । विराजं संपद्येते इत्यत्र संपन्ने इत्यर्थः ॥४॥

सिद्धामेव संपत्तिं विशदयति—

**चत्वारिंशच्च चत्वारि च शतान्यन्यतरस्याति-रात्रस्य स्तोत्रीयास्तथान्यतरस्य ॥५॥**

इति । चत्वारिंशदधिकचतुःशतं स्तोत्रीयाः द्वयोरतिरात्रयो-रित्यर्थः ॥५॥

**द्वाचत्वारिंशच्च पुरा भवन्ति ॥६॥**

इति । चत्वारि च शतानीत्यनुवर्तते । पुरा प्राकृतद्वादशाहे द्विचत्वारिंशदधिकचतुःशतं स्तोत्रीयाः द्वयोरतिरात्रयोर्भवन्तीत्यर्थः ॥६॥

त्रिवृदग्निष्टोमस्य विराट्संपत्तये क्लृप्तिमाह—

**तत् प्रथमस्याह्नः पञ्चदशं तृतीयसवनं स्यात् । अत्र तद्विराजं संपद्यतेऽष्टशतं पुरा स्तोत्रीया भवन्ति । ता अद्य विंशतिशतं संपन्नाः ॥७॥**

इति । स्पष्टम् । अस्य क्लृप्तिः—आर्भवे स्वादिष्ठया मदिष्ठयेति गायत्रसंहिते तृचयोः । अया पवस्व पवते हर्यत (सा० ७७२-३) इति सफासारे एकर्चयोः । प्रसुन्वानाये-(सा० ७७४)ति

8. B²M³ द्वि° M¹ यद्वा for द्वा

9. M¹ चत्वारिंशत् for चत्वारि

10. M¹ Om. द्वि°

12. SB¹M¹My Om. तत्

गौरीवितमेकस्याम् । गौतमं तिसृषु । स्वासु कालेयमन्त्यम् । पञ्चदशमग्निष्टोमसाम । अन्यत् सर्वं प्रकृतिवत् । एवं प्रथमाहस्य विंशत्युत्तरशतस्तोत्रीयावत्त्वेन विराट्संपत्तिसिद्धिः ॥७॥

द्वितीयादिपञ्चानामह्नां विराट्संपत्तिसिद्धये क्लृप्तिमाह—

**अथ पराण्यहानि । सर्वाण्येव स्युः षोडशिमन्ति ॥८॥**

इति । स्पष्टम् ॥८॥

**आसितं त्वाष्ट्रीसामाविक्लृप्तं चतुर्थमहस्त्वाष्ट्रीसाम क्रौञ्चमेतानि स्युः षोडशिसामानि ॥९॥**

इति । द्वितीयेऽहनि आसिताद्यं तृतीये स्वारंत्वाष्ट्रीसाम । अविक्लृप्तम् अविकृतमित्यर्थः । पञ्चमे अभ्यासं त्वाष्ट्रीसाम । षष्ठे क्रौञ्चाद्यमित्येतानि प्रत्यहं षोडशिसामानि कार्याणीत्यर्थः ॥९॥

उक्तसामाधिकरणभूततृचानाह—

**आनुष्टुभेषु तृचेष्वैन्द्रेषु हरिवत्सु सामान्येषु ॥१०॥**

इति । स्पष्टम् । आनुष्टभैन्द्रहरिवत्त्वं षोडशिसामतृचानां सामान्यलक्षणमित्यर्थः ॥१०॥

उक्तविशेषलक्षणाभावेऽप्येकदेशवत्सु तृचेषु षोडशिसाम कार्यमित्याह—

**यदि सामान्या न विद्येरन्नप्यसामान्याः स्युः ॥११॥**

---

1. SM[1] कावम् for कालेयम्
2. M[1] Om. एवं
9. B[2]M[3] Om. स्वारं
10. B[2]M[1]M[3] after °क्लृप्तम् ins. इति
14. M[1] Om. °न्यलक्षणम् ··· सामान्य° (237, L, 1)
16. SB[1]M[1]My °विशिष्ट° for °विशेष°

इति। असामान्याः सामान्यभिन्नास्तृचाः। पूर्वोक्तलक्षणैकदेशवन्त इति यावत् ॥११॥

तत्रानियमे नियममाह—

**यद्यु हरिवत्यो न विद्येरन्नप्यहरिकास्वेव स्युः ॥१२॥**

इति। अनानुष्टुभेष्वनैन्द्रेषु षोडशिसाम्नां प्रायेणादर्शनात् अहरिवत्सु दर्शनाच्च ऐन्द्रत्वमानुष्टुभत्वं चावश्यकमित्याचार्यस्याशयः। वेदे क्षुद्रतन्त्रे यदिन्द्र चित्र (सा० ११७२-४) पुरांभिन्दु- (सा० १२५०-२)रिति तृचयोः षोडशिसामप्रकरणे वसिष्ठस्यप्रियमहावैश्वामित्रयोरहरिकयोरधीतत्वात् ते अपि सामनी कार्ये ॥१२॥

पञ्चस्वप्यहःसु षोडशिसाम्नां स्तोमानाह—

**तत्र सर्व एव पञ्चदशस्तोमाः स्युः षोडशिनः ॥१३॥**

इति। स्पष्टम् ॥१३॥

उक्ता क्लृप्तिर्धानंजय्यमतेनाह—

**एतद्ध स्माह खल्वस्य धानंजय्यो व्याचष्टे ॥१४॥**

इति ॥१४॥

अत्रैव मतान्तरमाह—

**अथ ह स्माह शाण्डिल्य इहैव खल्विमानि गौरीवितस्य लोके संप्रत्यवेतानि स्युरिति ॥१५॥**

---

9. $M^3$ अहनिकयोर् for अहरिकयोर्; $M^1$ आधिक्यात्, $M^3$ अधीनत्वात् for अधीतत्वात्

10. $M^1M^3$ Om. पञ्चस्वप्यहःसु···आह

11 S $M^1M^3B^{1-3}$ My ते for तत्र

14. $SM^1M^3B^2$ My हि for ह स्माह

18. P गौरीवित° V गौरीवितःस° for गौरीवितस्य

इति । इहैव विराट्संपन्नद्वादशाह एव । इमानि आसितादीनि चत्वारि सामानि आर्भवे गौरीवितस्य लोकं गौरीवितस्य स्थानं संप्रत्यवेतानि प्राप्तानीत्यर्थः ॥१५॥

आसितादीनामार्भवे निधानात् कानि षोडशिसामनीत्यपेक्षायामाह--

अथ गौरीवितमेवाहरहः षोडशिसाम स्यात् ॥१६॥

इति । इममिन्द्रेत्यादिपूर्वोक्ततृचेष्वेव द्वितीयादिष्वहःसु गौरीवितान्येव सामानि गेयानीत्यर्थः । अस्य क्लृप्तिः । द्वितीयस्याह्नः— इममिन्द्रे-(सा० ६४६-५१)त्यासिताद्यं पञ्चदशं षोडशिसाम । यद्वा । आर्भवे गौरीवितस्य स्थाने आसिताद्यम् । इममिन्द्रेति गौरीवितं षोडशिसाम । एवं द्वितीयस्याह्नः चत्वारिंशदधिकद्विशतस्तोत्रीयावत्त्वेन विराट्संपत्तिसिद्धिः । अन्यत् सर्वं प्रकृतिवत् ॥

तृतीयस्याह्नः—असावि सोम (सा० १०२८-३०) इति स्वारंत्वाष्ट्रीसाम । पञ्चदशं षोडशिसाम । यद्वा । आर्भवे गौरीवितस्य स्थाने स्वारंत्वाष्ट्रीसाम । असावि सोम इन्द्र त इति गौरीवितं षोडशिसाम । एवं तृतीयस्याह्नः सप्तत्यधिकद्विशतस्तोत्रीयावत्त्वेन विराट्संपत्तिसिद्धिः । अन्यत् सर्वं प्रकृतिवत् ॥

चतुर्थमहः प्रकृतिवदविकृतम् । पञ्चदशं षोडशिसाम । एवं चतुर्थस्याह्नः त्रिंशदधिकत्रिशतस्तोत्रीयावत्त्वेन विराट्संपत्तिसिद्धिः ॥

पञ्चमस्याह्नः—गायन्ति त्वे-(सा० १३४४-६)त्यभ्यासं त्वाष्ट्रीसाम । पञ्चदशं षोडशिसाम । यद्वा । असावि सोम (सा० ३४७) इति महावैश्वामित्रस्य स्थाने गायन्ति त्वेति उद्वंशीयमच्छावाकसाम । यदिन्द्र चित्रम (सा० ११७२-४) इति वसिष्ठस्य प्रियं

2. V गौरीवित for गौरीवितस्य ; B[2]M[3] Om. गौरीवितस्य स्थानं

10. S शत° for द्विशत°

1'. B[1]My द्वादशं for पञ्चदशं

षोडशिसाम । अथवा गौरीवितस्य स्थाने अभ्यासं त्वाष्ट्रीसाम। गायन्ति त्वेति गौरीवितं षोडशिसाम। एवं पञ्चमस्याह्नः विंशत्यधिकचतुःशतस्तोत्रीयावत्त्वेन विराट्संपत्तिसिद्धिः । अन्यत् सर्वं प्रकृतिवत् ॥

षष्ठस्याह्नः—एन्द्र याहि हरिभि-( सा० १८०-६ )रिति क्रौञ्चाद्यं पञ्चदशं षोडशिसाम । पुरांभिन्दु- (सा० १२५०-२)रिति महावैश्वामित्रं वा । यद्वा । आर्भवे गौरीवितस्य स्थाने क्रौञ्चाद्यम् । एन्द्र याहि हरिभिरिति गौरीवितं षोडशिसाम। एवं षष्ठस्याह्नः दशाधिकपञ्चदशस्तोत्रीयावत्त्वेन विराट्संपत्तिसिद्धिः। अवशिष्टानामह्नां सूत्रकारेणैव स्तोत्रीयसंख्या उक्ता। अन्यत् सर्वं प्रकृतिवत् । सूत्रकारपक्षे तु चतुर्थस्याह्नः इममिन्द्रे-( सा० ६४६- )ति वसिष्ठस्यप्रियस्थाने यदिन्द्र चित्रेति वसिष्ठस्य प्रियमच्छावाकसाम। अन्यत् सर्वं प्रकृतिवत् ॥

पञ्चमस्याह्नः—असावि सोम इति वैश्वामित्रस्य स्थाने पुरांभिन्दुरिति महावैश्वामित्रमच्छावाकसाम । गायन्ति त्वेति अभ्यासंत्वाष्ट्रीसाम । पञ्चदशं षोडशिसाम । यद्वा । आर्भवे गौरीवितस्य स्थाने अभ्यासं त्वाष्ट्रीसाम। पुरांभिन्दुरिति महावैश्वामित्रमच्छावाकसाम। गायन्ति त्वेति गौरीवितं पञ्चदशं षोडशिसाम। तदुक्तं निदाने—वैश्वामित्रस्तोत्रीये षोडशिना स्तूयमाने आष्टमिकमुक्थ्यस्तोत्रीयं प्रतिनिदध्यादसंचारायेति-(नि०सू० ४.३)ति विशेषः । अत्र धानंजय्यशाण्डिल्ययोः सत्रासाहीयषोडशिसामकल्पनया व्यवस्थितविकल्पो द्रष्टव्यः । सत्रे आसितादीन्येव षोडशिसामानि । अहीने तु गौरीवितान्येव षोडशिसामानीति

8. M[3] Om. क्रौञ्चाद्यम्···षोडशिसाम

10. B[1]MyM[1] कारैर् for कारेण

18. B[1] Om. पञ्च···अत्र (L. 21)

23. B[2]M[3] after °सामानि ins. इति ; M[2]B[3] Om. इति

वसिष्ठस्यप्रियमहावैश्वामित्रयोः षोडशिसामत्वे जामिदोषसंचारिदोषौ न स्तः । विधानात् । तदुक्तं सूत्रे—तन्न कुर्यादनादेशे (ला० श्रौ० ६. ६. ६) इति । स्याद्वोभयत्र विधेयः संचारस्तासां नानाह-त्वाच्चेति ॥१६॥

सप्तमाष्टमनवमदशमानामह्नां सिद्धामेव विराट्संपत्तिं विशदयति—

नित्यसंपन्नाश्छन्दोमा विराजम् । षष्टिश्च त्रीणि च शतानि सप्तमस्याह्नः स्तोत्रीयाः । षष्टिश्चैव षट् च शतान्यष्टमस्य । विंशतिश्च सप्त च शतानि नवमस्य । त्रिशतस्तोत्रीयं दशममहः संपद्यते सह नु सार्पराज्ञेन ॥१७॥

इति । स्पष्टम् । क्लृप्तिश्च ॥१७॥

अहःसमाप्त्यनन्तरं मानसस्तोत्रस्य कर्तव्यत्वात् तस्य स्तोत्रेषु परिगणनाभावात् अस्तोत्रमेवेत्याह—

तदु चेद्ब्रूयुरस्तोत्रं वा एतद्यत् सार्पराज्ञम् । मन-आख्यं हि मनसा स्तौति ॥१८॥

इति । गुणिनिष्ठगुणाभिधानजन्यज्ञानस्य स्तोत्रलक्षणत्वात् अस्य वाचाभिलपनाभावादस्तोत्रत्वमिति भावः ॥१८॥

---

10. $B^{1-2}MyM^{1}M^{3}$ Om. नु ; $B^{1-2}MyM^{1}M^{3}$ °राज्ञाम् S for °राज्ञेन

14. PV अनाख्यं for मन आख्यं

15. P मनयतीति, V मन एतानि for मनसा स्तौति

16. $B^{3}$ after इति । ins. स्पष्टम् ; $B^{3}$ S °धानस्य ज्ञान° for °धानजन्यज्ञानस्य

17. S अस्तोत्रम् $B^{1-2}MyM^{1}M^{3}$ अस्तोत्रीयत्वम् for अस्तोत्रत्वम्

तर्हि विराट्संपत्तिर्न सिद्ध्येदित्यत आह—

**आन्धीगवादुत्तरं पवस्व सोम मन्दयन्न् (सा० १८१०-१२) इत्येतासु द्विपदासु श्रेयः कल्पयेत् ॥**

इति । स्पष्टम् । क्लृप्तिश्च ॥१९॥

आर्भवस्य स्तोत्रीयात्रयनिधानेन त्रिणवस्तोमत्वेन दशमस्याह्नस्त्रिशतस्तोत्रीयात्वात् विराट्संपत्तिसिद्धिः । आर्षेयब्राह्मणे भद्रश्रेयसी द्वे (आ० ब्रा० २.१२.१) इति तैत्तिरीयश्रुतौ च भद्रं च मे श्रेयश्च मे ( तै० सं० ४. ७. ३. १) इत्येतयोः संयुक्तत्वात् अत्र विराट्संपन्नयोर्द्वयोरविकृतत्वात् प्राकृतद्वादशाहादयं द्वादशाहो भद्रश्रेयांश्चेत्याह—

**अत्रास्योभे भद्रश्रेयसी कृते भवतः । षडहान्ते ह भद्रम् । दशरात्रान्ते श्रेय इति ॥२०॥**

इति । स्पष्टम् ॥२०॥

अस्मिन्यज्ञे अधिकारिणमाह—

**एष विराट्संपन्नो द्वादशाहः । तेनैतेनान्नाद्यकामो यजेत । अन्नं विराडिति हि भवतीति ॥२१॥**

---

5. B[1-2]My M[1] आर्भवान्त्य for आर्भवस्य ; B[1] My M[1] °स्तोमत्वे for स्तोमत्वेन

6. B[1]My सिद्धा for सिद्धिः

9. B[1-2]SMyM[1] संपन्ने for संपन्नयोः

11. V दशमस्य, M[3] अत्रायोगे for अत्रास्योभे ; B[1] SMyM[3]M[1] Om. ह

16. M[1] Om. हि

इति । स्पष्टम् ॥

अयं द्वादशाहो व्यूढ एव कार्यः । न समूढः । तदुक्तं निदाने—यो द्वादशाहस्य द्वादशाहानीति चापि चान्यान् द्वादशाहविचारान् यथा विराट्संपन्नमनुरूपाग्निष्टोमसमानमिति व्यूढात् प्रतीयात्तथैषान् समूढात् प्रतीयात् सदृशा व्याघात् (उ० ग्र० सू० ३. २) इति ॥२१॥

इति तृतीये प्रपाठके द्वितीयः खण्डः ॥२॥

---

तृतीयः खण्डः

[ अग्निष्टोमसामा द्वादशाहः ]

**अथातोऽनुरूपाग्निष्टोमसामा द्वादशाहः स्यादित्याहुः ॥१॥**

इति । प्राकृतद्वादशाहे पृष्ठाग्निष्टोमसाम्नोः यज्ञशरीरभूतयोर्वैरूप्यात् साम्याभावात् अग्निष्टोमसाम्नः पृष्ठानुरूपत्वे साम्यसिद्धेः प्राकृतादयमभिरूपतर इति ब्रह्मवादिनामाशयः । यद्यज्ञेऽभिरूपं तत्समृद्धम् ( ऐ० ब्रा० १. १६ ) इति ऐतरेयकश्रुतेः । ननु सर्वप्रकृतिभूतज्योतिष्टोमे पृष्ठाग्निष्टोमसाम्नोर्वैरूप्यादसाम्यात् तद्विकृतिभूतद्वादशाहे तयोरानुरूप्यकथनमयुक्तमिति चेत् । मैवम् । तत्र पृष्ठे वाचारम्भात् । अग्निष्टोमसामनि वाचा समाप्तेश्च । वाग्रथन्तरं ( तां० ब्रा० ७. ६. ३ ) वाग्यज्ञायज्ञीय-(तां० ब्रा० ५. ३. ७)मिति श्रुत्या वाग्रूपेणोभयोः साम्यात् तत्राप्यभिरूपत्वसिद्धिः । तस्य बृहत्पृष्ठत्वे अत्र द्वितीयेऽहनि

---

2. B[1-2] अथ for अयं

3. M[1]M[3] द्वादशाहः for द्वादशाहानि

17. B[1]M[1]My युक्तम् for अयुक्तम्

20. B[2]M[3] °रूपत्वेन for °रूपेण

यदाभिरूप्यं कल्पकारेणोक्तं तत्त्रापि योज्यम् । न च द्वादशाहे दशस्वप्यहःसु यज्ञायज्ञीयकरणे वाचा समाप्तेर्विद्यमानत्वात् आनुरूप्यार्थं सामान्तरविधानं किमर्थमिति वाच्यम् । रथन्तरबृहद्भ्यां यज्ञायज्ञीयस्यानुरूप्येऽपि वैरूपादिभिर्वैरूप्यात् सर्वत्र नाभिरूपसिद्धिरिति सामान्तरविधानम् ॥१॥

पृष्ठाग्निष्टोमसाम्नोरानुरूप्यावश्यकत्वे प्रश्नपूर्वकं हेतुमाह—

**कस्य हेतोरिति । पृष्ठाग्निष्टोमसामनी खलु कल्पस्य समाधिं तं तमेव भवतः । यथा ह्येव पृष्ठेन कल्प आख्यात एवमप्यग्निष्टोमसाम्ना कल्प आख्यायते । ते चेत् समाधास्यतां यज्ञमेवमयं सर्वो दशरात्रः समाधिं गमिष्यतीति ॥२॥**

कल्पस्य यज्ञस्य समाधिं साम्यं तं तं यज्ञं यज्ञं प्रत्यहमित्यर्थः । अस्मद्ब्राह्मणात् यज्ञायज्ञीयस्य ब्रह्मरसत्वं यज्ञयोनित्वं यज्ञप्रतिष्ठापकत्वं सिद्धम् । कार्यकारणयोरभेदात् यज्ञशरीरनिर्वर्तकत्वं च । भवतः प्राप्नुतः । भुवः प्राप्त्यर्थकत्वे परस्मैपदं छान्दसम् । पृष्ठेन रथन्तरेण महता च कल्पः यज्ञः एकाहाहीनसत्रात्मकः रथन्तरसामा बृहत्सामेति यथाख्यातः प्रसिद्धः एवमपि तथेत्यर्थः । आत्मा पृष्ठानी-(तै०सं० ७.४.२.४)ति तैत्तिरीयश्रुतेः

---

4. B¹M¹My वैरूप्यादिभिर् for वैरूपादिभिर्

6. M³ आवश्यकत्वेन for आवश्यकत्वे

8. PV समाधित्सिततमे for समाधिं तं तमेव

11. PV समाधास्यामि । अत्र मे for समाधास्यतां यज्ञमेवम्

14. B²M³ Om. यज्ञयोनित्वं

15. B¹MyM¹ Om. सिद्धम्

17. B¹ बृहद्रथन्तरेण for रथन्तरेण

18. B¹My आत्मकत्वं for आत्मकः

पृष्ठानां यज्ञस्यात्मत्वं सिद्धम् । ब्राह्मण एव रसे यज्ञं प्रतिष्ठापयतीति यद्वान्ततः स्तुवन्ति योनौ यज्ञं प्रतिष्ठापयति (तां० ब्रा० ८.६.४) इत्यस्मद्ब्राह्मणात् यज्ञायज्ञीयस्य स्तोत्रे द्वाभ्यामभिमृशत्येतावान्वै यज्ञो यावानग्निष्टोम ( तै० सं० ५.४.१०.२ ) इति तैत्तिरीय-श्रुतेः अग्निष्टोमसाम्नोऽपि यज्ञशरीरनिर्वर्तकत्वात् पृष्ठवत् प्राधान्यं समाधास्यतां साम्यं प्राप्स्यतां चेत् । क्रियातिपत्तौ लृङ् । समाधिं गमिष्यति । साम्यं प्राप्स्यतीत्यर्थः । तथा चातुर्थकस्य वात्सप्रस्य समाधिं त्वित्यत्र धन्विना समाधिशब्दस्य साम्यार्थकत्वेन व्याख्यानात् । इन्द्राग्न्योर्यज्ञात्मकत्वेन पृष्ठाग्निष्टोमसाम्नोः तद्दैवत्य-त्वात् तयोरानुरूप्ये यज्ञस्य अभिरूपतरत्वं सिद्धमिति भावः ॥२॥

प्रथमेऽहनि पृष्ठाग्निष्टोमसाम्नोः आनुरूप्यार्थं साम विधत्ते—

**तत् प्रथमस्याह्नो देवो वो द्रविणोदा ( सा० १५१३–४ ) इत्येष वासिष्ठः प्रगाथो वासिष्ठं रथन्तरं तस्मिन्त्स्यात् । कण्वरथन्तरमग्निष्टोम-साम । तत् सदृशं भवति रथन्तरेण ॥३॥**

इति । स्पष्टम् । दाशतयीषु सप्तममण्डलस्य कृत्स्नस्य वासिष्ठ-त्वात् तत्र अभि त्वा शूरे-(सा० ६८०–१) ति प्रगाथस्य देवो वो द्रविणोदा इति प्रगाथस्य चाधीतत्वात् एतयोर्वासिष्ठत्वम् । तदुक्तं कात्यायनेन सर्वानुक्रमण्याम्—एना वो द्वादश प्रागाथम्

---

1. $B^2M^3$ ब्रह्मण for ब्राह्मण
3. $M^3B^2$ अस्मिन् ब्राह्मणोक्त for अस्मद्ब्राह्मणात्
6. $B^1$My Om. साम्यं
7. My चातुर्थीकस्य for चातुर्थकस्य
13. $B^2$ एव for एषः
19. $M^3B^2$ My द्वादशाह for द्वादश

(ऋ० अ० २.३४.१६) इति मण्डलादेरारभ्य वसिष्ठ ऋषिरनुवर्तते। रथन्तरप्रगाथस्य च कात्यायनेनैवोक्तं तत्रैव। मोषु सप्ताधिका प्रागाथं तृतीया द्विपदे-(ऋ० अ० २. ३५. ३२)ति ॥३॥

साम्यमेवोपपादयति—

**वासिष्ठं नु भवति यथा रथन्तरम्। प्रागाथिकं यथा रथन्तरम्। ककुबुत्तरासु यथा रथन्तरम्। प्रण्यस्तगीति यथा रथन्तरम्। बहुसदृशं रथन्तरेण भवतीति ॥४॥ तद्रथन्तरं पृष्ठं कण्वरथन्तरमग्निष्टोमसाम। अत्रैव ते समाधिमितः ॥५॥**

इति। प्रण्यस्तगीति अनुदात्तगीति। यथा आ दुग्धा इव धेनव ईशानमस्य जगतः। कण्वरथन्तरे च उद्वा सिञ्चध्वमुपवापृणध्वाऽ२३४ मैहो। तदुक्तं सूत्रे—प्रत्यक्षपरोक्षक्षिप्रचिरन्यस्तोदात्तकृष्टाकृष्टानां येन संस्वरेत् तत् कुर्यात् (ला० श्रौ० ६. १०. १६) इति। शिष्टं स्पष्टम् ॥४-५॥

प्रच्युतं यज्ञायज्ञीयमनुगृह्णाति—

**यज्ञायज्ञीयमत्रान्त्यं स्यात् कावस्यर्च्चु। कावमतः प्रच्यवेतेति ॥६॥**

स्पष्टम् ॥६॥

इति तृतीये प्रपाठके तृतीयः खण्डः ॥३॥

---

10. PV Om. एव ; $M^3B^2$ एते for एव ते ; My $M^1$ Om. ते

12. $B^1$ $M^1$ My Om. कण्वरथन्तरे च

## चतुर्थः खण्डः

धानंजय्यमतेन द्वितीयेऽहनि अग्निष्टोमसाम विधत्ते—

**द्वितीयस्याह्नः कण्वबृहदग्निष्टोमसाम । अस्यर्क्षु-आ त्वा सहस्रमाशतम् (सा० १३६१-३) इत्येषां द्वितीयम् । तत् पृष्ठं कण्वबृहदग्निष्टोमसाम । अत्रैव ते समाधिमितः ॥१॥**

इति । अस्यर्क्षु यज्ञायज्ञीयस्यर्क्षु तत् पृष्ठं बृहत्पृष्ठम् । शिष्टं स्पष्टम् ॥१॥

प्रच्युतं यज्ञायज्ञीयमनुगृह्णाति—

**यज्ञायज्ञीयमेवात्रान्त्यं स्याद्यामस्यर्च्चु याममतः प्रच्यवेतेति । एतद्ध स्म खल्वस्य धानंजय्यो ऽव्याचष्टे ॥२॥**

इति । गतम् ॥२॥

शाण्डिल्यमतमाह—

**अथ ह स्माह शाण्डिल्यो यज्ञायज्ञीयमेवात्राग्निष्टोमसाम स्यात् । एतद्वा सदृशं भवति बृहता ॥३॥**

---

3. PV यज्ञायज्ञीयस्यर्क्षु for अस्यर्क्षु

5. PV after तत् add बृहत्

10. S Om. अत्र ; B²M³ Om. अन्त्यं…एतद्ध

11. B¹SMyM¹ हि for ह स्म

14. B² M³ शाण्डिल्यस्य for शाण्डिल्य°

15. B¹ अतः for ह स्माह ; S Om. ह स्म

16. B² अन्त्यं for अग्निष्टोमसाम ; PV वाव for वा

इति । वा-शब्द एवकारार्थः । एतदेव यज्ञायज्ञीयं बृहता सदृशं भवतीत्यर्थः ॥३॥

सादृश्यमेवोपपादयति—

**भारद्वाजीषु न दृष्टं भवति यथा बृहत् । प्रागाथिकं यथा बृहत् । ककुबुत्तरासु यथा बृहत् । उदात्तगीति यथा बृहत् । बहुसदृशं बृहता भवतीति ॥४॥**

भरद्वाजेन दृष्टाः भारद्वाज्यः । भारद्वाजीषु ऋक्षु इति यावत् । उदात्तगीति यथा । सातौवाजा । यज्ञायज्ञीयस्य च । आ इरा । टिड्ढाणञ् (पा० सू० ४. १. १५) इत्यादिना ङीप् । तदुक्तमार्षेयब्राह्मणे—अग्नेर्वैश्वानरस्य यज्ञायज्ञीयम् । भारद्वाजस्य वा (आ० ब्रा० १. ५. १–२) इति । बृहतश्च भरद्वाजस्य बृहदिति । शिष्टं स्पष्टम् ॥४॥

इति तृतीये प्रपाठके चतुर्थः खण्डः ॥४॥

---

पञ्चमः खण्डः

तृतीयेऽहन्याभिरूप्यार्थमग्निष्टोमसाम विधत्ते—

**तृतीयस्याह्नोऽग्न आयाह्यग्निभिर् (सा० १५५२–३) इत्येष आङ्गिरसः प्रगाथ आङ्गिरसं**

---

4. SM[3]B[2] Om. नु

8. M[1] भार° for भर°; B[3]M[3] Om. यावत् । उदात्तगीति

12. M[3]B[2] Om. इति । बृहतश्च

वैरूपम्। तस्मिन्स्थाद् अन्तरिक्षमग्निष्टोमसाम। अन्तरिक्षस्य लोकेऽञ्जोवैरूपमनुकल्पयेत्। तत् सदृशं भवति वैरूपेण ॥१॥

इति। दाशतयीषु यद् द्याव इन्द्र ते—अग्न आयाह्यग्निभिर् इति प्रगाथयोः विरूपभर्गनामानौ आङ्गिरसावृषी इत्युक्तत्वात् अनयोराङ्गिरसत्वम्। तदुक्तं कात्यायनेन सर्वानुक्रमण्याम्—यो राजा पञ्चोना पुरुहन्मा बार्हतं त्रिप्रगाथादि (ऋ० अ० २. ४५. ७०) इति। विरूपस्यैव पुरुहन्मेति नामान्तरं व्याख्यातम्। आग्न आ-विंशतिर्भर्गप्रगाथः। आग्नेयं प्रागाथं तु। प्रगाथपुत्रो भर्ग आङ्गिरस इति व्याख्यातम् ॥१॥

सादृश्यमुपपादयति—

आङ्गिरसं नु भवति यथा वैरूपम्। प्रागाथिकं यथा वैरूपम्। सर्वबृहतीषु यथा वैरूपम्। पञ्चनिधनं यथा वैरूपम्। अध्यर्धेडं यथा वैरूपम्। निधनेनापि सदृशदेशीये भवतः। उभयत्र ह्येव शिशुप्रवादो भवतीति ॥२॥

सदृशदेशीये ईषत्सदृशे इत्यर्थः। ईषदसमाप्तौ कल्पब्देश्यदेशीयरः (पा० सू० ५.३.६७) इति देशीयर्-प्रत्ययः। वैरूपस्य ऋक्पददेवतापदनिधनैः पञ्चनिधनत्वम्। अन्तरिक्षस्य तु इहेति स्तोभैः निधनेन च पञ्चनिधनत्वमिति सुसादृश्यम्। शिशुप्रवाद इति अश्वा शिशुमतीति वैरूपे। सुष्टुभस्तोभोऽश्वाशिशुमक्रानित्यन्तरिक्षे द्रष्टव्यः ॥२॥

---

5. M[3] गर्गं, B[1] गर्भं for भर्गं

15. PV निधने for निधनेन

19. M[3]B[2] Om. तु

अन्तरिक्षस्याग्निष्टोमसामत्वे क्लृप्तिमाह—

तज्जामि स्यादरिष्टेनैडं ह्येवारिष्टमैडमन्तरिक्षम् । यज्ञायज्ञीयमत्रान्त्यं कृत्वानुष्टुभ्यरिष्टमनुकल्पयेत् । गौरीवितमेकस्याम् । अरिष्टमेकस्याम् । स्वारं त्वाष्ट्रीसामैकस्याम् । त्रिणिधनं त्वाष्ट्रीसाम त्रिष्विति कुर्यादिति ॥३॥

यद्यु वा अरिष्टं तृचस्थं चिकीर्षेद् अरण्येगेयमिदमपचितमित्यरिष्टत्रिणिधने अन्योन्यस्य स्थानं व्यतिहरेत् ॥४॥

इति । स्पष्टम् । साक्षाद् ब्रह्मप्रतिपादकत्वात् अरण्येगेयानां पूजितत्वम् ॥४॥

इति तृतीये प्रपाठके पञ्चमः खण्डः ॥५॥

---

## षष्ठः खण्डः

चतुर्थेऽहन्यानुरूप्यार्थमग्निष्टोमसाम विधत्ते—

चतुर्थस्याह्नो वसिष्ठस्य वैराजमग्निष्टोमसाम स्वासु-अग्निन्नर (सा० १३७३–५) इत्येतयोरुत्तरम् । तत् सदृशं भवति वैराजेन ॥१॥

---

7. M[1] विचिकीर्षेद् for चिकीर्षेद्

11. B[1] पूजकत्वम् for पूजितत्वम्

14. B[1] आनि°, M[3] आभि° for आनु°

15. SM[3]B[2]M[1] Om. वसिष्ठस्य; B[3] वासिष्ठ for वसिष्ठस्य

इति । दाशतयीषु पिबा सोमम् (सा० ९२७–९) अग्निं नर इत्येतयोर्वासिष्ठत्वादानुरूप्यम् । तदुक्तं कात्यायनेन सर्वानुक्रमण्याम्—पिब नव वैराजमृतेऽन्त्याम् (ऋ० अ० २. ३५. २२) इति । वसिष्ठ इत्यनुवर्तते । सप्तमं मण्डलं वसिष्ठोऽपश्यत् । अग्निं पञ्चाधिका विराजोऽष्टादशाद्या (ऋ० अ० २.३३.१) इति ॥१॥

साद‍ृश्यमुपपादयति—

वासिष्ठं नु भवति यथा वैराजम् । त्रैपदं यथा वैराजम् । ईनिधनं यथा वैराजम् । अनुतुन्नं यथा वैराजम् । पदान्तेऽस्यानुतुदति यथा वैराजम् । अथापि वैराजं पृष्ठम् । वसिष्ठस्य वैराजमग्निष्टोमसाम । कः साद‍ृश्यमतो भूयो ब्रूयादिति ॥२॥

इति । दतुत्वेत्यभ्यासस्यानुतुन्नमिति संज्ञा । अस्य वसिष्ठवैराजस्य पदान्ते पादान्ते अनुतुदत् । एयोरित्यस्याभ्यासः । महावैराजे दतुत्वेतिवत् । वसिष्ठवैराजमिति द्वयोरार्षेयब्राह्मणे कृतसंज्ञत्वात् भूयः अधिकम् । तदुक्तमार्षेयब्राह्मणे—इन्द्रस्य महावैराजम् । वसिष्ठस्य वा (आ० ब्रा० ६.१.६.१५) इति ।

---

9. $M^1MySB^1$ °तुदत् for °तुदति

10. $B^1$ वासिष्ठं, $SM^3MyM^1$ वसिष्ठ° for वसिष्ठस्य

11. $B^{1-2}$ $MySM^1M^3$ तत् for कः

13. $B^1$ दातुत्वेर्, $B^2M^3$ दातुत्वे, $M^1$ दातृत्वेर् for दातुत्वेति ; $M^1$ ends with संज्ञा । (MS. D. No. 15389)

14. $B^1$ ह्योरित्यस्य, $B^2$ णोरित्यस्य, $M^3$ णोनित्यस्य for ण्योरित्यस्य

16. $B^1My$ कृतम् for कृत° and Om. °संज्ञत्वात्···क्लृप्तिमाह (P. 251, L. 3)

इन्द्रस्य वैराजे द्वे । वसिष्ठस्य वा (आ० ब्रा० १. ८. ६–१०) इति च ॥२॥

क्लृप्तिमाह—

तज्जामि स्यात् वात्सप्रेणेनिधनं ह्येव वात्सप्रम् । ईनिधनं वसिष्ठस्य वैराजम् । यज्ञायज्ञीयमेवात्रान्त्यं कृत्वानुष्टुभि वात्सप्रमनुकल्पयेत् । नानदमेकस्याम् । वात्सप्रमेकस्याम् । श्यावाश्वमेकस्याम् । आन्धीगवं तिसृष्विति कुर्यादिति ॥३॥

यद्यु वै वात्सप्रं तृचस्थं चिकीर्षेन्निधनविभक्तिरपचितेति वात्सप्रान्धीगवे अन्योन्यस्य स्थानं व्यतिहरेत् ॥४॥

इति । स्पष्टम् । ईनिधनं चतुर्थस्येति श्रुत्या निधनविभक्तेः पूजितत्वम् ॥३-४॥

इति तृतीये प्रपाठके षष्ठः खण्डः ॥६॥

---

सप्तमः खण्डः

पञ्चमेऽहन्यानुरूप्यार्थमग्निष्टोमसाम विधत्ते—

पञ्चमस्याह्नोऽग्निं होतारं मन्ये दास्वन्तम् ( सा० १८१३–५ ) इत्येता आग्नेय्योऽति-

4. B³ M³ निधस्येनिधनं for निधनं ह्येव

5. B³ वासिष्ठं for वसिष्ठस्य

च्छन्दसस्तासु नित्यवत्सा अग्निष्टोमसाम । ताः सदृश्यो भवन्ति शक्वरीभिः ॥१॥

इति । स्पष्टम् ॥१॥

साम्यमुपपादयति—

अतिच्छन्दसो नु भवन्ति यथा शक्वर्यः । स्त्रीनाम्न्यो यथा शक्वर्यो गणनाम्न्यो यथा शक्वर्य ऊधस्वत्यो यथा शक्वर्यो वत्सवत्यो यथा शक्वर्योऽथकारवंत्यो यथा शक्वर्योऽध्यर्धेडा यथा शक्वर्यः सप्तपदा यथा शक्वर्योऽरण्येगेया यथा शक्वर्यो बहुसदृश्यः शक्वरीभिर्भवन्तीति ॥२॥

स्पष्टम् ॥२॥

अच्युतं यज्ञायज्ञीयमनुगृह्णाति—

तत्रानुष्टुभि यज्ञायज्ञीयमनुकल्पयेद् । गौरीवित-मेकस्याम् । ऋषभः शाक्वर एकस्याम् । पदनिधनं शुद्धाशुद्धीयम् एकस्याम् । पार्थं

2. B[2] सदृशो for सदृश्यो

6. B[1]M[3]S °नामानो for °नाम्न्यो in both places

7. B[2]M[3]S trans. ऊधस्वत्यो यथाशक्वर्यः after वत्सवत्यो यथा शक्वर्यः

8. M[3] Om. अथकारवत्यो यथा शक्वर्यः

9. SB[3]My trans. अध्यर्धेडा यथा शक्वर्यः after सप्तपदा यथा शक्वर्यः

10. B[3] °सदृशाः, SB[1-2] सदृशः for °सदृश्यः

15. SB[3] शाक्वरम् for शाक्वरः

चाष्टेडश्च पदस्तोभश्च तृचयोः । यज्ञायज्ञीयं तिसृष्विति कुर्यादिति ॥३॥

इति । स्पष्टम् ॥३॥

इति तृतीये प्रपाठके सप्तमः खण्डः ॥७॥

---

अष्टमः खण्डः

षष्ठेऽहन्यानुरूप्यार्थमग्निष्टोमसाम विधत्ते—

षष्ठस्याह्नो वारवन्तीयमग्निष्टोमसाम । स्वासु यच्छन्दस्यमाश्वा ओहो वेत्येतत् । तद् वारवन्तीयं पृष्ठम् । वारवन्तीयमग्निष्टोम-साम । कः सादृश्यमतो भूयो ब्रूयादिति ॥१॥

स्पष्टम् ॥१॥

प्रच्युतं यज्ञायज्ञीयमनुगृह्णाति—

तत्रानुष्टुभि यज्ञायज्ञीयमनुकल्पयेत् । गौरीवित-मेकस्याम् । मधुश्चुन्निधनमेकस्याम् । आकू-पारमेकस्याम् । यन्नवमेऽहनि क्रौञ्चे तृचयोः । यज्ञायज्ञीयं तिसृष्विति कुर्यादिति ॥२॥

इति । स्पष्टम् ॥२॥

इति तृतीये प्रपाठकेऽष्टमः खण्डः ॥८॥

---

8. B[3] Om. तद्

13. M[3] Om. तत्रा°...कुर्यादिति (L. 16) ।

## नवमः खण्डः

सप्तमेऽहन्यानुरूप्यार्थमग्निष्टोमसामातिदिशति—

**यथा द्वितीयस्यैवं सप्तमस्य ॥१॥**

इति । एवं तथेत्यर्थः ॥१॥

तत्र शाण्डिल्यमतानुसारेण क्लृप्तिमाह—

**यद्यु ह यज्ञायज्ञीयकारी स्याद् यथा ह शाण्डिल्यस्य वचोऽविक्लृप्तानुष्टुप् ॥२॥**

इति । अविक्लृप्ता अविकृतेत्यर्थः । शिष्टं स्पष्टम् ॥२॥

धानंजय्यमतमाह—

**यद्यु वै कण्वबृहत्कारी यथा धानंजय्यस्य ॥३॥**

इति । स्पष्टम् ॥३॥

तत्र विशेषमाह—

**विकल्पयेदनुष्टुभम् । गौरीवितमेकस्याम् । कार्तयशसमेकस्याम् । आत्रेयमेकस्याम् । यज्ञायज्ञीयं तिसृष्विति कुर्यादिति ॥४॥**

इति । विकल्पयेत् विकारयेदित्यर्थः । शिष्टं स्पष्टम् ॥४॥

अष्टमेऽहन्यानुरूप्यार्थमग्निष्टोमसामातिदिशति—

**यथा प्रथमस्यैवमष्टमस्य ॥५॥**

इति ॥५॥

---

6. B[2] °यज्ञीयस्य for °यज्ञीय°

9. My धानंजय्यस्य for धानंजय्य°

18. B[1-2]MyS after अष्टमस्य ins. अह्नः

तत्र विशेषमाह—

तत्रानुष्टुभि यज्ञायज्ञीयमनुकल्पयेत् । गौरीवितमेकस्याम् । ऐडं कौत्समेकस्याम् । स्वारंकौत्समेकस्याम् । पराणि तृचेषु । यज्ञायज्ञीयं तिसृष्विति कुर्यादिति ॥६॥

पराणि पदनिधनशुद्धाशुद्धीयक्रौञ्चरयिष्ठौदलानि । शिष्टं स्पष्टम् ॥६॥

नवमेऽहन्यानुरूप्यार्थमग्निष्टोमसामातिदिशति—

यथा द्वितीयस्यैवं नवमस्य ॥७॥

इति ॥७॥

शाण्डिल्यमतमाह—

यद्यु ह यज्ञायज्ञीयकारी स्याद् । यथा शाण्डिल्यस्य वचोऽविक्लृप्तानुष्टुप् ॥८॥

इति । गतम् ॥८॥

धानंजय्यमतमाह—

यद्यु वै कण्वबृहत्कारी यथा धानंजय्यस्य ॥९॥

इति । स्पष्टम् ॥९॥

तत्र विशेषमाह—

विकल्पयेदनुष्टुभम् । गौरीवितमेकस्याम् । निहव एकस्याम् । आकूपारमेकस्यां यत्स्वयोनि ।

2. B[3]M[3]SMy Om. तत्र

9. PV after एवम् ins. एव

20. M[3] Om. आकूपारमेकस्याम्

**पराणि तृचेषु । यज्ञायज्ञीयं तिसृष्विति कुर्यादिति ॥१०॥**

इति । पराणि यद्वाहिष्ठीयासितसादृश्याकूपाराणीत्यर्थः । शिष्टं स्पष्टम् ॥१०॥

प्राकृतद्वादशाहस्य दशमेऽहनि सिद्धमेवानुरूप्यमत्राह—

**अथाग्रत एवानुरूपाग्निष्टोमसाम दशममहर्भवति । एतस्माद्वा एतानि योनेरसृज्यन्तेति हि भवतीति ॥११॥**

एतस्माद् वामदेव्यात् एतानि पृष्ठानि असृज्यन्त जातानि । अत्र पृष्ठाग्निष्टोमसाम्नोः कार्यकारणभूतयोरभेदात् आनुरूप्यं सिद्धमिति भावः ॥११॥

उपसंहरति—

**एषोऽनुरूपाग्निष्टोमसामा द्वादशाहः ॥१२॥**

इति ॥१२॥

तत्राधिकारिणमाह—

**तेनैतेन यजेत यः कामयेतानुरूपा मा प्रजा जायेतेति । जायेतेति ॥१३॥**

---

6. PV अग्र एव for अग्रत एव

7. SM[3]MyB[1] afrer भवति ins. इति

13. V अथोऽ° for एषोऽ°

16. B[2]M[3] °रूप्या for °रूपा ; B[1-2]M[3]S क्रमात् for मा ; M[3]V प्रजायेत for प्रजा जायेत

द्विरुक्तिरध्यायसमाप्तिद्योतनार्था । अयं द्वादशाहो व्यूढ एव कार्यो न समूढः । तदुक्तं निदाने—यो द्वादशाहस्य दशाहानीति चापि चान्यान्द्वादशाहविचारान् यथा विराट्संपन्नमनुरूपाग्निष्टोमसामानमिति व्यूढात् प्रतीयात् तथेमान् समूढात् प्रतीयात् । सदृशव्याघात् ( उ० ग्र० सू० ३. २ ) इति । अस्य क्लृप्तिः— प्रायणीयोदयनीयातिरात्रौ प्रकृतिवत् । प्रथमस्याह्नः आर्भवे अभि प्रियाणी-(सा० ७००-२)ति यज्ञायज्ञीयमन्त्यम् । देवो वो द्रविणोदा (सा० १५१३) इति कण्वरथन्तरमग्निष्टोमसाम । अहीने तु आर्भवे गौरीवितस्य स्थाने औदलमिति विशेषः । अन्यत् सर्वं प्रकृतिवत् ॥

द्वितीयस्याह्नः—आर्भवे वृषा मतीना-(सा० ८२१-३)मिति यज्ञायज्ञीयमन्त्यम् । यज्ञायज्ञा व (सा० ७०३-४) इति कण्वबृहदग्निष्टोमसाम । शाण्डिल्यमतं प्राकृतद्वितीयाहवदविकृतम् । अहीने त्वार्भवे गौरीवितस्य स्थाने आसिताद्यमिति विशेषः । अन्यत् सर्वं प्रकृतिवत् ॥

तृतीयस्याह्नः—मध्यंदिने अन्तरिक्षस्य स्थाने अञ्जोवैरूपम् । आर्भवे सुतासोमे-(सा० ८७२-४)ति गौरीवितारिष्टस्वारंत्वाष्ट्रीसामानि सामतृचः । त्रिणिधनं त्वाष्ट्रीसाम तिसृषु । यद्वा । गौरीवितत्रिणिधनत्वाष्ट्रीसामस्वारंत्वाष्ट्रीसामानि सामतृचः । अरिष्टं तिसृषु । पवित्रं त (सा० ८७५-७) इति यज्ञायज्ञीयमन्त्यम् । अग्न आयाह्यग्निभि-(सा० १५५२-३)रिति अन्तरिक्षमग्निष्टोमसाम । अहीने त्वार्भवे गौरीवितस्य स्थाने अभ्यासंत्वाष्ट्रीसाम । अन्यत् सर्वं प्रकृतिवत् ॥

---

1. B[1] अथ for अयं

4. B[1] °सामसमानम् for सामानम्

5. B[1] Om. अस्य

चतुर्थस्याह्नः—आर्भवे पुरोजितीति (सा० ६९७-९) नानदवात्सप्रश्यावाश्वानि सामतृचः। आन्धीगवं तिसृषु। यद्वा। नानदान्धीगवश्यावाश्वानि सामतृचः। वात्सप्रं तिसृषु। सोमः पवत (सा० ६४०-२) इति यज्ञायज्ञीयमन्त्यम्। अग्निं नर (सा० १३७३-५) इति वसिष्ठस्य वैराजमग्निष्टोमसाम। अन्यत् सर्वं प्रकृतिवत्॥

पञ्चमस्याह्नः—आर्भवे पवस्व वाजसातय (सा० १०१६-८) इति गौरीवितऋषभशाक्वरपदनिधनशुद्धाशुद्धीयानि सामतृचः। पार्थेऽष्टेडपदस्तोभयज्ञायज्ञीयानि तृचेषु। अग्निं होतार-(सा० १८१३-५)मिति नित्यवत्सा अग्निष्टोमसाम। अहीने तु गौरीवितस्य स्थाने अभ्यासंत्वाष्ट्रीसाम। इति विशेषः। अन्यत् सर्वं प्रकृतिवत्॥

षष्ठस्याह्नः—आर्भवे सोमाः पवन्त (सा० ११०१-३) इति गौरीवितमधुश्चुन्निधनाकूपाराणि सामतृचः। वाङ्निधनंक्रौञ्चैडंक्रौञ्चयज्ञायज्ञीयानि तृचेषु। अश्वं न त्वे-(सा० १६३४-६)ति वारवन्तीयाद्यमग्निष्टोमसाम। अहीने तु आर्भवे सोमाः पवन्त इन्दवः इति स्वारंक्रौञ्चमधुश्चुन्निधनाकूपाराणि सामतृचः। वाङ्निधनंक्रौञ्चैडंक्रौञ्चयज्ञायज्ञीयानि तृचेष्विति विशेषः। अन्यत् सर्वं प्रकृतिवत्॥

सप्तमस्याह्नः—आर्भवे पुरोजितीति गौरीवितकार्तयशात्रेयानि सामतृचः। यज्ञायज्ञीयं तिसृषु। यज्ञायज्ञा व (सा० ७०३-५) इति कण्वबृहदग्निष्टोमसाम। अहीने तु गौरीवितस्य स्थाने स्वारंक्रौञ्चमिति विशेषः। अन्यत् सर्वं प्रकृतिवत्। शाण्डिल्यमतं प्राकृतसप्तमाहवदविकृतम्॥

अष्टमस्याह्नः—आर्भवे अभी वो वाजसातमम् (सा०
26 १२३८-४०) इति गौरीवितैडंकौत्सस्वारकौत्सानि सामतृचः।

14. B[1] Om. वाङ्निधनं···सामतृचः (L. 17)

पदनिधनंशुद्धाशुद्धीयक्रौञ्चाद्यरयिष्ठौदलयज्ञायज्ञीयानि तृचेषु । देवो वो द्रविणोदा (सा० १५१३-४) इति कण्वरथन्तरमग्निष्टोमसाम । अहीने तु आर्भवे गौरीवितस्य स्थाने श्यावाश्वमिति विशेषः । अन्यत् सर्वं प्रकृतिवत् ॥

नवमस्याह्नः—आर्भवे परि त्यं हर्यतं हरिम् (सा० १३२९-३१) इति गौरीवितनिहवाभ्यस्ताकूपाराणि सामतृचः । यद्वाहिष्ठीयासिताद्यसाध्राकूपारयज्ञायज्ञीयानि तृचेषु । यज्ञायज्ञा वो अग्नय इति कण्वबृहदग्निष्टोमसाम । अहीने तु आर्भवे गौरीवितस्य स्थाने आसितोत्तरमिति विशेषः । अन्यत् सर्वं प्रकृतिवत् । शाण्डिल्यमतं प्राकृतनवमाहवदविकृतम् ॥

दशममहः प्रकृतिवत् ॥९॥

शतक्रतुचतुर्वेदि श्रीनिवासाख्ययज्वना ।
क्षुद्रे तु पञ्चमोऽध्यायो व्याख्यायि प्रीतये हरेः ॥

इति श्रीमद्रामानुजसिद्धान्तस्थापनाचार्यशतक्रतुताताचार्यतनयशतक्रतुचतुर्वेदिश्रीनिवासविरचिते क्षुद्रकल्पसूत्रभाष्ये पञ्चमोऽध्यायः ॥५॥

इति तृतीये प्रपाठके नवमः खण्डः ॥९॥

इति आर्षेयक्षुद्रकल्पे पञ्चमोऽध्यायः समाप्तः ॥

---

14. M[3] इत्युत्तरकल्पव्याख्यायां for इति···॰भाष्ये

अथ

# षष्ठोऽध्यायः

## तृतीयः प्रपाठकः

### दशमः खण्डः

श्रीकल्पसूत्रोपग्रन्थकृतो गुरुवरान् भजे ।
श्रीगार्ग्यमशकद्राह्यायणकात्यायनाह्वयान् ॥

[ समूढप्रधानो द्वादशाहः प्रथमः ]

व्यूढसमूढोभयकामद्वादशाहयोः समूढप्रधानमाद्यं द्वादशाहमाह—

**अथातो व्यूढस्य रूपेण समूढः ॥१॥**

इति ॥१॥

तल्लक्षणमाह—

**व्यूढस्यैव सामान्ताः । समूढस्यैव छन्दांसि ॥२॥**

इति । स्पष्टम् ॥२॥

अनेन किं प्रयोजनमिति पृच्छति—

**तेन कोऽर्थ इति ॥३॥**

इति ॥३॥

उत्तरमाह—

**व्यूहेत् समूहेदिति खल्वयं दशरात्रो व्युदितो भवति । सामान्तैर्हास्य व्यूहकाममुपाप्स्यामि**

16. SB$^{1-2}$ M$^{3}$ हचुदितो°; S. व्युहितो for व्युदितो°

छन्दोभिः समूहकामम् । अत्रोभौ कामावुपाप्तौ भविष्यतो व्यूहकामश्च समूहकामश्चेति ॥४॥

इति । व्यूहकामः व्यूढद्वादशाहफलम्, समूहकामः समूढद्वाहदशाहफलमित्यर्थः । शिष्टं स्पष्टम् ॥४॥

क्लृप्तिमाह—

तस्यानिङ्गः प्रथमस्त्र्यहः ॥५॥

इति । अनिङ्गः अविकृत इत्यर्थः ॥५॥

व्यूढे वा समूढे वा प्रथमत्र्यहे विशेषाभावात् द्वितीयत्र्यहस्य क्लृप्तिमाह—

चतुर्थस्याह्नः श्यावाश्वशैखण्डिनेऽन्ते स्याताम् ॥६॥

इति । माध्यंदिनार्भवयोरिति शेषः ॥६॥

समूढस्य छन्दसि त्रिष्टुभि सोमः पवत इति तृचे आ जुहतेति जगत्यां योनावुत्पन्नं जागतं श्यावाश्वं साम विधत्ते—

तदेतच्छ्यावाश्वमाजुहोते-( सा० ६३ )ति बहिःस्वारम् । बहिःस्वारस्यस्थाने सत्रासाहीयस्य ॥७॥

इति । पुनानो अक्रमीदिति सत्रासाहीयस्येत्यर्थः ॥७॥

---

1 PV after अत्र ins. मे

6. V अनिङ्ग्यः for अनिङ्गः

10. M[3] SB[2] My अन्त्ये for अन्ते

13. B[2] त्रिष्टुभः for त्रिष्टुभि

आर्भवान्त्यं साम विधत्ते—

**श्रत्ते दधामी-( सा० ३७१ )ति शैखण्डिन-मीनिधनम् । ईनिधनस्य स्थाने वात्सप्रस्य ॥८॥**

इति । श्रत्ते दधामीति योनावधीतं शैखण्डिनं प्र त आश्विनी-( सा० ८८६-८ )रिति तृचे गेयमित्यर्थः । ईनिधनत्वादस्य वात्सप्रेण सामान्यात् व्यूढरूपत्वम् ॥८॥

**सम्पा च श्येनश्च पञ्चमस्य ॥९॥**

इति । माध्यंदिनार्भवान्त्ये सामनीत्यर्थः ॥९॥

इन्दुर्वाजी-( सा० १०१९ )ति तृचे माध्यंदिनान्त्यं विधत्ते—

**सैषा सम्पा पदानुस्वारा । पदानुस्वारस्य स्थाने शैशवस्य ॥१०॥**

इति । स्पष्टम् ॥१०॥

आर्भवान्त्यं साम विधत्ते—

**उभे यदिन्द्र रोदसी ( सा० ३७९ ) इति त्रिणिधनो ग्रामेगेयः श्येनस्त्रिणिधनस्य स्थाने दाशस्पत्यस्य ॥११॥**

इति । उभे यदिन्द्रेति योनावुत्पन्नः श्येनः गोवित्पवस्वे-(सा० ९५५-७)ति तृचे गेय इत्यर्थः ॥११॥

**वार्त्रंतुरं च वरुणसाम च षष्ठस्य ॥१२॥**

इति । माध्यंदिनार्भवान्त्ये सामनीत्यर्थः ॥१२॥

---

10. B³MyM³S. Om. सा

वृत्रतुरा इन्द्रेण दृष्टं वार्त्रतुरं साम विधत्ते—

**तदेतद् वार्त्रतुरं यजामहो वेति बहिःस्वारम् । बहिःस्वारस्य स्थाने इहवतो वामदेव्यस्य ॥१३॥**

इति । यजामहो वा ( ग्रा० ६. ११. ३३४. १ ) इति योनावुत्पन्नम् अया पवेति तृचे गेयमित्यर्थः ॥१३॥

आर्भवान्त्यं साम विधत्ते—

**घृतवतीति वरुणसामैकृतनिधनम् । एकृतनिधनस्य स्थाने श्नौष्टस्य ॥१४॥**

इति घृतवती-( सा० ३७८ )ति योनावुत्पन्नं ज्योतिर्यज्ञस्य ( सा० १०३१-३ ) तृचे गेयमित्यर्थः । वरुणसाम्नः—एऽ३ । इन्दुस्समुद्रमुर्वियाविभातीऽ२३४५ । श्नौष्टस्यएऽ३ । दीदिहीऽ१ । इत्यनयोश्च साम्यात् व्यूढरूपत्वम् । अत्र निधनसाम्यम् ए इत्यक्षरेणैव कृतम् । स तु कृत्स्ननिधनेन । अत एव एकृतनिधनम् इत्याचार्यैरुक्तम् । एकदेशविकृतमनन्यवद् भवती-(पा. म. १.१.५६)ति न्यायात् निधनविभक्तेरूपचितत्वात् ॥१४॥

प्रच्युतमिहवद्वामदेव्यमन्यत्र विधत्ते—

**तदिहवद्वामदेव्यमन्तात् प्रच्यवते यत् पुरा विभक्तिरिहवद् भवति । तन्माध्यंदिनीयायां गायत्र्यामनुगृह्णाति । क्रौञ्चमेकस्याम् । इहवद्वाम-**

1′. $B^2M^3$ स्वर° for निधन°

17. P अतो, $B^1$ इह for इहवद् ; P तत् for यत्

18. P विभक्तिभिर्निर्भवति, V विभक्तिभिर्भवति for विभक्तिरिहवद्भवति ; P °दिनायां for °दिनीयायां

19. $B^3M^3$ Om. इहवद्वामदेव्यमेकस्याम्

**देव्यमेकस्याम् । मार्गीयवमेकस्याम् । इति क्रौञ्चस्य लोकं विकल्पयति ॥१५॥**

इति । क्रौञ्चस्य स्थानं विकारयतीत्यर्थः । शिष्टं स्पष्टम् ॥१५॥

छन्दोमेषु आर्भवे समूढसामान्ता एव व्यूढस्य सामान्ता इत्याह—

**अथ यान्येव छन्दोमानां समूह्यमानानामार्भवान्त्यानि तान्यार्भवान्त्यानि । अपि हि छन्दोमा व्यूह्यमाना इडान्ता एव भवन्तीति ॥१६॥**

हि यस्मात् कारणात् व्यूह्यमानानामिडान्तत्वं तस्मात् तान्येवोभयत्रार्भवान्त्यानीति भावः ॥१६॥

मतभेदेन माध्यंदिनान्त्यानि सामानि विधत्ते—

**माध्यंदिनान्त्यानि त्वेषां वाङ्निधनानि जागतानि त्रिष्टुप्सु कल्पयेदिति ह स्माह शाण्डिल्यः ॥१७॥**

इति । जागतानि जगत्यां प्रोअयासी- (सा० ५५७-८)धर्ता दिवः-असाविसो ( सा० ५६२-६ ) इत्येतासु उत्पन्नानि सामानि त्रिष्टुप्सु प्रकाव्यम् (सा० ११२६-२७) शिशुम् (सा० ११७५-७) अक्रान् (सा० १३५३-५) इत्येतासु गायेदित्यर्थः ॥१७॥

तान्येवाह—

**प्रवद्भार्गवमुद्वद्भार्गवं सामराजमिति ॥१८॥**

इति ॥१८॥

---

15. M[3]B[2]S after जगत्यां add जगतीषु

मतान्तरमाह—

**सच्छन्दस्यानीति धानंजय्यः ॥१९॥**

इति । सच्छन्दस्यानि समानच्छन्दस्सु उत्पन्नानि प्रसेनानीः-प्र ते धारा-प्रहिन्वान (सा० ५३४-६) इति त्रिष्टुप्सु एवेति यावत् समानस्य ( सामानीति ? ) भावः । प्रकाव्यम्-शिशुम्-प्रक्रानिति एतासु त्रिष्टुप्सु गेयानीत्यर्थः ॥१९॥

तान्येवाह—

**कुत्सस्याधिरथीयं सप्तमस्याह्नोऽन्त्यं कुर्यात् । प्रसेनानीः शूरो अग्रे रथानाम् (सा० ५३३) इत्येतेषां प्रथमम् । वैश्वज्योतिषमष्टमस्य । प्र ते धारा मधुमतीरसृग्रन् ( सा० ५३४ ) इत्येतत् ॥२०॥**

इति ॥२०॥

नवमेऽहनि प्रकृतितः विकल्पे न प्राप्ते सामराजदीर्घतमसोऽर्कसामनी अपोह्य वैश्वज्योतिषतृतीयवात्सप्रे सामनी विधत्ते—

**वैश्वज्योतिषमेव नवमस्य-प्र हिन्वानो जनिता रोदस्यो-(सा० ५३६)रित्येतद् यदि पुरा सामराजकारी स्यात् । यद्यु वार्क्कारी वात्सप्राणां तृतीयं कुर्याद् । होई होई होई जगृह्म ते दक्षिणमिन्द्र हस्तम् इत्येतत् ॥२१॥**

---

5. M[3] स भावा S. स माव: for भाव:

इति । वैश्वज्योतिषकरणेन वाङ्निधनसादृश्याद् सामराजं वात्सप्रकरणेन ईनिधनसादृश्यात् दीर्घतमसोऽर्कश्च कृतो भवतीति भावः ॥२१॥

माध्यंदिनान्त्यात् प्रच्युतमर्कमन्यत्रानुगृह्णाति—

**नवमादह्नोऽर्कः प्रच्यवते तमनुष्टुभ्यनुगृह्णाति । तस्योक्तः कल्पः ॥२२॥**

इति । बृहद्रथन्तरपृष्ठसमूढद्वादशाहे व्याख्यातम् ॥२२॥

दशमस्य छान्दोमिकदशमाहक्लृप्तिमतिदिशति—

**समापद्यन्ते दशमेऽहनि सामानि यथा छन्दोमदशाहे तथा दशममहः ॥२३॥**

इति । स्पष्टम् ॥२३॥

अत्र विशेषमाह—

**तस्य तथा सतो गौश्रृङ्गं माध्यंदिनान्त्यं स्यात् । तरणिरित्सिषासती- ( सा० २३८ ) त्येतेषामुत्तमम् ॥२४॥**

इति । तथा सतः प्राकृतदशमाहवत् विद्यमानस्य । गौशृङ्गं गोश्रृङ्गेन ऋषिणा दृष्टम् ॥२४॥

बृहत्यामुत्पन्नस्य गौश्रृङ्गस्य कथं त्रैष्टुभत्वमित्याशङ्क्य छान्दसपाठे वाजं पुरन्ध्या इत्यक्षरस्याभ्यासेन गीत्या तत्संपादनमित्याह—

**तन्न बहिःस्वारं त्रैष्टुभमकृतं विद्यतेऽथेदं बहिः-**

---

7. $M^3B^2$ after इति add गतम्

13. $M^{2\text{-}3}$ $B^{1\text{-}2}$ S Om. तस्य

15. $B^1$ उत्तरम् for उत्तमम्

19. $M^3$ संपन्नम् for संपादनम्

20. $SB^1$ त्रैष्टुभकृतं for त्रैष्टुभमकृतं ; $B^2$ $M^3$ यथा for अथ

**स्वारमु ह भवति । त्रैष्टुभमु गीत्या संपद्यते ॥२५॥**

इति । स्पष्टम् ॥२५॥

आर्भवान्त्यं साम विधत्ते—

**वाजजिदेवात्रान्त्यं स्याद्यज्ञायज्ञीयनिधनं सौहविषं द्विपदास्विति ॥२६॥**

इति । वाजजिदेवेति न तु कावम् । तस्य स्वारत्वादिति भावः ॥२६॥

उपसंहरति—

**एष व्यूढस्य रूपेण समूढः । स एष व्यूढ एव भवतीति ॥२७॥**

इति । अस्य क्लृप्तिः—प्रायणीयोदयनीयावतिरात्रौ प्रकृतिवत् । सत्रभूतसमूढद्वादशाहवत् मध्यमानि दशाहानि कार्याणि ॥

चतुर्थस्याह्नः—सोमः पवते (सा० ६४३–५) इति श्यावाश्वं माध्यंदिनान्त्यम् । प्र त आश्विनो-(सा० ८८६-८)रिति शैखण्डिनमार्भवान्त्यमिति विशेषः ॥

पञ्चमस्याह्नः—इन्दुर्वाजी-(सा० १०१९-२१)ति सम्पा माध्यंदिनान्त्यम् । यो वित्पवस्वे-(सा० ६५५-७)ति श्येन आर्भवान्त्य इति विशेषः ॥

---

1. B$^1$S इह for उ ह ; B$^1$S My Om. उ before गीत्या
5. SMyM$^3$ अन्त्यः for अन्त्यं ; B$^{1-3}$ MyM$^3$ °यज्ञीयमग्निष्टोमसामेति for °यज्ञीयनिधनं सौहविषं द्विपदास्विति
10. B$^{1-3}$ MyM$^3$ Om. स एष व्यूढः

षष्ठस्याह्नः—इन्द्रायेन्द-(सा० १०७३-५)विति गायत्रेषोवृधीये तृचयोः। क्रौञ्चेहवद्वामदेव्यमार्गीयवानि सामतृचः। वाजदावर्य-रैवते तृचयोः। अया पवा पवस्वे-(सा० ११०४-६)ति वार्त्रतुरं माध्यंदिनान्त्यम्। ज्योतिर्यज्ञस्ये-(सा० १०३१-३)ति जागतं वरुण-सामार्भवान्त्यमिति विशेषः॥

सप्तमस्याह्नः—प्रकाव्य-(सा० १११६-८)मिति प्रवद्भार्गव-माध्यंदिनान्त्यम्॥

अष्टमस्याह्नः—शिशुं जज्ञान-(सा० ११७५-७)मिति उद्वद्भार्गवं माध्यंदिनान्त्यम्॥

नवमस्याह्नः—अक्रान्त्समुद्र (सा० १२५३-५) इति सामराजमेव माध्यंदिनान्त्यम्। दीर्घतमसोऽर्को वा। सामराजस्य माध्यंदिनान्त्यत्वपक्षे बृहत्यां पृष्ठस्य स्थाने पृष्ठदीर्घतमसोऽर्कमाण्डवानि सामतृचः। अहीने तु सामराजमेव माध्यंदिनान्त्यम्। न तु दीर्घतमसोऽर्कः। माध्यंदिने बृहत्यां पृष्ठस्य तृचकरणमेव। न तु दीर्घतमसोऽर्कमाण्डवयोः। असंचाराय। यद्वा। सप्तमस्याह्नः प्रकाव्य-(सा० १११६-८)मिति कुत्सस्याधिरथीयं माध्यंदिनान्त्यम्। अष्टमस्याह्नः शिशु-(सा० ११७५-७)मिति वैश्वज्योतिषं माध्यंदिनान्त्यम्। नवमस्याह्नः अक्रा-(सा० १२५३-५)निति वैश्वज्योतिषं माध्यंदिनान्त्यम्। तृतीयं वात्सप्रं वा। तृतीयवात्सप्रस्यान्त्यत्वपक्षे आर्भवे परि त्यं हर्यतं हरि-(सा० १३२९-३१)मिति गौरीवितदीर्घतमसोऽर्काभ्यस्ताकूपाराणि सामतृचः। निहवयद्वाहिष्ठीयासितसाध्राकूपाराणि तृचेषु। दशमस्याह्नः अजागृवि-(सा० १३५७-९)रिति गौश्रृङ्गं माध्यंदिनान्त्यम्। सूर्यस्ये-(सा० १३७०-२)ति वाजजिदार्भवान्त्यमिति विशेषः। अहीने तु पौण्डरीकव्यूढनवरात्रवत् गौरीवितानां स्थाने नानास्वराणि कल्प्यानि।

11. S अन्यं for एव

दशमेऽहनि पर्यूषु प्र धन्व-(सा० १३६४-६)ति श्यावाश्वान्धीगवे तृचयोरिति विशेषः ॥२७॥

इति तृतीये प्रपाठके दशमः खण्डः ॥१०॥

---

## एकादशः खण्डः

[ व्यूढप्रधानो द्वादशाहो द्वितीयः ]

द्वितीयमाह—

**अथातः समूढस्य रूपेण व्यूढः । समूढस्यैव सामान्ता व्यूढस्यैव छन्दांसि ॥१॥**

**तेन कोऽर्थ इति ॥२॥**

गतम् ॥२॥

**य एव पूर्वेणेति ॥३॥**

योऽर्थः पूर्वखण्डेनोपपादितः स एवोत्तरत्वेन द्रष्टव्य इत्यर्थः ॥३॥

**तस्याभिप्लव एव प्रथमस्त्र्यहः ॥४॥**

इति । गतम् ॥४॥

द्वितीयत्र्यहस्य मतभेदेन क्लृप्तिमाह—

**चतुर्थस्याह्नो यामं माध्यंदिनान्त्यं स्यादिति ह स्माह शाण्डिल्योऽग्ने मृड महाँ असी-(सा० २३) त्येतयोः पूर्वं वोत्तरं वेति ॥५॥**

इति । स्पष्टम् ॥५॥

---

7. B² अथ स्वरूपेण व्यूढस्य व, M³ अथातः समूढस्वरूपेण व्यूढस्य व for अथातः समूढस्य……समूढस्यैव

14. PV अनिङ्ग्यः for अभिप्लवः; SMy Om. एव

सर्वत्रार्भवान्त्यस्य सतः यामस्य माध्यंदिनान्त्यकल्पनमयुक्तमिति धानंजय्यः सामान्तरमाह—

**तृतीयसवनचराणि यामानि भवन्तीति ह स्माह धानंजय्यो गोराङ्गिरसस्य साम कुर्यात्। कस्य नूनं परीणसी- ( सा० ३४ ) त्येतयोरुत्तरम् ॥६॥**

इति । तृतीयसवनचराणि तृतीयसवनगतानि । शिष्टं स्पष्टम् ॥६॥

**शैशवमेव पञ्चमस्य ॥७॥**

इति । न तु सामान्तरम् । तस्यैव समूढत्वादिति भावः ॥७॥

**अयासोमीयं षष्ठस्या या सोम सुकृत्यये- (सा० ५०७)त्येतत् ॥८॥**

इति । अयासोमशब्दोऽस्मिन् अस्तीति अयासोमीयम् । मतौ छः सूक्तसाम्नोः (पा० सू० ५.२.५९) इति छप्रत्ययः ॥८॥

उत्तरत्र्यहस्य समूह्यमानस्य यानि माध्यंदिनान्त्यानि तान्येव सस्तोत्रीयाण्यार्भवान्त्यानीत्याह—

**अथ यान्येव पृष्ठस्य समूह्यमानस्य माध्यंदिनान्त्यानि तान्यत्रार्भवान्त्यानि परिहरेत् सस्तोत्रीयाणि ॥९॥**

इति । परिहरेत् कल्पयेदित्यर्थः ॥९॥

---

3. B[1] My सवनाचरणानि for सवनचराणि

7. My °सवनाचरणानि B[1] °सवनाचाराणि for सवनचराणि

18. PV आर्भवान् , S आर्भवानि for आर्भवान्त्यानि

छन्दोमेषु आर्भवे व्यूढसामान्ता एव समूढस्य सामान्ता इत्याह—

**अथ यान्येव छन्दोमानां व्यूह्यमानानामार्भवान्त्यानि तान्यर्भवान्त्यान्यपि हि छन्दोमाः समूह्यमाना इडान्ता एव भवन्तीति ॥१०॥**

इति। गतम् ॥१०॥

मतभेदेन माध्यंदिनान्त्यानि सामानि विधत्ते—

**माध्यंदिनान्त्यानि त्वेषां सर्वाणि त्रैष्टुभानि जगतीषु कल्पयेदिति ह स्माह शाण्डिल्यः ॥११॥**

इति। त्रैष्टुभानि त्रिष्टुप्सु प्रकाव्यशिशुमक्रानित्येतासु उत्पन्नानि सामानि जगतीषु प्रो अयासी-धर्ता दिव-असावि सोमेत्येतासु गायेदित्यर्थः ॥११॥

तान्येवाह—

**वाराहं वासिष्ठं वासिष्ठमिति ॥१२॥**

इति ॥१२॥

मतान्तरमाह—

**सच्छन्दस्यानीति धानंजय्यः ॥१३॥**

इति। सच्छन्दस्यानि जगत्योः इन्द्राय सोम-(सा० ५६१) अचोदसो न-(सा० ५५५)-इत्येतयोरुत्पन्नानि सामानि। प्रो अयासी-धर्ता दिव-असावि सोम-इत्येतासु गायेदित्यर्थः ॥१३॥

तान्येवाह—

**इन्द्रस्यापामीवं सप्तमस्याह्नोऽन्त्यं कुर्यादिन्द्राय**

**सोम सुषुतः परि स्रवे-( सा० ५६१ )त्येतयोः पूर्वम् ॥१४॥**

इति । इन्द्राय सोम सुषुतः परि स्रवेत्येतस्यामुत्पन्नम् इन्द्रस्यापामीवं प्रो अयासीदिति तृचे गेयमित्यर्थः ॥१४॥

**वायोरभिक्रन्दमष्टमस्यैतयोरेवोत्तरम् ॥१५॥**

इति । एतयोरिन्द्राय सोमेत्येतस्यामृचि उत्पन्नयोरिन्द्रस्यापामीवयोरभिक्रन्दयोरुत्तरम् । वायोरभिक्रन्द इत्यर्थः ॥१५॥

**सिमानां निषेधो नवमस्य । आचोवाहाइ इत्येतत् ॥१६॥**

इति । अचोदस (सा० ५५५) इत्यस्यामुत्पन्नः सिमानां निषेधः असावि सोम (सा० १३१६-८) इति तृचे गेय इत्यर्थः ॥१६॥

अच्युतमर्कमन्यत्र कल्पयति —

**नवमादह्नोऽर्कः प्रच्यवते तमनुष्टुभ्यनुगृह्णाति । तस्योक्तः कल्पः कर्मणि ॥१७॥**

इति । गतम् ॥१७॥

अस्य व्यूढत्वेऽपि समूढरूपत्वात् गौरीवितस्य प्रचिच्यावयिषयाह—

**न समापद्यन्ते दशमेऽहनि सामानि ॥१८॥**

इति । ब्राह्मणोक्तक्रमनिबद्धसामव्यूहो न संगच्छत इत्यर्थः ॥१८॥

---

14. PV बृहत्याम् for अनुष्टुभि

तर्हि के वा माध्यंदिनार्भवान्त्ये इत्यत आह—

**औशनकावे एवात्रान्त्ये स्याताम् ॥१९॥**

इति ॥१९॥

स्थानात् प्रच्याव्य गौरीवितमन्यत्र विधत्ते—

**तदतो गौरीवितमन्तात् प्रच्यवते । तद् बृहत्यामनुगृह्णाति । उत्सेध एकस्याम् । गौरीवितमेकस्याम् । रौरवमेकस्याम् । इत्युत्सेधस्य लोकं कल्पयति ॥२०॥**

इति। अत्र गौरीवितस्य माध्यंदिनपवमान एव अनुग्रहात् सामव्यूहः संगच्छत एवेति भावः। उत्सेधस्य लोकम् उत्सेधस्य स्थानं विकल्पयति विकारयतीत्यर्थः ॥२०॥

आर्भवान्त्यभूतकावस्य अग्निष्टोमसामभूतवामदेव्यस्य च स्वारत्वेन जामितादोषमाशङ्क्य विधानादेव स दोषो नास्तीत्याह—

**तदत्र स्वारं कावमन्त्यम् । स्वारं वामदेव्यमग्निष्टोमसाम । तदर्थसंनिपाने जामि विद्यात् । तन्न वारणमिव कुर्वीत । अर्थमत्र बलीयांसं जामितायै मन्येतेति ॥२१॥**

तन्न वारणं कुर्वीत। तत् जामि वारणं दूषणं न कुर्वीत। दूषणत्वेन जामि न मन्येतेत्यर्थः। जामितायै जामितायाः।

---

2. PV अन्ते for अन्त्ये

5. $M^3B^2$ ततो for तदतो°; $B^3$ अन्त्यात् for अन्तात्

16. PV °पतितं for °पाते

18. PV जामितायाः for जामितायै

पञ्चम्यर्थे चतुर्थी। जामितापेक्षया समूढस्य रूपेण व्यूढरूपार्थस्य बलवत्त्वादिति भावः ॥२१॥

उपसंहरति—

**एष समूढस्य रूपेण व्यूढः । स एष समूढ एव भवतीति ॥२२॥**

इति । अस्य क्लृप्तिः—प्रायणीयोदयनीयावतिरात्रौ प्रकृतिवत् । प्राकृतव्यूढद्वादशाहवत् मध्यमानि दशाहानि कार्याणि ॥

चतुर्थस्याह्नः—पुनानो अक्रमीदभी-(सा० ९२४-६)ति यामं माध्यंदिनान्त्यम् । पूर्वं वोत्तरं वा गोराङ्गिरसस्य साम वा । सोमः पवते इति जनित्रमार्भवान्त्यम् इति विशेषः ॥

पञ्चमस्याह्नः—इन्दुर्वाजी-( सा० १०१९)ति सम्पा आर्भवान्त्यमिति विशेषः ॥

षष्ठस्याह्नः—एतमु त्य-( सा० १२७३ )मिति अयासोमीयं माध्यंदिनान्त्यम् । अया पवा पवस्वे- (सा० ११०४-६)ति इहवद्वासिष्ठमार्भवान्त्यमिति विशेषः ॥

सप्तमस्याह्नः—प्रो अयासोदिति वाराहं माध्यंदिनान्त्यमिति विशेषः ॥

अष्टमस्याह्नः—उहुवाइ धर्त्तेति वासिष्ठं माध्यंदिनान्त्यमिति विशेषः ॥

नवमस्याह्नः—हाइ उहुवाइ असावि सोम इति वासिष्ठमार्भवान्त्यम् । यद्वा । सप्तमस्याह्नः प्रो अयासोदिति इन्द्रस्यापामीवं माध्यंदिनान्त्यम् । अष्टमस्याह्नः—धर्ता दिव (सा०

1. M[3] समूढस्वरूपेण for समूढस्य रूपेण

4. M[3] स्वरूपेण for रूपेण

10. S after जनित्रम् ins. अन्त्यम्

१२२८-३० ) इति वायोरभिक्रन्दो माध्यंदिनान्त्यम् । नवमस्याह्नः असावि सोम (सा० १०२८-३०) इति सिमानां निषेधो माध्यंदिनान्त्यम् । आर्भवे परि त्यं हर्यतं हरि-(सा. १३२६-३१)मिति गौरीवितदीर्घतमसोऽर्काभ्यस्ताकूपाराणि सामतृचः । निहवयद्वाहिष्ठीयासिताद्य साध्राकूपाराणि तृचेषु इति विशेषः ॥

दशमस्याह्नः—बृहत्यां पुनानः सोमे-( सा० ६७५-६ )ति उत्सेधगौरीवितरौरवाणि सामतृचः । यज्ञायज्ञीयनिषेधौ तृचयोः । आजाग्रवि-(सा० १३५७-६)रिति औशनं माध्यंदिनान्त्यम् । सूर्यवतीषु कावमार्भवान्त्यम् । अग्नि नर (सा० १३७३-५) इति विराट्सु वामदेव्यमग्निष्टोमसाम इति विशेषः । अहीने तु पौण्डरीकव्यूढनवरात्रवत् गौरीवितानां स्थाने नानास्वराणि कल्प्यानि । न दशमेऽहनि । सामव्यूहत्वादिति विशेषः ॥२२॥

इति तृतीये प्रपाठके एकादशः खण्डः ॥११॥

---

द्वादशः खण्डः

[ व्यूढधर्मरहितसमूढद्वादशाहस्तृतीयः ]

व्यूढधर्मरहितसमूढद्वादशाहमाह—

**अथातः समूढस्य रूपेण समूढः ॥१॥**

इति । तृतीयाहस्य छन्दोमानां चेडान्तत्वमपोह्य स्वारान्तत्वकल्पनेन सर्वात्मना व्यूढधर्माभावात् समूढरूपेणैव समूढत्वमिति भावः ॥१॥

---

2. B[1] आर्भवान्त्यम् for माध्यंदिनान्त्यम्

3. B[1] Om. गौरीवित……सोमेति (L. 6)

8. M[3] after औशनं ins. आन्त्यम्

18. B[2]M[3] तृतीयस्य for तृतीयाहस्य

19. M[3] °कल्पेन न for °कल्पनेन

**समूढस्यैव सामान्ताः । समूढस्यैव छन्दांसि ॥२॥**

**तेन कोऽर्थ इति ॥३॥**

इति । स्पष्टम् ॥३॥

पूर्वोक्तदशरात्रापेक्षया अयमतिशायित इत्याह—

**उभौ खल्विमौ पूर्वौ दशरात्रावयमपिपतत् ॥४॥**

इति । अपिपतत् इति । पातयति स्म । तिरस्करोति स्मेति यावत् ॥४॥

तदेवोपपादयति—

**सामान्तानेवान्यतरस्य व्यूहो(हे ?)च्छन्दांस्यन्यतरस्य । अथोभयमेव समूढं भविष्यति । सामान्ताश्चैव छन्दांसि च ॥५॥**

इति । पूर्वक्तयोरेकस्य सामान्तमात्रेण समूढत्वम् । अपरस्य छन्दोमात्रेण समूढत्वम् । अस्य तु उभाभ्यां समूढत्वमित्याधिक्यमिति भावः ॥५॥

अत एवाह—

**एष वै कुशलसमूढो यदुभयतस्तेन कल्पसमूढ इति ॥६॥**

---

5. B³M³ पूर्वं for पूर्वौ ; V व्यावीवनत्, P व्यावीवतत्, B³ अयमपीपतत् M³B² अयमपिवदति for अयमपिपतत्

6. B¹ Om अपिपतत् इति ; B²M³ अपीपतत् for अपिपतत्

9. M³ समानि SB¹⁻³ MyM³ सामान्तानि for सामान्तान् ; P व्योहीच्° for व्यूहीच् ; B¹⁻² M³MyS. Om. व्यूहीच्

12. B²M³ परस्य for अपरस्य

16. B¹OM एष वै ; P कुशलमूढो यः for कुशलसमूढो यद् ; B¹SM³B²My ins इति before यद् ; PV Om. तेन कल्प° ; V कुशलसमूहो for कुशलसमूढो

इति । यत् यस्मात् उभयतः छन्दःसामान्ताभ्यामस्य समूढत्वं कल्पितं तेन कारणेन कल्पसमूढ इत्यपि नामान्तरम् ॥६॥

**तँ ह स्मैतं धानंजय्यो व्याचष्टे । ज्योतिष्टोमस्य समूहेन समूढ इति ॥७॥**

क्लृप्तिमाह—

**तस्यानिङ्गः प्रथमो द्व्यहः ॥८॥**

इति । गतम् ॥८॥

तृतीयेऽह्नि विशेषमाह—

**तृतीयादह्न उद्धृत्य त्रिणिधनं त्वाष्ट्रीसामैडं त्वाष्ट्रीसाम तस्य स्थानेऽनुकल्पयेत् ॥९॥**

इति । तृतीयेऽह्नि आर्भवे सुतासो मधुमत्तमा इति तृचे त्रिणिधनत्वाष्ट्रीसामापोह्य ऐडं त्वाष्ट्रीसाम निदध्यादित्यर्थः ॥९॥

**उद्धृत्यारिष्टँ स्वारँ सामराजं तस्य स्थानेऽनुकल्पयेत् ॥१०॥**

समूढषडहक्लृप्तिमुत्तरत्र्यहेऽतिदिशति—

**उक्तः पृष्ठ्यस्य समूढः ॥११॥**

इति । समूढषडहे उत्तरत्र्यहे यः कल्प उक्तः स एवात्र द्रष्टव्यः ॥११॥

3. B[1]SM[3]B[2] My Om. तंहस्मैतं······समूढ इति

6. P अनिङ्ग्यः for अनिङ्गः

9. M[3]B[2] तृतीयस्य for तृतीयात्

13. M[3]B[1-3]MyS Om. उद्धृत्य···°कल्पयेत्

छन्दोमानां क्लृप्तिमाह—

**अथ यान्येव छन्दोमानां समूह्यमानानां माध्यदिनान्त्यानि तानीमान्यार्भवान्त्यानि ॥१२॥**

इति । समूह्यमानानां समूढरूपद्वादशाहसंबन्धिनां छन्दोमानां यानि माध्यंदिनान्त्यानि तानि एवार्भवान्त्यानि कल्प्यानीत्यर्थः ॥१२॥

तानि कानि सामानीत्यत आह—

**तेषां स्वाराणि जागतानि । तान्येवेन्द्रस्यापामीववायोरभिक्रन्दसिमानांनिषेधा इति ॥१३॥**

इति । जागतानि जगतीषु प्रो अयासी-धर्ता-असावि सोम इत्येतासूत्पन्नानि सामानि ॥१३॥

सप्तमेऽह्नि विशेषमाह—

**सप्तमादह्न उद्धृत्य सौहविषं जराबोधीयं तस्य स्थानेऽनुकल्पयेत् ॥१४॥**

इति ॥१४॥

**छन्दोम इडामनुजिघृक्षन् मा स्वारं निरिड आर्भवोऽभूदिति ॥१५॥**

---

1. M[3] Om. छन्दोमानां···संबन्धिनां (L. 4)

3. P B[2–3] माध्यंदिनान्त्यानि for इमानि ; PV trans. आर्भवान्त्यानि to the next sutra

8. PV त्वेषां for तेषां ; PV एतानि for तानि ; B[2]M[3]My Om. तानि ; PV °मीवं···°कन्दः···°निषेवः for °मीव···कन्द···निषेधाः

13. P सप्तमस्य for सप्तमात्

16. PV छन्दोमेडाम् for छन्दोम इडाम् ; PV मामे रूपं for मा स्वारं

इति। छन्दोम इडामनुजिघृक्षन् अनुग्रहीतुमिच्छन् निरिड आर्भवो मा भूदिति प्रव्राज्येति तृचे स्वारं सौहविषमुद्धृत्य अपोह्य तस्मिन्नेव तृचे ऐडं जराबोधीयं निदध्यादित्यर्थः ॥१५॥

नवमेऽह्नि प्रच्युतमर्कमन्यत्र कल्पयति—

**नवमादह्नोऽर्कः प्रच्यवते। तमनुष्टुभ्यनुगृह्णाति। तस्योक्तः कल्पः ॥१६॥**

इति। गतम् ॥१६॥

छान्दोमिकदशमाहःक्लृप्तिमत्रातिदिशति—

**समापद्यन्ते दशमेऽहनि सामानि। यथा छन्दोमदशाहे तथा दशममहरिति ॥१७॥**

इति। गतम् ॥१७॥

उपसंहरति—

**एष समूढस्य रूपेण समूढः स एष समूढ एव भवतीति ॥१८॥**

इति। अस्य क्लृप्तिः। प्रायणीयोदयनीयावतिरात्रौ प्रकृतिवत्। समूढद्वादशाहवन्मध्यमानि दशाहानि कार्याणि। तृतीयस्याह्नः आभंवे सुतासोमेति गौरीवितत्वाष्ट्रीसामनी। पवित्रं त (सा० ८७५-७) इति सामराजमार्भवान्त्यमिति विशेषः॥

सप्तमस्याह्नः प्रव्राज्ये-(सा० ११६०-२)ति जराबोधीयम्। प्रो अयासीदिति इन्द्रस्यापामीवमार्भवान्त्यमिति विशेषः। अष्टमस्याह्नः धर्ता दिव (सा० १२२८-३०) इति वायोरभिक्रन्द आर्भवान्त्य इति विशेषः॥

नवमस्याह्नः—आर्भवे परि त्यं हर्यतं हरिमिति गौरीवितदीर्घतमसोऽर्काभ्यस्ताकूपाराणि सामतृचः। निहवयद्वाहिष्ठीयासितावसाभ्रा-

कूपाराणि तृचेषु। असावि सोमेति सिमानां निषेध आर्भवान्त्यमिति विशेषः। अहीने तु पौण्डरीकव्यूढनवरात्रवद् गौरीवितानां स्थाने नानास्वराणि कल्प्यानि ॥१८॥

[ समूढधर्मरहितो व्यूढद्वादशाहश्चतुर्थः ]

समूढधर्मरहितव्यूढद्वादशाहमाह—

**अथातो व्यूढरूपेण व्यूढः ॥१९॥**

इति। पूर्ववद्व्याख्येयम् ॥१९॥

**व्यूढस्यैव सामान्ता व्यूढस्यैव छन्दांसि। सोऽयमेव द्वादशाहो यमिममधीमहे ॥२०॥**

इति। ब्राह्मणोक्तव्यूढद्वादशाहे सर्वात्मना समूढधर्माभावात् केवलं व्यूढत्वमितिभावः। क्लृप्तिः स्पष्टा। अहीने तु पौण्डरीकव्यूढनवरात्रवत् गौरीवितानां स्थाने नानास्वराणि कल्प्यानि। दशमेऽहनि गौरीवितमेव माध्यंदिनान्त्यं कार्यम् ॥२०॥

इति तृतीये प्रपाठके द्वादशः खण्डः ॥१२॥

---

त्रयोदशः खण्डः

[ संक्रमद्वादशाहः ]

अहर्व्यत्यासेन प्राकृतद्वादशाहस्यैव नामान्तरमाह—

**अथातः संक्रमद्वादशाह इत्याचक्षते ॥१॥**

इति। अह्नोऽहःसमानच्छन्दस्कत्वेन संक्रामतीति संक्रमः ॥१॥

नामान्तरमाह—

**अपि च समात् समतरः इति ॥२॥**

इति। समात् प्राकृतद्वादशाहात् ॥२॥

---

9. M[3]B[1] [3] SMy वयम् for यमिमम्

अह्नां क्लृप्तिमाह—

**यानि प्रथमानि त्र्यहाणामहानि स प्रथमस्त्र्यहः। यानि द्वितीयानि स द्वितीयः। यानि तृतीयानि स तृतीयः। दशममेव दशममहः ॥३॥**

इति। स्पष्टम् ॥३॥

प्राकृतद्वादशाहस्य त्र्यहोपक्रमत्वात् अयं किमहोपक्रम इति पृच्छति—

**किमुपज्ञोऽयं भवतीति ॥४॥**

इति। उपज्ञा उपक्रमः। किमहः आरम्भः यस्य सः किमुपज्ञः। उपज्ञा ज्ञानमाद्यं स्यात् ज्ञात्वारम्भ उपक्रमः (अ० को० २.७.१३) इत्यमरः ॥४॥

प्रश्नस्योत्तरं विवक्षुः प्रथमस्य स्वरूपं निरूपयति—

**त्र्यहशः खल्वयं पुरा दशरात्रः समतां लभते। स यथा मेऽहरहश्च समतां लप्स्यते संपरेतश्च तथा करवाणीति ॥५॥**

इति। संपरेतः अहःसमुदायत इत्यर्थः ॥५॥

किमुपज्ञोऽयमिति प्रश्नस्योत्तरमाह—

**यदवसानः पूर्वस्त्र्यहस्तत्प्रभृतिरुत्तरोऽथेह यदवसानं पूर्वमहस्तत्प्रभृत्युत्तरं भविष्यतीति ॥६॥** 19

---

2. PV trans. प्रथमानि after त्र्यहाणाम्

14. PV लभते त्र्यहशः for लप्स्यते संपरेतः

इति । यदवसानः यच्छन्दोऽवसानः तत्प्रभृतिः तच्छन्द-आरम्भकः । प्राकृतद्वादशाहे तृतीयेऽहनि पवित्रं त (सा० ८७५-६) इति जगत्या आर्भवान्त्यकरणात् चतुर्थेऽहनि प्र त आश्विनी-(सा० ८८६-८)रिति जगत्या बहिष्पवमानारम्भात् एकच्छन्दोऽवसानारम्भकत्वम् । अत्र तु प्रथमेऽहनि अभि प्रियाणी-(सा० ७००-२)ति जगत्यार्भवान्त्यकरणात् द्वितीयेऽहनि प्र त आश्विनीरिति जगत्यां बहिष्पवमानारम्भात् प्रथमद्वितीय एव षष्ठ-सप्तमयोस्त्रिष्टुबवसानारम्भकत्वम् । एवं नवमदशमयोः गायत्र्यवसाना-रम्भकत्वम् । एवं त्र्यहमात्रेण समानच्छन्दोऽवसानारम्भकत्वम् । अत्र तु प्रथमेऽहनि अभि प्रियाणीति जगत्यार्भवान्त्यकरणात् द्वितीयेऽहनि प्र त आश्विनीरिति जगत्या बहिष्पवमानारम्भात् प्रथमद्वितीययोरह्नोः समानच्छन्दोऽवसानारम्भकत्वम् । एवं द्वितीयतृतीययोः त्रिष्टुब-वसानारम्भकत्वम् । तृतीयचतुर्थयोः गायत्र्यवसानारम्भकत्वम् । चतुर्थपञ्चमयोः जगत्यवसानारम्भकत्वम् । इत्यादि प्रत्यहं समान-च्छन्दोऽवसानारम्भकत्वं योज्यम् । एवं प्रत्यहम् एकच्छन्दोऽवसाना-रम्भकत्वात् अस्याहरुपक्रमत्वमिति भावः ॥६॥

संक्रमशब्दार्थमाह—

**तं यत् संक्रमद्वादशाह इत्याचक्षते । यन्नून-मेतत् समाक्रान्तानीवाहानि भवन्ति ॥७॥**

इति । स्पष्टम् ॥७॥

समतरत्वमुपपादयति—

**यदु समात् समतर इति । पूर्वः खल्वयं दशरात्रः समः । तस्मादप्ययं समतर एव भवतीति ॥८॥**

---

3. $B^2M^3$ °वान्तकरणात् for °वान्त्यकरणात्

5. $B^1$ Om. एक°··· छन्दोऽवसानारम्भकत्वम् (L. 9)

23. $SB^{1-2}M^3$My Om. तस्मादपि and after अयं ins. समात्

इति । स्थूलसूक्ष्मरूपेण अनयोः समत्वं समतरत्वं च । प्राकृते त्र्यहशः । अत्र तु प्रत्यहमिति विवेकः । अस्य क्लृप्तिः—अतिरात्रः । त्रिवृदग्निष्टोमः एकविंश उक्थ्यः सषोडशिकः । चतुर्विंश उक्थ्यः । पञ्चदश उक्थ्यः । त्रिणव उक्थ्यः । चतुश्चत्वारिंश उक्थ्यः । सप्तदश उक्थ्यः । त्रयस्त्रिंश उक्थ्यः । अष्टाचत्वारिंश उक्थ्यः । चतुर्विंशमग्निष्टोमसंस्थमविवाक्यं समानसम् । उदयनीयोऽतिरात्र इति । एतान्यहानि प्राकृतद्वादशाहवत्कार्याणि । अत्र त्रिवृदादीनां दशानामह्नां रथन्तरवैराजबृहत्शाक्वररथन्तरवैरूपवारवन्तीयबृहत्काव्ररथन्तराणि क्रमेण पृष्ठानि । पृष्ठानां व्यवधानेऽपि एकस्मिन् यज्ञे समावेशात् रथघोषादिधर्माः पृष्ठ्यषडहे कार्याः । न तु छन्दोमेषु । अयं संक्रमद्वादशाहो व्यूह एव छन्दोव्यूहत्वात् न समूढः । तत्र सर्वस्यापि दशरात्रस्याहरवसानारम्भयोः एकच्छन्दस्त्वाभावादिति सर्वं समञ्जसम् ॥८॥

इति तृतीये प्रपाठके त्रयोदशः खण्डः ॥१३॥

---

## चतुर्दशः खण्डः

ब्रह्मसामभेदेन भिन्नांश्चतुरो द्वादशाहानाह—

**अथापरे चत्वारो भवन्ति ॥१॥**

इति ॥१॥

---

3. S before सषोडशिकः add त्रिणव उक्थ्यः ; M³ चतुर्विंश इत्यर्थः for चतुर्विंश उक्थ्यः

4. B¹ My after चतुश्चत्वारिंश उक्थ्यः add:— पञ्चदश उक्थ्यः । त्रिणव उक्थ्यः । चतुश्चत्वारिंश उक्थ्यः

6. B¹ My trans. अग्निष्टोमसंस्थम् after अविवाक्यं

10. B¹ My समावेशनात् for समावेशात् ; S. रथन्तरघोषादि°, M³B³ अथ षोडशादि° for रथघोषादि°

13. S °च्छन्दस्त्वात् for °च्छन्दस्त्वाभावात्

चतुर्णां संज्ञामाह—

अग्निष्टुदिन्द्रस्तुत् सूर्यस्तुद्वैश्वदेवस्तुदिति ॥२॥

इति ॥२॥

[ अग्निष्टुद् द्वादशाहः ]

तत्र प्रथमस्य क्लृप्तिमाह—

आग्नेयेषु प्रगाथेषु छन्दोमानां ब्रह्मसामानि कल्पयेत् बार्हतेषु । सोऽग्निष्टुत् ॥३॥

इति । आग्नेयेषु अदर्शि गातु (सा० १५१५-७) अग्न आ याह्यग्निभिरच्छा वः शीरशोचिष-(सा० १५५२-५)मित्येतेष्वग्निदेवत्येषु ब्रह्मसामानि अभिनिधनकाण्वनैपातिथश्रायन्तीयानि सामानि । बार्हतेषु बृहतीच्छन्दस्केषु ॥३॥

अधिकारिणमाह—

तेनैतेनान्नाद्यकामो यजेत । अग्निरन्नाद्यस्य प्रदातेति हि भवतीति ॥४॥

इति । स्पष्टम् । अस्य क्लृप्तिः—अतिरात्रौ पृष्ठ्यषडहो दशममहश्च प्रकृतिवत् ॥

सप्तमस्याह्नः—अदर्शि गातुवित्तम ( सा० १५१५-७ ) इति अभिनिधनं काण्वं ब्रह्मणः । अन्यत् सर्वं सप्तमाहवत् ॥

अष्टमस्याह्नः—अग्न आ याह्यग्निभि-(सा० १५५२-३)रिति नैपातिथं ब्रह्मणः । अन्यत् सर्वमष्टमाहवत् ॥

---

2. SM³B³ विश्वे° for वैश्व°

नवमस्याह्नः—अच्छा नः शीरशोचिष-(सा० १५५४-५)मिति आयन्तीयं ब्रह्मणः। अन्यत् सर्वं नवमाहवत् ॥४॥

[ इन्द्रस्तुद द्वादशाहः ]

द्वितीयमाह—

**ऐन्द्रेषु प्रगाथेषु छन्दोमानां ब्रह्मसामानि कल्पयेत् बार्हतेषु। स इन्द्रस्तुत् ॥५॥**

इति। ऐन्द्रेषु आ त्वा सहस्रमाशतम् (सा० १३९१-३) इन्द्रमिद्देवतातये (सा० १२८७-८) आयन्त इव सूर्यम् (सा० १३१९-२०) इत्येतेषु इन्द्रदेवत्येषु ब्रह्मसामानि पूर्वोक्तानि ॥५॥

अधिकारिणमाह—

**तेनैतेन राजा संग्रामी वा बलकामो वा यजेत। इन्द्रो हि राज्यस्येष्ट इति हि भवतीति ॥६॥**

इति। संग्रामी युद्धे जयकाम इत्यर्थः। शिष्टं स्पष्टम्। अस्य क्लृप्तिः प्राकृतद्वादशाहवत् कार्या।

सप्तमस्याह्नः—आ त्वा सहस्रमाशतम् (१३९१-३) इत्यभिनिधनं काण्वं ब्रह्मण इति विशेषः ॥

अष्टमस्याह्नः—इन्द्रमिद्देवतातय (सा १५८७-८) इति नैपातिथं ब्रह्मण इति विशेषः ॥६॥

[ सूर्यस्तुद् द्वादशाहः ]

तृतीयमाह—

**सौर्येषु प्रगाथेषु छन्दोमानां ब्रह्मसामानि कल्पयेत् बार्हतेषु। स सूर्यस्तुत् ॥७॥**

इति । आ त्वा सहस्रमाशतम् (सा० १३९१-३) बण्महां असि सूर्यं (सा० १७८८-९) आयन्त इव सूर्यम् (सा० १३१९-२०) इत्येतेषु सूर्यदेवत्येषु । आ त्वा सहस्रमिति तृचे केशिशब्दस्य सूर्यपर्यायस्य विद्यमानत्वेन सौर्यत्वम् । ब्रह्मसामानि पूर्वोक्तानि ॥७।

अधिकारिणमाह—

तेनैतेन यजेत यो वा यज्ञे मुह्येत् । यस्य वा यज्ञः सामि विलुप्येत । सूर्योऽप्रज्ञातस्य प्रज्ञातेति हि भवतीति ॥८॥

इति । यज्ञे यज्ञमध्ये बहिष्पवमानादिस्तोत्रशस्त्रग्रहादिषु मुह्येत् । मोहः अन्यथाकरणं वा अकरणं वा । यज्ञः सामि विलुप्येत । सर्वात्मना यज्ञमध्ये दैवमानुषभयात् विच्छेदो विलोपः । अस्य क्लृप्तिः प्राकृतद्वादशाहवत् कार्या ॥

सप्तमस्याह्नः—आ त्वा सहस्रमाशतम् (सा० १३९१-३) इत्यभिनिधनं काण्वं ब्रह्मण इति विशेषः ॥

अष्टमस्याह्नः—बण्महां असि सूर्ये-(सा० १७८८-९)ति नैपातिथं ब्रह्मण इति विशेषः ॥८॥

[ वैश्वदेवस्तुद् द्वादशाहः ]

चतुर्थमाह—

वैश्वदेवेषु प्रगाथेषु छन्दोमानां ब्रह्मसामानि कल्पयेद् बार्हतेषु । स वैश्वदेवस्तुत् ॥९॥

इति । वैश्वदेवेषु आ त्वा सहस्रम् (सा० १३९१-३) इन्द्रमिद्देवतातये (सा० १५८७-८) आयन्त एव सूर्यम् (सा० १३१९-२०) इत्येतेषु वैश्वदेवत्येषु आ त्वा सहस्रमिति तृचे ब्रह्मयुज इत्यादिबहुवचनस्य विद्यमानत्वात् इन्द्रमिद्देवतातय इति तृचे इन्द्रेहि विश्वभुवनानीति विश्वशब्दबहुवचनयोर्विद्यमान-

त्वात् श्रायन्त इव सूर्यमिति तृचे विश्वेदिन्द्रस्य भक्षतेति विश्वशब्दबहुवचनयोर्विद्यमानत्वाच्च एतेषां वैश्वदेवत्वम् । शिष्टं स्पष्टम् ॥९॥

अधिकारिणमाह—

**तेनैतेन प्रजातिकामो यजेत । विश्वे हि देवाः प्रजातेरीशा इति हि भवतीति ॥१०॥**

इति ॥१०॥

एतेषां चतुर्णां लक्षणमाह—

**स यच्छन्दोमानेव विकरोति ॥११॥**

इति । यच्छन्दोमानेव विकरोति सः अग्निष्टुत् । एवम् इन्द्रस्तुदादिषु योज्यम् । ब्रह्मसाममात्रेण छन्दोममात्रविकारवत्त्वम् अग्निष्टुदादेर्लक्षणमुक्तं भवति ॥११॥

इतरयज्ञवत् एते यज्ञाः पृष्ठादेव कल्प्या इत्याह—

**एते यथाकामं कल्प्यतराः पृष्ठ्याद् भवन्ति ॥१२॥**

इति ॥१२॥

तदेवोपपादयति—

**यदु ब्रह्मसामान्येतानि ह्याशीर्धानानि भवन्तीति ॥१३॥**

इति । आशीर्धानानि फलसंपादनानि । फलसंपादकत्वेन ब्रह्मसाम्नामपि पृष्ठत्वेन प्राधान्येन कल्पकत्वं युक्तमिति

---

6. PV ईशतः, S ईशितः B[1] ईतः for ईशाः

11. B[1] °विकारत्वम् for विकारवत्त्वम्

13. B[1] पृष्ठवदेव for पृष्ठादेव

14. PV °कामकल्पतराः for °कामं कल्प्यतराः

भावः । अग्निष्टोमेऽपि पृष्ठब्रह्मसाम्नोः प्राधान्यात् यज्ञशरीरनिर्वर्तकत्वाच्च पृष्ठवत् प्राधान्यमेतेषामपि युक्तम् । श्यैतनौधसयोः रथन्तरबृहद्रूपत्वात् तद्वदन्येषां ब्रह्मसाम्नामपि तत्तत्पृष्ठरूपत्वं द्रष्टव्यम् । ब्रह्मसाम्नामाशीर्धानत्वम् । अथ खल्वाशीःसमृद्धिरुपसरणानीत्युपासीते-(छां. उ. १.३.८)त्यादि ब्राह्मणेनोक्तम् । अत्र सूत्रम्—अथ ब्रह्मसाम्नि यः कामो यजमानस्य स्यात् स सिद्ध्यत्विति ध्यायन्नुपासीत (ला० श्रौ० २.१०.२) इति । ब्राह्मणे सामान्यत उक्तस्य ब्रह्मसाम्न्याशीःसमृद्ध्युपासनस्य कर्तव्यत्वं निदानकारेण विशिष्योक्तम् । यथा—कथमु खल्वाशीःसमृद्धिरुपसरणानीति सर्वस्तोत्रेष्वित्येक आहुः । स्तोत्रशब्देन चाभिश्रावयति । अपि चानिर्देशे किमर्थोऽवयवः प्रतीयात् (नि० सू० २. ४) इति । ब्रह्मसाम्नि त्वपरं ब्रह्मसाम ह्याशीर्धानमित्यथापि यः स्तोत्रशब्दान्नास्तोत्रीये प्रतीयादाशीःशब्दादपि स न ब्रह्मसाम्नि प्रत्येतुमर्हतीति । अस्य क्लृप्तिः प्राकृतद्वादशाहवत् कार्या । सप्तमस्याह्नः—आ त्वा सहस्रमित्यभिनिधनं काण्वं ब्रह्मण इति विशेषः ॥

अष्टमस्याह्नः—इन्द्रमिद्देवतातय इति नैपातिथं ब्रह्मण इति विशेषः ॥१२॥

इति तृतीये प्रपाठके चतुर्दशः खण्डः ॥१४॥

---

## पञ्चदशः खण्डः

दशरात्रिकस्तोमानाश्रित्य द्वादशाहानाह—

**अथापरे दश भवन्ति ॥१॥**

इति ॥१॥

---

5. S ब्राह्मणोक्तम् for ब्राह्मणेनोक्तम्

10. B[1] आहुतिस्तोत्रशस्त्रेन for आहुः । स्तोत्रशब्देन च

[ त्रिवृत्स्तोमद्वादशाहः प्रथमः ]

तत्र प्रथमं त्रिवृत्स्तोमद्वादशाहमाह—

**यथास्तोमं प्रथममहस्तथास्तोमोऽयं सर्वो दशरात्रः स्यात् ॥२॥**

इति । यच्छब्दे यथाशब्दः । यत्स्तोममित्यर्थः । एवं तथेत्यत्रापि सर्वो दशरात्रस्त्रिवृत्स्तोमः कार्य इत्यर्थः ॥२॥

अस्मिन्नधिकारिणमाह—

**तेनैतेन तेजस्कामो ब्रह्मवर्चसकामो वा यजेत ॥३॥**

इति । स्पष्टम् । अस्य क्लृप्तिः । आदित्यानामयनीयव्यूढाग्निष्टोमदशरात्रवत् स्तोमानुगुण्येनावापोद्वापौ कार्यौ । प्रथममहर्द्वादशाहवदविकृतम् ॥

द्वितीयस्याह्नः—पवस्व वाचः—पवस्वेन्दो (सा० ७७५–८०) पवमानस्य ते वयम् ( सा० ७८७–९ ) इति बहिष्पवमानम् । माध्यंदिने वृषा पवस्वे-( सा० ८०३–५ )ति गायत्रयौक्ताश्वस्वारंसौपर्णानि सामतृचः । पुनानः सोमे-(सा० ६७५–६)ति ऐडमायास्यदैर्घश्रवसत्रिणिधनायास्यानि सामतृचः । वृषा शोण इति वासिष्ठमन्त्यं तिसृषु । आर्भवे यस्ते मदो वरेण्य (सा० ८१५–७) इति गायत्रहाविष्मते प्रथमायाम् । पवस्वे-( सा० ६६२ )न्द्रमच्छे-(सा० ६६४)ति शङ्कुसुज्ञाने एकर्चयोः । अयं पूषे-(सा० ८१८-२०)ति गौरीवितक्रौञ्चोत्तरे प्रथमायाम् । द्वौ तस्यामेवे-(ला० श्रौ० ६. ३. १३)ति वचनात् । वृषा मतीना- (सा० ८२१–३)मिति याममन्त्यं तिसृषु । अन्त्यवर्जमेकर्चाः । संभवति स्तोमेऽन्त्यं

7. S तस्मिन् for अस्मिन्

16. S सोम for शोण

17. S Om. अन्त्यं

18. B[1-8] हाविष्कृते for हाविष्मते

सर्वत्र तृच (ला० श्रौ० ६. ४. २) इति वचनात्। अन्यत् सर्वं द्वितीयाहवत्। सर्वं त्रिवृत् ॥

तृतीयस्याह्नः—दवि द्युतत्या रुचा ( सा० ६५४-६ ) एते असृग्रम् (सा० ८३०-२) इषे पवस्व धारये-(सा० ८४१-३)ति बहिष्पवमानम्। उच्चा त ( सा० ६७२-४ ) इति गायत्र-क्षुल्लकवैष्टम्भे एकर्चयोः। अभि सोमे-( सा० ८५६-८ )ति पौरुमद्गगौतमान्तरिक्षाणि सामतृचः। आष्कारणिधनमध्यास्यायाम्। तिस्रो वाच ( सा० ८५९ ) इति अङ्गिरसांसंक्रोशोऽन्त्यः। आर्भवेऽन्त्यवर्जमेकर्चाः। अन्यत् सर्वं तृतीयाहवत्। सर्वं त्रिवृत् ॥

चतुर्थस्याह्नः—प्र ते-पवमानो अजीजनत् ( सा० ८८६-९१ ) हिन्वन्ति सूरम् ( सा० ९०४ - ६ ) इति बहिष्पवमानम्। माध्यंदिनार्भवयोरन्त्यवर्जमेकर्चाः। अन्यत् सर्वं चतुर्थाहवत्। सर्वं त्रिवृत्। षोडशिसाम च ॥

पञ्चमस्याह्नः—गोवित्-विश्ववित् (सा० ९५५-६०) यास्ते धारे-( सा० ९७९-१ )ति बहिष्पवमानम्। अर्षा सोमे-(सा० ९९४-६)ति गायत्रमेकस्याम्। यएवं तिसृषु। सोम उष्वे-(सा० ९९७-८)ति आनूपमेकस्याम्। तस्यामेवाग्नेस्त्रिणिधनम्। यत्सोम चित्रमुक्थ्यम् (सा० ९९९-१००१) इति शैशवं माध्यं-दिनान्त्यं तिसृषु। बार्हद्गिरस्यर्क्षु सन्तनि ब्रह्मसाम। असाव्यंशु-(सा० १००८-१०)रिति गायत्रगौषूक्ते। अभि द्युम्नं-प्राणा शिशु-(सा० १०११-१५)रिति च्यावनक्रोशे। पवस्व वाजसतय (सा० १०१६-८) इति गौरीवितऋषभशाक्वरौ। इन्दुर्वाजी-(१०९-२१)ति दाशस्पत्यमार्भवान्त्यम्। अन्त्यवर्जमेकर्चाः। अन्यत् सर्वं पञ्चमाहवत्। सर्वं त्रिवृत् ॥

---

9. M[3] Om. सर्वं त्रिवृत्

10. M[3] Om. प्रत···पञ्चमस्याह्नः (L. 14)

19. M[3]S Om. ब्रह्मसाम

षष्ठस्याह्नः—ज्योतिरसृक्षत (सा० १०३१-६) एते सोमा अभि प्रियम् (सा० ११७८-८०) इति बहिष्पवमानम्। इन्द्रायेन्द-(सा० १०७६-८)विति गायत्रमेकस्याम्। रेवत्यस्तिसृषु। मृज्यमान (सा० १०७९-८०) इति स्वारमौक्ष्णोरन्ध्रमेकस्याम्। तस्यामेव गोष्ठः। एतमु त्य-(सा० १०८१-३)मिति इहवद्वामदेव्यं माध्यंदिनान्त्यं तिसृषु। परिस्वानो गिरिष्ठा (सा० १०९३-५) इति गायत्रतृतीयवैदन्वते। स सु-तं वः सखाये-(सा० १०९९-११००)ति दीर्घकार्णश्रवसे। सोमाः पवन्त (सा० ११०१-३) इति गौरीवितैडंक्रौञ्चे। अया पवा पवस्वे-(सा० ११०४-६)ति श्रौष्टमार्भवान्त्यम्। अन्त्यवर्जमेकर्चाः। अन्यत् सर्वं षष्ठाहवत्। सर्वं त्रिवृत्॥

सप्तमस्याह्नः—प्रका-प्र स्वा (सा० १११९-२१) आ ते दक्षम् (सा० ११३७-९) इति बहिष्पवमानम्। वृषा पवस्वे-(सा० ८०३-५)ति गायत्रैडंसौपर्णरोहितकूलीयानि सामतृचः। पुनानः सोमेति कण्वरथन्तरगौङ्गवसाप्तमिकमायास्यानि सामतृचः। प्रो अयासीदि-(सा० ११५२-४)ति प्रवद्भार्गवं माध्यंदिनान्त्यं तिसृषु। काण्वस्यर्क्षु संतनि ब्रह्मणः। आर्भवे यस्ते मद इति गायत्राग्नेरर्कौ। एष स्य (सा० ५८४-५) सखाये-(सा० ११५७-९)ति शार्करप्लवौ। पुरोजितीति गौरीवितकार्तयशे। ये सोमास (सा० ११६३-५) इति जराबोधीयमार्भवान्त्यम्। अन्त्यवर्जमेकर्चाः। अन्यत् सर्वं सप्तमाहवत्। सर्वं त्रिवृत्॥

अष्टमस्याह्नः—शिशुम्-एते सोमाभि-(सा० ११७५-८६) नवर्चे तृचः। अया पवस्वेति बहिष्पवमानम्। अध्वर्यो अद्रिभि-(१२२५) रिति गायत्रविलम्बसौपर्णे। अभि सोमे-(सा० ८५६-८)ति

---

16. B[1] कण्वस्य for काण्वस्य

17. SM[3] B[2] Om. ब्रह्मण।

द्विहिंकारंवामदेव्यगायत्रपार्श्वपौरुहन्मनानि सामतृचः । अच्छिद्रमध्यास्यायाम् । धर्ता दिव (सा० १२२८-३०) इति उद्वद्भार्गवं माध्यंदिनान्त्यम् । अन्त्यवर्जमेकर्चाः । पवस्व देव आयुषगि-(सा० १२३५-७)ति गायत्रस्वाशिरामर्कौ । अभि द्युम्नं-प्राणा शिशु-(सा० १०१३-५)रिति ऐषिरत्रैते । अभी नो वाजसातम-(सा० १२३८-४०)मिति गौरीवितपदनिधनशुद्धाशुद्धीये । हिन्वन्ती-(सा० ६०४)ति इडानांसंक्षारोऽन्त्यः । अन्त्यवर्जमेकच्चर्चाः । अन्यत् सर्वमष्टमाहवत् । सर्वं त्रिवृत् ॥

नवमस्याह्नः—अक्रान् (सा० १२५३-५) एष देवो अमर्त्य (सा० १२५६-६५) इति दशर्चे तृचः । पवमानस्य ते कव (सा० ६५७-६) इति बहिष्पवमानम् । पवमानस्य जिघ्नत (सा १३१०-२) इति गायत्रादारसृदौ प्रथमायाम् । परीतोषीति पृष्ठकौल्मलबर्हिषदेवस्थानानि सामतृचः । दीर्घतमसोऽर्कोऽध्यास्यायाम् । असावि सोम (सा० १३१६-८) इति सामराजम् । अन्त्यं तिसृषु । त्वं सोमे-(सा० १३२३-५)ति गायत्राश्वसूक्ते । त्वं ह्यङ्ग दैव्य (सा० ६३८-४०) पवस्व देव वीतये ( सा० १३२६-२८) सौपर्णवैश्वमनसे । परि त्यं हर्यतम् (सा० १३२९-३१) इति गौरीवितसंक्रतिनी । उपोष्विति प्रतीचीनैडंकाशीतमार्भवान्त्यम् । अन्त्यवर्जमेकच्चर्चाः । अन्यत् सर्वं नवमाहवत् । सर्वं त्रिवृत् ॥

दशमस्याह्नः—असृक्षत प्र वाजिनः ( सा० १०३४-६ ) पवमानस्य विश्ववित् (सा० ६५८-६०) पवमानो अजीजनत् (सा० ८८६-९१) इति त्रय एकर्चाः । एते असृग्रमिन्दवः (सा० ८३०-२) पवस्वेन्दो वृषा सुत (७७८-८०) इत्येतौ तृचाविति बहिष्पवमानम् ।

---

12. S °र्बर्हिषानि for बर्हिषदेवस्थानानि

14. S Om. अन्त्यं ; B[1] Om. तिसृषु

19. M[3] B[3] Om. सर्वं त्रिवृत्

उच्चा त इति गायत्रामहीयवाभीकानि सामतृचः। पुनानः सोमेति उत्सेधगौरीवितनिषेधाः सामतृचः। आजागृवि-(सा० १३५७-९)रिति यज्ञायज्ञीयं माध्यंदिनान्त्यं तिसृषु। आर्भवे सौहविषस्योद्धारः। अन्त्यवर्जमेकर्चाः। समूढे तु माध्यंदिने गौरीवितस्य स्थाने मैधातिथम्। आर्भवे श्यावाश्वस्य स्थाने गौरीवितम्। अन्यत् सर्वं दशमाहवत्। समानसा दशधर्माः कर्तव्याः। सर्वं त्रिवृत् ॥३॥

[ पञ्चदशस्तोमद्वादशाहो द्वितीयः ]

पञ्चदशस्तोमद्वादशाहमाह—

**यथा द्वितीयम् ॥४॥**

इति। स्तोमशब्दोऽनुवर्तते। यथा स्तोमद्वितीयमहरिति। यत्स्तोमं द्वितीयमहस्तत्स्तोमः सर्वो दशरात्रः कार्य इत्यर्थः। एवमुत्तरेषु योज्यम् ॥४॥

अस्मिन्नधिकारिणमाह—

**तेनौजस्कामो वीर्यकामो वा ॥५॥**

इति। यजेतेत्यनुवर्तते। तत्र प्रथमस्याह्नः—अस्य प्रत्ना-(सा० ७५५-६३)नवर्चं दवि-पवेति बहिष्पवमानम्। आदित्यानामयनीयच्छन्दोमदशरात्रवत् स्तोमानुगुण्येनावापोद्वापौ कार्यौ। प्र सोमासो विपश्चितः (सा० ७६४-६) इति गायत्राश्वसोमसामानि। प्र सोम देववीतय (सा० ७६७-८) इति यौधाजयम्। प्र तु द्रवे-(सा० ६७७-९)त्यौशनमन्त्यम्। सर्वे तृचाः। आर्भवे स्वादिष्ठये-(सा० ३८९)ति गायत्रसंहिते। अया पवस्व पवत इति सफाक्षारे एकर्चयोः। प्रसुन्वान (सा० ७७४) इति

---

6. B² Om. सर्वं त्रिवृत्

14. B¹⁻³ M³ S तेजस्कामः for ओजस्कामः

20. M³ after तृचाः add अन्यत् सर्वं प्रथमाहवत्। सर्वं पञ्चदशम्

गौरीवितमेकस्याम् । गौतमं तिसृषु । कावमन्त्यम् । अन्यत् सर्वं प्रथमाहवत् । सर्वं पञ्चदशम् । द्वितीयमहः प्रकृतिवत् ॥

तृतीयस्याह्नः—तन्त्वा नृम्णानि (सा० ८३९-८) पञ्चर्चे । अन्त्योपान्त्ययोरुद्धारः । स्तोमासंभवात् । अभिसोमे-(सा० ८५६-८)ति पौरुमद्गगौतमाष्कारणिधनकाण्वानि सामतृचः । अन्तरिक्षं तिसृषु । आर्भवे वाचःसामशौक्तगौरीवितान्येकर्चानि । अन्यत् सर्वं तृतीयाहवत् । सर्वं पञ्चदशम् ॥

चतुर्थस्याह्नः—प्रत-अजीजनत्-प्रयद्गा (सा० ८८६-९७) षड्वृचम् । हिन्वन्ति (सा० ९०४-६) बहिष्पवमानम् । माध्यंदिने बृहत्याम् आष्टादंष्ट्रोत्तराभीशवोत्तरस्वःपृष्ठाङ्गिरसानि सामतृचः । त्रीन् यतरस्यां संभवेयु-(ला० श्रौ० ६.३.१७)रिति वचनात् । आर्भवे बृहत्कातीषादीयनानदान्येकर्चानि । अन्यत् सर्वं चतुर्थाहवत् । सर्वं पञ्चदशं षोडशिसाम च ॥

पञ्चमस्याह्नः—गोविद्-विश्वविद्-दधन्विषु (सा० ९५५-६३) सप्तर्चे । यास्ते धारे-(सा० ९७१-८१)ति बहिष्पवमानम् । सप्तर्चेऽन्त्याया उद्धारः । स्तोमासंभवात् । अर्षा सोमे-(९९४-६)ति गायत्रयणवे तृचयोः । सोम उष्वे(सा० ९९७-८)ति मानवानूपवाभ्राणि सामतृचः । अग्नेस्त्रिणिधनं तिसृषु । यत्सोम चित्र-(सा० ९९९-१००१)मिति शैशवं माध्यंदिनान्त्यं तिसृषु । आर्भवे असाव्यंशुर्मदाये-( सा० १००८-१० )ति गायत्रसंतनिनी । अभि द्युम्नं-प्राणा शिशु-(सा० १०११-५)रिति च्यावनक्रोशे एकर्चयोः । पवस्व वाजसातय (सा० १०१६-८) इति गौरीवितमेकस्याम् । ऋषभशाक्वरस्तिसृषु । इन्दुर्वाजी- ( सा० १०१९ - २१ )ति दाशस्पत्यमार्भवान्त्यं तिसृषु । अन्यत् सर्वं पञ्चमाहवत् । सर्वं पञ्चदशम् ॥

---

7. M[8] द्वितीयाहवत् for तृतीयाहवत्

19. S शैशवान्त्यं for शैशवं

षष्ठस्याह्नः—ज्योतिरसृक्षवीरति (सा० १०३१-४६) दशर्चें आदितः षड्टृचः एते सोमे-(सा० १०६१-३)ति बहिष्पवमानम्। इन्द्रायेन्द-(सा० १०७६-८)विति गायत्रमेकस्याम्। इषोवृधीयक्रौञ्च-वाजदावर्यः सामतृचः। रेवत्यस्तिसृषु। मृज्यमानः सुहस्त्ये-(सा० १०७९-८०)ति स्वारमौक्ष्णोरन्ध्रैडमौक्ष्णोरन्ध्रे प्रथमायाम्। वाजजिद्वरुणसामगोष्ठाः सामतृचः। एतमु त्य- (सा० १०८१-३) मितीहवद्वामदेव्यमन्त्यम्। आर्भवे ऐडंक्रौञ्चश्नौष्टे तृचयोः। इतरे एकर्चाः। अन्यत् सर्वं षष्ठाहवत्। सर्वं पञ्चदशम्॥

सप्तमस्याह्नः—प्रका-प्रस्वा- (सा० १११६-२४) नवर्चम् आति दक्ष-(सा० ११३७-९)मिति बहिष्पवमानम्। वृषा पवस्वे-(सा० ८०३-५)ति गायत्रसंतन्यैडंसौपर्णानि तृचेषु। पुनानः सोमेति कण्वरथन्तरगौङ्गवसाप्तमिकायास्यानि सामतृचः। प्रो अयासी-( सा० ११५२-४ )दिति प्रवद्भार्गवं माध्यंदिनान्त्यम्। आर्भवे गायत्राग्नेरर्काध्यर्धेडंसोमसामानि सामतृचः। एष स्य (सा० ५८४-५) सखाये-(सा० ११५७-९)ति शार्करप्लवौ एकर्चयोः। पुरोजितीति गौरीवितमेकस्याम्। कार्तयशं तिसृषु। प्रवाज्यक्षे-(सा० ११६०-२)ति सौहविषं तिसृषु। ये सोमास (सा० ११६३-५) इति जराबोधीयमार्भवान्त्यं तिसृषु। अन्यत् सर्वं सप्तमाहवत्। एवं पञ्चदशम्॥

अष्टमस्याह्नः—शिशुमेते सोमाभि- (सा० ११७५-८३)नवर्चम् अया पवस्वे-(सा० ७७२-४)ति बहिष्पवमानम्। अध्वर्यो अद्रिभिः सुत-(सा० १२२५-२७)मिति गायत्रविलम्बसौपर्णे। अभि सोमेति द्विहिंकारंवामदेव्याच्छिद्रे। धर्ता दिव (सा० १२२८-३०) इति उद्वद्भार्गवं माध्यंदिनान्त्यम्। आर्भवे पवस्व देव आयुषगिति गायत्र-स्वाशिरामर्कगायत्रीसामासितानि सामतृचः। अभि द्युम्नं-प्राणा

12. $B^2$ $M^3$ S °साप्तमिकम् for °साप्तमिक°

शिशु-(सा० १०११-५)रिति ऐषिरत्रैते एकर्चयोः। अभी नो वाजसातम-(सा० १२३८-४०)मिति गौरीवितमेकस्याम्। ऐडंकौत्सं तिसृषु। स्वासु धर्म तिसृषु। हिन्वन्ति सूर-(सा० ९०४)मिति विशोविशीयमाभ्रवान्त्यम्। अन्यत् सर्वमष्टमाहवत्। सर्वं पञ्चदशम्॥

नवमस्याह्नः—अक्रान्-एष देवो (सा० १२५३-६४) नवर्चं पवमानस्य ते कव इति बहिष्पवमानम्। दशर्चेऽन्त्याया उद्धारः। पवमानस्य जिघ्नत (सा० १३१०-२) इति गात्रादारसृचौ। परीतोषी-(सा० १३२३-५)ति पृष्ठकौल्मलबर्हिषसंकृतीनि सामतृचः। देवस्थानं तिसृषु। असावि सोम (सा० १३१६-८) इति दीर्घतमसोऽर्कोऽन्त्यः। सामराजं वा। सामराजान्त्यपक्षे परीतोषीति पृष्ठदीर्घतमसोऽर्कमाण्डवानि सामतृचः। दैर्घश्रवससंकृतिदेवस्थानानि सामतृचः। त्वं सोमासि धारयु-(सा० १३२३-५)रिति गायत्राश्वसूक्तप्रतीचीनडंकाशीतानि सामतृचः। त्वं ह्यङ्ग दैव्य (सा०९३८-९) पवस्व देव वीतय (सा० १३२६-८) इति सौपर्णवैश्वमनसे एकर्चयोः। परि त्यं हर्यतं हरि-(सा० १३२९-३१)मिति गौरीवितमेकस्याम्। यद्वाहिष्ठीयं तिसृषु। स्वासु विधर्म तिसृषु। उपोष्वि-(सा० १३३५-७)ति श्रुध्यमाभ्रवान्त्यम्। अन्यत् सर्वं नवमाहवत्। सर्वं पञ्चदशम्॥

दशमस्याह्नः—असृक्षत प्र वाजिनः (सा० १०३४) पवमानस्य विश्ववित् (सा० ९५८) पवमानो अजोजनत् (सा० ८८९) एते असृग्रमिन्दव (सा० ८३०) इत्येते एकर्चाः। पवस्वेन्दो वृषा सुत (सा० ७७८-८०) इति तृचः। अस्य प्रत्ना (७५५-६३) नवर्चमिति बहिष्पवमानम्। नवर्चे अन्त्याया उद्धारः। उच्चा त इति गायत्रामहीयवाभीकानि सामतृचः। पुनानः सोमेति

---

3. B[1] घर्मं for धर्म

17. B[1] Om. यद्वाहिष्ठीयं तिसृषु

उत्सेधयज्ञायज्ञीयनिषेधास्तृचेषु । आजागृवि- (१३५७-९)रिति गौरीवितं माध्यंदिनान्त्यम् । आभवे स्वादिष्ठये-(६८९-१)ति गयत्रसंहिते तृचयोः । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफरोहितकुवलीये एकचयोः । पर्यूष्व-(सा. १३६४-६)ति श्यावाश्वमेकस्याम् । आन्धीगवं तिसृषु । सूर्यवतीषु वाजजिदार्भवान्त्यम् । अन्यत् सर्वं दशमाहवत् । सर्वं पञ्चदशम् । समनसा दशमधर्माः कर्तव्याः ॥५॥

[ सप्तदशस्तोमद्वादशाहस्तृतीयः ]

सप्तदशस्तोमद्वादशाहमाह—

**यथा तृतीयम् ॥६॥**

इति पूर्ववद्व्याख्येयम् ॥६॥

अधिकारिणमाह—

**तेन प्रतिष्ठाकामः प्रजातिकामो वा ॥७॥**

इति । यजेतेत्यनुवर्तते । तत्र प्रथमस्याह्नः—अस्य प्रत्ना- (सा० ७५५-६३) नवर्चं; पवस्व-(सा० ६९२-६)पञ्चर्चं; पवमानस्य ते कव इति बहिष्पवमानम् । प्र सोमासो विपश्चित (सा० ७६४-६) इति गायत्राश्वसोमसामानि तृचेषु । प्र सोम देववीतय (सा० ७६७) इति गौङ्गवमेकस्याम् । तस्यामेव पत्रम् । यौधाजयं तिसृषु । औशनमन्त्यं तिसृषु । आभवे स्वादिष्ठयेति गायत्रसंहिते तृचयोः । अया पवस्व (सा० ७७२) पवते हर्यते हरि-(सा० ७७३)रिति सफाक्षारे एकर्चयोः । प्र सुन्वान (सा० ७७४) इति गौरीवितगौतमे

12. B[3] S प्रजा° for प्रजाति°

16. S My वयम् for कवे

18. B[1] My यौक्ताश्वं for यौधाजयं

तृचयोः । काव्रमन्त्यम् । अन्यत् सर्वं प्रथमाहवत् । सर्वं सप्तदशम् ॥

द्वितीयस्याह्नः—पवस्व वाचः-पवस्वेन्द्रो-वृषासोम (सा० ७७५-८३) उत्ते शु-(सा० १२०५-९) पञ्चर्चं ; पवमानस्य ते कव इति बहिष्पवमानम् । वृषा पवस्वेति गायत्रयौक्ताश्वे। पुनानः सोमेति समन्तदैर्घश्रवसे प्रथमायाम् । ऐडमायास्यत्रिणिधनायास्ये तृचयोः । वृषा शोण (सा० ८०३) इति वासिष्ठमन्त्यम् । एकमेकर्चं कुर्वन् प्रथमायामादितः कुर्यात् । द्वौ तस्यामेवे-(ला० श्रौ० ६. ३. १३)ति वचनात् । आर्भवे पवस्वेन्द्रमच्छेति शङ्कुसुज्ञाने एकर्चयोः । इतरे तृचाः । अन्यत् सर्वं द्वितीयाहवत् ॥

तृतीयमहः प्रकृतिवत् ॥

चतुर्थस्याह्नः—प्रत-अजीजनत्-प्रयद्गा-(सा० ८८६ - ९७) षड्चम् ; आशुः (सा० ८९८-९०३) षड्चे ; आद्यास्तृचः ; हिन्वन्ति सूर-(सा० ९०४-६)मिति बहिष्पवमानम् । षड्चे अन्त्याया उद्धारः । स्तोमासंभवात् । माध्यंदिने बृहत्यां तवाहं सोमे-(सा० ९२२-३)ति आष्टादंष्ट्रोत्तराभीशवोत्तरे प्रथमायाम् । स्वःपृष्ठाङ्गिरसं तिसृषु । आर्भवे बृहत्कातीषादीये एकर्चयोः । अन्यत् सर्वं चतुर्थाहवत् । सर्वं सप्तदशम् । षोडशिसाम च ॥

पञ्चमस्याह्नः—गोविद्-विश्वविद्-अधन्विषु-(सा० ९५५-६३) सप्तर्चं ; यवंयवम् नो-यास्ते धारे(सा० ९७५-८१)ति बहिष्पवमानम् । यवंयवं चतुर्ऋचे अन्त्यानां त्रयाणामुद्धारः । औपशदे तथा दर्शनात् । स्तोमासंभवात् । अर्षासोमे-(सा० ९९४-५)ति गायत्रयणवे । सोम उष्वे-(सा० ९९७-८)ति मानवानूपे । आद्यायां वाभ्रं तिसृषु । अग्नेस्त्रिणिधनं तिसृषु । यत्सोम चित्र-(सा० ९९८-१००१)मिति शैशवं माध्यंदिनान्त्यं तिसृषु । आर्भवे असाव्यंशु-(सा० १००८-१०)रिति गायत्रसंतनिनी तृचयोः । अभिद्युम्नं-प्राणा शिशु-(सा० १०११-५)रिति च्यावनक्रोशे एकर्चयोः ।

पवस्व वाजसातय (सा० १०१६-८) इति गौरीवितऋषभशाक्वरपार्थानि सामतृचः । अष्टेडपदस्तोभस्तिसृषु । इन्दुर्वाजी-(सा० १०१९-२१)ति दाशस्पत्यमार्भवान्त्यम् । अन्यत् सर्वं पञ्चमाहवत् । सर्वं सप्तदशम् ॥

षष्ठस्याह्नः—ज्योति-रसृक्षत-वीरति ( सा० १०३१-४६ ) दशर्चम् ; एते सोमा-(सा० ११७८-८०)-भिप्रिय-(सा० ११२७)मिति बहिष्पवमानम् । दशर्चस्यान्त्योपान्त्योरुद्धारः । स्तोमासंभवात् । इन्द्रायेन्द-(सा० १०७६-८)विति गायत्ररेवत्यौ तृचयोः । मृज्यमानः (सा० १०७९-८१ ) इति स्वारमौक्ष्णोरन्ध्रैडमौक्ष्णोरन्ध्रे प्रथमायाम् । वाजजिद्गोष्ठौ तृचयोः । एतमु त्य-(सा० १०८१-३) मितीहवद्वामदेव्यन्त्यम् । आभवे परिस्रवान (सा० १०९३-५) इति गायत्रं तिसृषु । तृतीयं वैदन्वतं तिसृषु । स सु-तं वः सखे-(सा० १०९६-११००)ति दीर्घकार्णश्रवसे एकर्चयोः । सोमाः पवन्त (सा० ११०१-३) इति गौरीवितमधुश्चुन्निधनशाङ्‌निधनक्रौञ्चानि सामतृचः । ऐडक्रौञ्चं तिसृषु । अया पवा पवस्वे-(सा० ११०४-६)ति श्नौष्टमन्त्यं तिसृषु । अन्यत् सर्वं षष्ठाहवत् । सर्वं सप्तदशम् ॥

सप्तमस्याह्नः—प्रका-प्रस्वा-(सा० १११६-२) नवर्चम् ; एते असृग्रम् ; आ ते दक्षम् (सा० ११३७-९) इति बहिष्पवमानम् । नवर्चेऽन्त्याया उद्धारः । वृषा पवस्वेति गायत्र सन्तन्यैडंसौपर्णानि । पुनानः सोमेति कण्वरथन्तरं प्रथमायाम् । तस्यामेव गौङ्गवं द्विनिधनमायास्यं तिसृषु । प्रो अयासी-( सा० ११५२-४ )दिति प्रवद्भार्गवं माध्यंदिनान्त्यम् । यस्ते मद इति गायत्राग्नेरर्काध्यर्धेडंसोमसामानि सामतृचः । एष स्य धारया (सा० ५८४-५) सखाय आनिषीदते-(सा० ११५७-९)ति शार्करप्लवौ एकर्चयोः ।

---

14. B[1] My Om, °वाङ्‌निधन°

पुरोजितीति गौरीवितकार्तयशे तृचयोः । प्रवाज्यक्षे-(सा० ११६०-२)ति सौहविषं तिसृषु । ये सोमास (सा० ११६३-५) इति जराबोधीयमार्भवान्त्यम् । अन्यत् सर्वं सप्तमाहवत् । सर्वं सप्तदशम् ॥

अष्टमस्याह्नः—शिशुमेते सोमाभि-(सा० ११७५-८६)नवर्चम् ; उत्तेशु (सा० १२०५-९) पञ्चर्चम् ; अया पवस्व धारये-(सा० १२१६-८)ति बहिष्पवमानम् । नवर्चेऽन्त्यं तृचमुद्धरेत । माध्यंदिने अध्वर्यो अद्रिभि-(सा० १२२५-७)रिति गायत्रविलम्बसौपर्णे । अभिसोमास आयव (सा० ८५६-८) इति द्विहिंकारं वामदेव्यं प्रथमायाम् । हारायणाच्छिद्रे तृचयोः । बार्हदुकथमध्यास्यायाम् । धर्ता दिव (सा० १२२८-३०) इति उद्वद्भार्गवमन्त्यम् । आर्भवे पवस्व देव आयुष-(सा० १२३५-७)गिति गायत्रं तिसृषु । स्वाशिरामर्ककाक्षीवतभासानि सामतृचः । अभि द्युम्नं-पाणा शिशु- (सा० १०११-५)रिति ऐषिरत्रैते एकर्चयोः । अभी नो वाजसातम-(सा० १२३८-४०)मिति गौरीवितरयिष्ठौदलानि सामतृचः । स्वासु धर्म तिसृषु । हिन्वन्ति सूर-(सा० ९०४-६)मिति विशोविशीयमार्भवान्त्यम् । अन्यत् सर्वमष्टमाहवत् । सर्वं सप्तदशम् ॥

नवमस्याह्नः—अक्रान्-एष देवो (सा० १२५३-६५) दशर्चम् ; एष उ स्य वृषे-(सा० १२७४-९)ति एकर्चम् ; पवमानस्य ते कव (सा० ६५७-९) इति बहिष्पवमानम् । पवमानस्य जिघ्नत (सा० १३१०-२) इति गायत्रादारसृद्दषभपवमानाः सामतृचः । परीतोषी- (सा० १३१३-५)ति पृष्ठमेकस्याम् । संकृतिदेवस्थानाभीशवाद्यानि तृचेषु । वासिष्ठमध्यास्यायाम् । असावि सोम (सा० १३१६-८) इति दीर्घतमसोऽर्कोऽन्त्यः । सामराजं वा । सामराजान्त्यपक्षे पृष्ठस्य स्थाने पृष्ठदीर्घतमसोऽर्कमाण्डवानि

21. B[1] °सृगृषभ° for °सृदृषभ°

सामतृचः । आभीशवाद्यमेकस्याम् । देवस्थानं तिसृषु । संकृति तिसृषु । वासिष्ठमध्यास्यायाम् । आभवे त्वं सोमे-(सा० १३२३-८)ति गायत्रं तिसृषु । आश्वसूक्तप्रतीचीनेडंकाशीतहाविष्कृतानि सामतृचः । त्वं ह्यङ्ग दैव्य (सा० ९३८-९) पवस्व देववीतय (सा० १३२६-८) इति सौपर्णवैश्वमनसे एकर्चयोः । परि त्यं हर्यतं हरि-(सा० १३२९-३१)मिति गौरीवितनिहवयद्वाहिष्ठीयानि सामतृचः । स्वासु विधर्म तिसृषु । उपोषु जात-(सा० १३३५-७)मिति श्रुध्यमाभवान्त्यम् । अन्यत् सर्वं नवमाहवत् । सर्वं सप्तदशम् ॥

दशमस्याह्नः—असृक्षत प्र वाजिनः (सा० १०३४-७) पवमानस्य विश्ववित् (सा० ९५८-६०) पवमानो अजीजनत् (सा० ८८९-९२) एते असृग्रमिन्दवः (सा० ८३०-२) पवस्वेन्दो वृषा सुत (सा० ७७८-८०) इति पञ्च एकर्चाः । अस्य प्रत्ना (सा० ७७५-७) नवर्चम् । पवमानस्य ते कव (सा० ६५७-९) इति बहिष्पवमानम् । उच्चा ते जातमन्धस (सा० ६७२-४) इति गायत्रामहीयवे तृचयोः । पुनानः सोमे-(सा० ६७५-९)ति रौरवौत्सेधौ प्रथमायाम् । यज्ञीयज्ञीयनिषेधौ तृचयोः । आजागृवि-(सा० १३५७-९)रिति गौरीवितं माध्यंदिनान्त्यम् । आभवे स्वादिष्ठयेति गायत्रसंहिते तृचयोः । पवस्वेन्द्रमच्छे-(सा० ६९२-६)ति सफरोहितकूलीये एकर्चयोः । पर्यूष्वि-(सा० १३६५-६)ति श्यावाश्वौष्णिहमोकोनिधनान्धीगवानि सामतृचः । परिप्रधन्वे-(सा० १३६७-९)ति सौहविषं तिसृषु । वाजजिदाभवान्त्यम् । अन्यत् सर्वं दशमाहवत् । सर्वं सप्तदशम् । समानसा दशमधर्माः कर्तव्याः ॥७॥

---

1. B[1] My °शवं for °शवाद्यं and Om. एकस्याम् ··· संकृति

23. M[3] B[2] Om. सर्वं सप्तदशम्

[ एकविंशस्तोमद्वादशाहश्चतुर्थः ]

एकविंशस्तोमद्वादशाहमाह—

**यथा चतुर्थम् ॥८॥**

इति । पूर्ववद्व्याख्येयम् ॥८॥

अधिकारिणमाह—

**तेन प्रतिष्ठाकामः ॥९॥**

इति । यजेतेत्यनुवर्तते । अस्य क्लृप्तिः । तत्र प्रथमस्याह्नः— अस्य प्रत्ना (सा० ७५५-६३) नवर्चम्; एते सोमाभी- (सा० (सा० ११७८-८६) नवर्चम्, पवमानस्य ते कव इति बहिष्पवमानम् । आदित्यानामयनीयच्छन्दोमदशरात्रवत् स्तोमानुगुण्येनावोपोद्धारौ कार्यौ । माध्यंदिने प्रसोमासो विपश्चित (सा० ७६४-६) इति गायत्राश्वसोमसामानि । प्रसोम देववीतय (सा० ७६४-८) इति गौङ्गवपञ्चयौधाजयानि । औशनमन्त्यम् । सर्वे तृचाः । आर्भवे स्वादिष्ठयेति गायत्रसंहिते । अया पवस्व-पवते हर्यतो हरि-(सा० ७७२-३)रिति सफाक्षारे एकर्चयोः । प्रसुन्वान (सा० ७७४-६) इति गौरीवितमेकस्याम् । गौतमशुद्धाशुद्धीयसाभ्राणि तृचेषु । कावमन्त्यम् । अन्यत् सर्वं प्रथमाहवत् । सर्वमेकविंशम् ॥

द्वितीयस्याह्नः—पवस्व वाचः-पवस्वेन्दो-वृषा सोम-वृषा ह्यसि (सा० ७७५-८६) एष उ- (सा० १२७४-९) षड्ृचम्; पवमानस्य ते कव (सा० ६५७-९) इति बहिष्पवमानम् । माध्यंदिने वृषा पवस्व धारये-(सा० ९०३-५)ति गायत्रयौक्ताश्वस्वारं-

8. M[3] Om. एते सोमाभीनवर्चम्

21, S. वयम् for कव

सौपर्णानि । पुनानः सोमे-(सा० ६७४-६)ति ऐडमायास्यत्रिणिधनमायास्यसमन्तानि । वृषा शोण (सा० ८०६-८) इति वासिष्ठमन्त्यम् । आर्भवे सर्वे तृचाः । अन्यत् सर्वं द्वितीयाहवत् । सर्वमेकविंशम् ॥

तृतीयस्याह्नः—इविद्युतत्या-एते राजा-तन्त्वा नृम्णानि-(सा० ८३६-४०) पञ्चर्चम् ; यवं यवं (सा० ६७५-८) चतुर्ऋचम् ; इषे-(सा० ८४१-३)ति बहिष्पवमानम् । उच्चात इति गायत्रक्षुल्लकवैष्टम्भौ । अभि सोमे-( सा० ८५६-८ )ति पौरुमद्गगौतमान्तरिक्षाष्कारणिधनानि तृचेषु । तिस्रो वाच ( सा० ८५९-६१ ) इति अङ्गिरसांसंक्रोशोऽन्त्यः । आर्भवे सर्वे तृचाः । अन्यत् सर्वं तृतीयाहवत् । सर्वमेकविंशम् ॥

चतुर्थस्याह्नः प्रकृतिवत् ॥

पञ्चमस्याह्नः—गोविद्-विश्वविद्-दधन्विषु- (सा० ९५५-६७) सप्तर्चम् ; उत्ते शु (सा० १२०५–९) पञ्चर्चं ; यास्त (सा० ९७९-८१) इति बहिष्पवमानम् । माध्यंदिने अर्षा सोमे- (सा० ९९४-६)ति गायत्रयण्वशाकलवार्शानि । सोम उष्वे-( सा० ९९७-८)ति मानवानूपवाम्राणि सामतृचः । अग्नेस्त्रिणिधनं तिसृषु । यत् सोम चित्र-(सा० ९९९-१००१)मिति शैशवमन्त्यम् । आर्भवे असाव्यंशु-(सा० १००८-१०)रिति गायत्रसंतनिनी । अभि द्युम्नं प्राणा शिशु-(सा० १०११-५)रिति च्यावनक्रोशे एकर्चयोः । पवस्व वाजसातय (सा० १०१६-८) इति गौरीवितमेकस्याम् । ऋषभशाक्वरपार्थाष्टेडपदस्तोभास्तृचेषु । इन्दुर्वाजी-(सा० १०१९-२१)ति दाशस्पत्यमन्त्यम् । अन्यत् सर्वं पञ्चमाहवत् । सर्वमेकविंशम् ॥

14. B[2] M[3] Om. सप्तर्चम् उत्ते शु

षष्ठस्याह्नः—ज्योति-रसृक्षत-वीरति- ( सा० १०३१ - ४६ ) दशर्चम् ; तरत्सम- (सा० १०५७-६०) चतुर्ऋचम् ; एते सोमे- (सा० सा०६१-३)ति बहिष्पवमानम् । माध्यंदिने इन्दायेन्दवि- (सा० १०७६-८)ति गायत्ररैवते । मृज्यमानः (सा० १०७९-८०) इति स्वारमौक्ष्णोरन्ध्रवाजजिद्वरुणसामगोष्ठास्तृचेषु । एतमु त्य-(सा० १०८१-३)मिति इहवद्वामदेव्यमन्त्यम् । आर्भवे परिस्वान (सा० १०९३-५) इति गायत्रतृतीयाद्यचतुर्थवैदन्वतानि । स सु-तं वः सखाये-(सा० १०९६-११००)ति दीर्घकार्णश्रवसे एकर्चयोः । सोमाः पवन्त (सा० ११०१-३) इति गौरीवितं प्रथमायाम् । मधुश्चुन्निधनवाङ्निधनक्रौञ्चैडक्रौञ्चानि सामतृचः । अया पवा पवेस्वे(सा० ११०४-६)ति श्नौष्टमन्त्यम् । अन्यत् सर्वं षष्ठाहवत् । सर्वमेकविंशम् ॥

सप्तमस्याह्नः—प्रका-प्रस्वा-( सा० १११६-२७ ) नवर्चम् ; असृग्र-(सा० ११२८-३६)न्नवर्चम् ; आ तेदक्षमि-(सा० ११३७-९)ति बहिष्पवमानम् । असृग्रन्नवर्चेऽन्त्यं तृचमुद्धरेत् । माध्यंदिने रोहितकूलीयमुद्धरेत् । आर्भवे यस्ते मद (सा० ८१५-७) इति गायत्रमौक्षसोमासामानि सामतृचः । अग्नेरर्कस्तिसृषु । यद्वा । गायत्रं तिसृषु । अग्नेरर्काध्यर्धेडंसोमसाममौक्षाणि सामतृचः । एष स्य धारया-सखाये-( सा० ११५७ - ९ )ति शार्करप्लवौ एकर्चयोः । पुरोजितीति गौरीवितमेकस्याम् । गौतमकार्तयशे तृचयोः । प्रवाज्यक्षे-(सा० ११६०-२)ति सौहविषं तिसृषु । ये सोमे-(सा० ११६३-५)ति जराबोधीयमन्त्यम् । अन्यत् सर्वं सप्तमाहवत् सर्वमेकविंशम् ॥

अष्टमस्याह्नः—शिशुम्-एते सोमाभि- (सा० ११७५-८६) नवर्चम् ; अयावीत्यपघ्नन्-अया पवस्व धारये-(सा० १२१०-८)

---

23. B[2] M[3] सप्तदशम् for एकविंशम्

८)ति बहिष्पवमानम् । माध्यंदिने अध्वर्यो अद्रिभि- (सा० १२२५-७)रिति गायत्रवैरूपाशुभार्गवाणि । अभि सोमेति द्विहिंकारवामदेव्यगायत्रपार्श्वपौरुहन्मनानि । धर्ता दिव ( सा० १२२८ - ३० ) इति उद्वद्भार्गवमन्त्यम् । सर्वे तृचाः । आर्भवे पवस्व देव आयुष-(सा० १२३५-७)गिति गायत्रं तिसृषु । स्वाशिरामर्ककाक्षीवतभासानि सामतृचः । अभिद्युम्नं प्राणा-शिशु-(सा० १०११-५)रिति ऐषिरत्रैते एकर्चयोः । अभी नो वाज-सातम-(सा० १२३८-४०)मिति गौरीवितं प्रथमायाम् । ऐडंकौत्स-पदनिधनंशुद्धाशुद्धीयक्रौञ्चाद्यानि सामतृचः । रयिष्ठं तिसृषु । स्वासु धर्म तिसृषु । हिन्वन्ति त्रिशोविशीयमन्त्यम् । अन्यत् सर्वमष्टमाहवत् सर्वमेकविंशम् ॥

नवमस्याह्नः—अक्रान्-एष देवो (सा० १२५३-६५) नवर्चम् । एष उ (सा० १२७४-६) षड्टचम् । पवमानस्य ते कव इति बहिष्पवमानम् । दशर्चेऽन्त्याया उद्धारः । माध्यंदिने पवमानस्य जिघ्नत (सा० १३१०-२) इति गायत्रं तिसृषु । अदारसृदिडानां-संवारऋषभपवमानाः सामतृचः । परीतोषीति पृष्ठकौल्मल-बर्हिषसंकृतिदेवस्थानानि तृचेषु । असावि सोमे-(सा० १३१६-८)ति दीर्घतमसोऽर्कोऽन्त्यः । सामराजं वा । सामराजान्त्यपक्षे माध्यंदिने पृष्ठस्य स्थाने पृष्ठदीर्घतमसोऽर्कमाण्डवानि सामतृचः । आर्भवे त्वं सोमे-(सा० १३२३-५)ति गायत्रं तिसृषु । आश्वसूक्त-प्रतीचीनेडंकाशीतहाविष्कृतानि सामतृचः । त्वं ह्यङ्ग दैव्य (सा० ६३८-९) पवस्व देववीतय (सा० १३२६-८) इति सौपर्ण-वैश्वमनसे एकर्चयोः । परि त्यं हर्यतं हरि- (सा० १३२९-३१)मिति गौरीवितं प्रथमायाम् । निहवयद्वाहिष्ठीयासिताद्यानि

19. B[1] °दिन° for °दिने

24. S एकस्याम् for प्रथमायाम्

सामतृचः । साध्रं तिसृषु । स्वासु विधर्म तिसृषु । उपोष्वि-(सा० १३३५-७)ति श्रुध्यम् । अन्यत् सर्वं नवमाहवत् । सर्वमेकविंशम् ॥

दशमस्याह्नः—असृक्षत प्र वाजिनः (सा० १०३४) पवमानस्य विश्वविद् (सा० ९५८) पवमानो अजीजनत् (सा० ८८९) इत्येते त्रय एकर्चाः । एते असृग्रम् (सा० ८३०-२) पवस्वेन्दो वृषा सुत (सा० ७७८-८०) इत्येतौ तृचौ । अस्य प्रत्ना-(सा० ७५५-६३) नवर्चम् । पवमानस्य ते कव (सा० ६५७-९) इति बहिष्पवमानम् । माध्यंदिने उच्चा त (सा० ६७२-४) इति गायत्रामहीयवाभीकानि । पुनानः सोमे-(सा० ६७५-६)ति उत्सेधयज्ञायज्ञीयनिषेधाः । आ जागृवि-(सा० १३५७-९)रिति गौरीवितमन्त्यम् । आर्भवे स्वादिष्ठये-(सा० ६८९-९१)ति गायत्रसंहिते । पवस्वेन्द्रमच्छे- (सा० ६९२-६)ति सफ-रोहितकूलीये । पर्यूष्वि-(सा० १३६४-६)ति श्यावाश्वौष्णिहमोकोनिधनान्धीगवानि सामतृचः । परि प्र धन्वे-(सा० १३६७-९)ति सौहविषं तिसृषु । सूर्यवतीषु वाजजिदन्त्यम् । अन्यत् सर्वं दशमाहवत् । सर्वमेकविंशम् । समानसा दशमधर्माः कार्याः ॥९॥

[ तृणवस्तोमद्वादशाहः पञ्चमः ]

तृणवस्तोमद्वादशाहमाह—

यथा पञ्चमम् ॥१०॥

इति । पूर्ववद्व्याख्येयम् ॥

अधिकारिणमाह—

तेन पुष्टिकामः परं वा जिघांसन् ॥११॥

---

2. S after श्रुध्यम् add अन्त्यम्

14. M[3] Om. श्यावाश्व···तृणव° (L. 19)

इति । स्पष्टम् । अस्य क्लृप्तिः—आदित्यानामयनीयच्छन्दोमदशरात्रवत् । स्तोमानुगुण्येनावापोद्वापौ कार्यौ । तत्र प्रथमस्याह्नः—अस्य प्रत्ना- (सा० ७५५-३) नवर्चम् । एते सोमा अभी- (सा० ११७८-८६) नवर्चम् । सोमः पुनानो- (सा० ९२४-३२) नवर्चम् । इति बहिष्पवमानम् । माध्यंदिने प्र सोमासो विपश्चित (सा० ७६४-६) इति गायत्राश्वसोमसामाशुभार्गवाणि । प्रसोम देववीतय (सा० ७६७-८) इति पञ्चद्वैगतगौङ्गवयौधाजयानि । औशनमन्त्यम् । सर्वे तृचाः । आभंवे स्वादिष्ठये- (सा० ६८९ )ति गायत्रसंहितजराबोधीयानि । अया पवस्व देवयु-(सा० ७७२)रिति पवत ( सा० ७७३ ) इति सफाक्षारे एकर्चयोः । प्र सुन्वान (सा० ७७४) इति गौरीवितमेकस्याम् । वैश्वामित्रपदनिधनशुद्धाशुद्धीयस्वारकौत्सगौतमानि । कावमन्त्यम् । अन्यत् सर्वं प्रथमाहवत् । सर्वं त्रिणवम् ॥

द्वितीयस्याह्नः—पवस्व वाचः-पवस्वेन्दो-वृषा सोम-वृषा ह्यसि (सा० ७७२-८६) एष उ (सा० १२७४-९) षड्‌ृचम् । एष वाजी (सा० १२८०-५) षड्‌ृचम् । पवमानस्य ते वयम् (सा० ७८७-९) इति बहिष्पवमानम् । माध्यंदिने वृषा पवस्वे-(सा० ९०३-५)ति गायत्रयौक्ताश्वसुरूपहरिश्रीनिधनानि । पुनानः सोमे-(सा० ६७५-६)ति समन्तदैर्घश्रवसैडमायास्यत्रिणिधनमायास्यानि । वृषा शोण (सा० ८०६-८) इति वासिष्ठमन्त्यम् । सर्वे तृचाः । आभंवे यस्ते मद (सा० ८१५-७) इति गायत्रहाविष्मते । पवस्वेन्द्रमच्छे- (सा० ६९२-६)ति शङ्कुसुज्ञाने । अयं पूषे-(सा० ८१८-२०)ति गौरीवितकौत्सभर्गक्रौञ्चानि । वृषा मतीनाम् ( सा० ८२१-३ ) इति याममन्त्यम् । सर्वे तृचाः । अन्यत् सर्वं द्वितीयाहवत् । सर्वं त्रिणवम् ॥

---

6. M[3] Om. गायत्राश्व···स्वादिष्ठयेति (L. 8)
10. B[1-2]M[3] My Om. देवयुरिति
16. B[2]M[3] कव for वयम्
24. B[2]M[3] Om. सर्वं त्रिणवम्

तृतीयस्याह्नः—दविद्युतत्या - एते - राजा-( सा० ६५४ - ६ ) तन्त्वानृ- (सा० ८३०-४०) पञ्चर्चम्। एष धिये-(सा० १२६६-७३)त्यष्टर्चम्। अपघ्न-(सा० १२७३-५)न्निषे पवस्वे-(सा० ८४१-३)ति बहिष्पवमानम्। अष्टर्चेऽन्त्याया उद्धारः। माध्यंदिने उच्चा त इति गायत्रक्षुल्लकवैष्टम्भसौमित्रैटतानि। अभि सोमे-(सा० ८५६-८)ति पौरुमद्गगौतमान्तरिक्षाष्कारणिधनकाण्वानि। तिस्रो वाच (सा० ८५९) इति अङ्गिरसांसंक्रोशोऽन्त्यः। आर्भवे तिस्रो वाच इति गायत्रपाष्ठौहैडंसैन्धुक्षितानि। आ सोता (सा० १३९४) सखाय (सा० ११५७) इति वाचःसामशौक्ते। सुतासोमे-(सा० ८७२-४)ति गौरीवितैडंत्वाष्ट्रीसामत्रिणिधनंत्वाष्ट्रीसामानि। पवित्रं त (सा० ८७५) इत्यरिष्टमन्त्यम्। अन्यत् सर्वं तृतीयाहवत्। सर्वं त्रिणवम्॥

चतुर्थस्याह्नः—प्र त-अजीजनत्-प्र यद्गा- ( सा० ८८६-९७ ) षडृचम्। आशुः-षडृचम्। हिन्वन्ति (सा० ९०४-६) इति बहिष्पवमानम्। माध्यंदिने पवस्व दक्षसाधन ( सा० ९१९-२१ ) इति गायत्राथर्वणनिधनकामानि। तवाहं सोमे-( सा० ९२२-३ )ति आष्टादंष्ट्रोत्तरार्कपुष्पाद्यबार्हदुक्थाभीशवाद्यस्वःपृष्ठाङ्गिरसानि। पुनान इति सत्रासाहीयमन्त्यम्। सर्वे तृचाः। आर्भवे परि प्रिया दिवः कवि-( सा० ९३५-७ )रिति गायत्रौर्णायवबृहद्भारद्वाजेनिधनमार्गीयवानि। त्वं ह्यङ्ग दैव्य-सोमः पुनान ऊर्मिणे-(सा० ९३८-४२)ति बृहत्कातीषादीये। पुरोजितीति नानदान्धीगवे। सोमः पवत (सा० ९४३-५) इति जनित्रमन्त्यम्। सर्वे तृचाः। अन्यत् सर्वं चतुर्थाहवत्। सर्वं त्रिणवम्। षोडशिसाम च॥

पञ्चममहः प्रकृतिवत्॥

षष्ठस्याह्नः—ज्योतिर्-असृक्षत-वीरति (सा० १०३१-४६) दशर्चम्। सना- (सा० १०४७-५६) दशर्चम्। एते सोमे-(सा० १०६१-३)ति

20. S सोमाः पवन्ते for सोमः पवते

21 M[3]S वात्सप्रम् for जनित्रम्

बहिष्पवमानम् । वीरति-दशर्चेऽन्त्योपान्त्ययोरुद्धारः । माध्यंदिने मृज्यमान इति स्वारमौक्ष्णोरन्ध्रैडमौक्ष्णोरन्ध्रवाजजितः सामतृचः । इतरे तृचाः । आर्भवे दीर्घकार्णश्रवसगौरीवितान्येकर्चानि । इतरे तृचाः । अन्यत् सर्वं षष्ठाहवत् । सर्वं त्रिणवम् ॥

सप्तमस्याह्नः—प्रका-प्रस्वा-नवर्चम् । असृग्रन्नवर्चम् । यवं यवं चतुर्ऋचम् । आ ते दक्षमिति बहिष्पवमानम् । चतुर्ऋचेऽन्त्याया उद्धारः । माध्यंदिने वृषा पवस्वेति गायत्रसन्तन्यैडंसौपर्णरोहितकूलीयानि । पुनानः सोमेति कण्वरथन्तरपौरुमद्गगौङ्गवद्विनिधनमायास्यानि । प्रो आयासीदिति प्रवद्भार्गवमन्त्यम् । सर्वे तृचाः । आर्भवे कार्तयशादुत्तरं गौतमम् । अन्यत् सर्वं सप्तमाहवत् । सर्वं त्रिणवम् ॥

अष्टमस्याह्नः—शिशुम्-एते सोमाभि-नवर्चम् । सोमः पुनानो-नवर्चम् । अपघ्नन्—अया पवस्व धारयेति बहिष्पवमानम् । माध्यंदिने अध्वर्यो अद्रिभिरिति गायत्रवैरूपाशुभार्गवविलम्बसौपर्णानि । अभि सोमेति द्विहिंकारवामदेव्यगायत्रपार्श्वहारायणपौरुहन्मनानि । धर्ता दिव इति उद्वद्भार्गवमन्त्यम् । आर्भवे पवस्व देव आयुषगिति गायत्रं तिसृषु । स्वाशिरामर्ककाक्षीवतभासानि सामतृचः । अभि द्युम्नं-प्राणा शिशुरिति ऐषिरत्रैते । अभी नो वाजसातममिति गौरीवितैडंकौत्सौदलानि । स्वासु धर्म । हिन्वन्तीति विशोविशीयमन्त्यम् । अन्यत् सर्वमष्टमाहवत् । सर्वं त्रिणवम् ॥

नवमस्याह्नः—आक्रान्-एष देवो-दशर्चम् । एष धियेत्यष्टर्चम् । इषे पवस्व-पवमानस्य ते कव इति बहिष्पवमानम् । माध्यंदिने पवमानस्य जिघ्नत इति गायत्रादारसृगिडानांसंहारऋषभपवमानाः । परीतो षीति पृष्ठकौल्मलबर्हिषसंकृतिदेवस्थानानि ।

3. B[1] Om. आर्भवे···इतरे तृचाः

असावि सोमेति दीर्घतमसोऽर्कोऽन्त्यः। सामराजं वा। सामराजान्त्यपक्षे माध्यंदिने पृष्ठस्य स्थाने पृष्ठदीर्घतमसोऽर्कमाण्डवानि सामतृचः। आर्भवे त्वं सोमेति गायत्राश्वसूक्तप्रतीचीनैडंकाशीतानि। त्वं ह्यङ्ग दैव्य-पवस्व देव वीतय इति सौपर्णवैश्वमनसे। परि त्यमिति गौरीवितसाध्रे। स्वासु विधर्म। उपोष्विति श्रुध्यमन्त्यम्। सर्वे तृचाः। अन्यत् सर्वं नवमाहवत्। सर्वं त्रिणवम्॥

दशमस्याह्नः—असृक्षत प्रवाजिनः-पवमानस्य विश्ववित्-पवमानो अजीजनत्-एते असृग्रमिन्दवः-पवस्वेन्दो वृषा सुतः-अस्य प्रत्ना-नवर्चम्। पवमानस्य ते कव इति बहिष्पवमानम्। माध्यंदिने उच्चा त इति गायत्रामहीयवाजिगाभीकानि। पुनानः सोमेति रौरवोत्सेधयज्ञायज्ञीयनिषेधाः। आ जागृविरिति गौरीवितमन्त्यम्। सर्वे तृचाः। आर्भवे संहितादुत्तरं सुरूपम्। अन्यत् सर्वं दशमाहवत्। सर्वं त्रिणवम्। समानसा दशमधर्माः कर्तव्याः॥११॥

[ त्रयस्त्रिंशस्तोमद्वादशाहः षष्ठः ]

त्रयस्त्रिंशस्तोमद्वादशाहमाह—

**यथा षष्ठम् ॥१२॥**

इति। पूर्ववद्व्याख्येयम् ॥१२॥

अधिकारिणमाह—

**तेन प्रतिष्ठाकामः ॥१३॥**

इति। यजेतेत्यनुवर्तते। अस्य क्लृप्तिः—आदित्यानामयनीयच्छन्दोमदशाहवत्। स्तोमानुगुण्येन आवापोद्वापौ कार्यौ। तत्र प्रथमस्याह्नः—अस्य प्रत्ना-नवर्चम्। एते सोमाभी-नवर्चम्।
24 सोमः पुनानो-नवर्चम्। प्र ते धारा असश्चुतः-पवमानस्य ते

23. $B^2M^3$ Om. एते···बहिष्पवमानम् (P. 311, L. 1)

24. $B^1$ Om. सोमः पुनानो नवर्चम्

कव-इति बहिष्पवमानम् । चतुर्ऋचेऽन्त्याया उद्धारः । माध्यंदिने प्र सोमासो विपश्चित इति गायत्राश्वसोमसामाशुभार्गवाणि । प्र सोम देववीतय इति पञ्चद्वैगतद्विहिंकारवामदेव्यगौङ्गवपौरुहन्मनयौधाजयानि । स्वास्वौशनमन्त्यम् । आर्भवे स्वादिष्ठयेति गायत्रसंहितजराबोधीयानि । अया पवस्व-पवत-इति सफाक्षारे एकर्चयोः । प्र सुन्वान इति गौरीवितमेकस्याम् । वैश्वामित्रपदनिधनशुद्धाशुद्धीयस्वारकौत्ससाध्राकूपारगौतमानि । कावमन्त्यम् । अन्यत् सर्वं प्रथमाहवत् । सर्वं त्रयस्त्रिंशम् ॥

द्वितीयस्याह्नः—पवस्व वाचः—पवस्वेन्दो-वृषा सोम-वृषा ह्यसि-एष देवो-दशर्चम् । एष धियेत्यष्टर्चम् । पवमानस्य ते वयम् इति बहिष्पवमानम् । माध्यंदिने वृषा पवस्वेति गायत्रयौक्ताश्वसुरूपहरिश्रीनिधनानि । पुनानः सोमेति समन्तदैर्घश्रवसपृष्ठकौल्मलबर्हिषैडमायास्यत्रिणिधनमायास्यानि । वृषा शोण इति वासिष्ठमन्त्यम् । सर्वे तृचाः । आर्भवे यस्ते मद इति गायत्रहाविष्मतशाम्मदद्वावसुनिधनानि । पवस्वेन्द्रमच्छेति शङ्कुसुज्ञाने । अयं पूषेति गौरीवितैडंकौत्सश्यावाश्वगर्गाः । वृषा मतीनामिति याममन्त्यम् । सर्वे तृचाः । अन्यत् सर्वं द्वितीयाहवत् । सर्वं त्रयस्त्रिंशम् ॥

तृतीयस्याह्नः—दवि-एते राजा-तन्त्वानृम्णावि-पञ्चर्चम् । असृग्रन्नवर्चम् । यवंयव-चतुर्ऋचम् । अपघ्नन्-इषे पवस्वेति बहिष्पवमानम् । माध्यंदिने उच्चा त इति गायत्रक्षुल्लकवैष्टम्भसौमित्रैटतानि । अभि सोमेति पौरुमद्गसदोविशीयगौतमान्तरिक्षमैधातिथाष्कारणिधनकाण्वानि । तिस्रो वाच इति अङ्गिरसांसंक्रोशोऽन्त्यः । सर्वे तृचाः । आर्भवे तिस्रो वाच इति गायत्रपाष्ठौहैडंसैन्धुक्षितानि । आसोता-सखाय इति वाचःसामशौक्ते । सुतासो

11. M³B³ कवे for वयम्

मेति गौरीवितसाध्रस्वारंत्वाष्ट्रीसामत्रिणिधनत्वाष्ट्रीसामाभ्यासत्वाष्ट्रीसामानि । पवित्रन्त इत्यरिष्टमन्त्यम् । सर्वे तृचाः । अन्यत् सर्वं तृतीयाहवत् । सर्वं त्रयस्त्रिंशम् ॥

चतुर्थस्याह्नः—प्र त-अजीजनत् प्रयद्गा- षड्डृचम् । आशुष्षड्डृचम् । बभ्रुष्षड्डृचम् । प्रस्वा-नवर्चम् । हिन्वन्तीति बहिष्पवमानम् । प्रस्वा-नवर्चे आन्त्यं तृचमुद्धरेत् । माध्यंदिने पवस्व दक्षेति गायत्राथर्वणनिधनकामादारसृजः । तवाहं सोमेति आष्टादंष्ट्रोत्तरार्कपुष्पाद्यबार्हदुक्थमाण्डवाभीशवाद्यस्वःपृष्ठाङ्गिरसानि । पुनान इति सत्रासाहीयमन्त्यम् । सर्वे तृचाः । आर्भवे परि प्रिया दिवः कविरिति गायत्रौर्णायवबृहद्भारद्वाजनिधनमार्गीयवाणि । त्वं ह्यङ्ग दैव्य-सोमः पुनान इति बृहत्कातीषादीये । पुरोजितीति नानदैडशुद्धाशुद्धीयाकूपारान्धीगवानि । सोमः पवत इति वात्सप्रमन्त्यम् । सर्वे तृचाः । अन्यत् सर्वं चतुर्थाहवत् । सर्वं त्रयस्त्रिंशम् । षोडशिसाम च ॥

पञ्चमस्याह्नः—गोविद्-विश्वविद्-दधन्विषु-सप्तर्चम् । प्रकविः सप्तर्चम् । यवंयवं-चतुर्ऋचम् । अयावीति-अपघ्नन्-यास्ते धारेति बहिष्पवमानम् । माध्यंदिने अर्षा सोमेति गायत्रयण्वशाकलवार्शानि । सोम उष्वेति मानवानूपवैष्णवाद्ययौक्तस्रुचवाम्राग्नेस्त्रिणिधनानि । यत्सोमचित्रमिति शैशवमन्त्यम् । सर्वे तृचाः । आर्भवे असाव्यंशुरिति गायत्रसंतन्यध्यर्धेडंसोमसामगौषूक्तानि । अन्यत् सर्वं पञ्चमाहवत् । सर्वं त्रयस्त्रिंशम् ॥

षष्ठमहः प्रकृतिवत् ॥

---

13. B[1] जनित्रम् for वात्सप्रम्

15. M[3] Om. प्रकविः सप्तर्चम्

सप्तमस्याह्नः—प्रका-प्रस्वा-नवर्चम् । असृग्रन्नवर्चम् । प्रयद्गा-षड्टचम् । यवंयवं-चतुर्ऋचम् । आ ते दक्षमिति बहिष्पवमानम् । चतुर्ऋचेऽन्त्याया उद्धारः । माध्यंदिने वृषा पवस्वेति गायत्रसन्तन्यैडंसौपर्णरोहितकूलीयगौषूक्तशाकलानि । पुनानः सोमेति पौरुमद्गकण्वरथन्तरगौङ्गवद्विनिधनमायास्यानि । प्रो अयासीदिति प्रवद्भार्गवमन्त्यम् । सर्वे तृचाः । आर्भवे कार्तयशादुत्तरं स्वारंत्वाष्ट्रीसामानिधनंत्वाष्ट्रीसामगौतमानि आवपेत् । सर्वं त्रयस्त्रिंशम् ॥

अष्टमस्याह्नः—शिशुम्-एते सोमाभी-नवर्चम् । सोमः पुनानो-नवर्चम् । सोमा असृग्रन्नवर्चम् । अया पवस्व धारयेति बहिष्पवमानम् । माध्यंदिने अध्वर्यो अद्रिभिस्सुतमिति गायत्रवैरूपाशुभार्गवमार्गीयवसौमित्रसाकमश्वविलम्बसौपर्णानि । अभि सोमेति द्विहिंकारवामदेव्यगायत्रपार्श्वपौरुहन्मनानि । धर्ता दिव इति उद्वद्भार्गवमन्त्यम् । आर्भवे पवस्व देव आयुषगिति गायत्रस्वाशिरामर्कगायत्रसामासितानि । अभि द्युम्नं-प्राणाशिशुरिति ऐषिरत्रैते । अभी नो वाजसातममिति गौरीवितैडंकौत्सौदलरयिष्ठानि । स्वासु धर्म । हिन्वन्तीति विशोविशीयमन्त्यम् । अन्यत् सर्वमष्टमाहवत् । सर्वं त्रयस्त्रिंशम् ॥

नवमस्याह्नः—अक्रान्-एष देवो-दशर्चम् । एष उ षड्टचम् । एष वाजी-षड्टचम् । एष कविष्षड्टचम् । पवमानस्य ते कव इति बहिष्पवमानम् । दशर्चेऽन्त्याया उद्धारः । माध्यंदिने पृष्ठस्य पवमानस्य जिघ्नत इति गायत्रादारसृगिडानांसंक्षारऋषभपव-

5. S निधनायास्यानि for °निधनमायास्यानि

6. B[1]My. Om. सर्वे…भार्गवमन्त्यम् (L. 13)

13. M[3] गायत्री° for गायत्र°

18. M[3]B[2] Om. एष कविष्षड्टचम्

19. S Om. पृष्ठस्य

मानाः। परीतो षीति पृष्ठं तिसृषु। कौल्मलबर्हिषार्कपुष्पाद्यदैर्घश्रवसानि सामतृचः। देवस्थानसंस्कृतिवैयश्वाभीशवोत्तराणि तृचेषु। असावि सोमेति दीर्घतमसोऽर्कोऽन्त्यः। सामराजं वा। सामराजान्त्यपक्षे माध्यंदिने पृष्ठस्य स्थाने पृष्ठदीर्घतमसोऽर्कमाण्डवानि सामतृचः। आर्भवे त्वं सोमेति गायत्रं तिसृषु। अश्वसूक्तप्रतीचीनेडंकाशीतहाविष्कृतानि। त्वं ह्यङ्ग दैव्य-पवस्व देववीतय इति सौपर्णवैश्वमनसे एकर्चयोः। परि त्यमिति गौरीवितमेकस्याम्। निहवयद्वाहिष्ठीयासिताद्यसाध्राणि। स्वासु विधर्म। उपोष्वित्ति श्रुध्यमन्त्यम्। अन्यत् सर्वं नवमाहवत्। सर्वं त्रयस्त्रिंशम्॥

दशमस्याह्नः—असृक्षत प्र वाजिनः—पवमानस्य विश्ववित्-पवमानो अजीजनत्-एते असृग्रमिन्दवः-पवस्वेन्दो वृषा सुतः—सोमः पुनानो-नवर्चम्। अस्य प्रत्ना-नवर्चम्। इति बहिष्पवमानम्। माध्यंदिने उच्चा ते-गायत्रामहीयवाजिगाभीकानि। पुनानः सोमेति गौरवयौधाजयदैर्घश्रवसोत्सेधयज्ञायज्ञीयनिषेधाः। आजाग्निरिति गौरीवितमन्त्यम्। सर्वे तृचाः। आर्भवे स्वादिष्ठयेति गायत्रसंहितकाक्षीवतभासजराबोधीयानि। पवस्वेन्द्रमच्छेति सफरोहितकूलीये। पर्यूष्विति श्यावाश्वान्धीगवे। परि प्र धन्वेति सौहविषम्। सूर्यवतीषु वाजजिदन्त्यम्। सर्वे तृचाः। अन्यत् सर्वं दशमाहवत्। सर्वं त्रयस्त्रिंशम्। समानसा दशमधर्माः कार्याः ॥१३॥

[ चत्वारिंशस्तोमद्वादशाहः सप्तमः ]

अथ चत्वारिंशस्तोमद्वादशाहमाह—

**यथा सप्तमम् ॥१४॥**

अधिकारिणमाह—

**तेन तेजस्कामो ब्रह्मवर्चसकामो वा ॥१५॥**

---

5. B[1] गायत्राश्व° for गायत्रं तिसृषु। अश्व°

19. M[8] कर्तव्याः for कार्याः

इति । यजेतेत्यनुवर्तते । अस्य क्लृप्तिः—अङ्गिरसामयनच्छन्दोमदशरात्रवत् । स्तोमानुगुण्येनावापोद्वापौ कार्यौ । तत्र प्रथमस्याह्नः—अस्य प्रत्ना-नवर्चम् । एते सोमा अभी-नवर्चम् । अग्न आयूंषि-पवमानस्य ते कव इति बहिष्पवमानम् । माध्यंदिने प्र सोमासो विपश्चित इति गायत्राश्वसोमसामाशुभार्गवाणि । प्र सोम देववीतय इति पञ्चगौङ्गवयौधाजयानि । स्वास्वौशनमन्त्यम् । आर्भवे स्वादिष्ठयेति गायत्रसंहिते । पवस्वेन्द्रमच्छेति सफाद्वारे । प्र सुन्वान इति गौरीवितगौतमपदनिधनशुद्धाशुद्धीयानि । कावमन्त्यम् । सर्वे तृचाः । अन्यत् सर्वं प्रथमाहवत् । सर्वं चतुर्विंशम् । अङ्गिरसामयनच्छन्दोमदशरात्रस्य प्रथमाहवदियं क्लृप्तिः ॥

द्वितीयस्याह्नः—पवस्व वाचः—पवस्वेन्दो-वृषा सोम-वृषा-ह्यसि-एष उ षडृचम् । अया पवस्व-पवमानस्य ते वयम् इति बहिष्पवमानम् । माध्यंदिने वृषा पवस्वेति गायत्रयौक्ताश्वे । पुनानः सोमेति पृष्ठयशःकौल्मलबर्हिषैडमायास्यत्रिणिधनमायास्यानि । वृषा शोण इति वासिष्ठमन्त्यम् । आर्भवे यस्ते मद इति गायत्रहाविष्मते । पवस्वेन्द्रमच्छेति शङ्कुसुज्ञाने । अयं पूषेति गौरीवितभर्गक्रौञ्चोत्तराणि । वृषा मतीनामिति याममन्त्यम् । सर्वे तृचाः । अन्यत् सर्वं द्वितीयाहवत् । सर्वं चतुर्विंशम् ॥

तृतीयस्याह्नः—दवि-एते राजा-तन्त्वानृ-पञ्चर्चम् । एष धियेति अष्टर्चम् । इषे पवस्व धारयेति बहिष्पवमानम् । अष्टर्चेऽन्त्याया उद्धारः । माध्यंदिने उच्चा त इति गायत्रचुल्लकवैष्टम्भसौमित्राणि । अभि सोमेति पौरुमद्गगौतमान्तरिक्षाष्कारणिधनकाण्वानि । तिस्रो वाच इत्यङ्गिरसांसंक्रोशोऽन्त्यः । सर्वे तृचाः । आर्भवे तिस्रो वाच इति

8. S °निधनं° for °निधन°

10. B[1]My °दशत्रवद् for °दशत्रस्य प्रथमाहवद्

12. B[1]My कव for वयम्

23. B[2] ends with संक्रोशोऽन्त्यः । The last three leaves are broken at both ends

गायत्रपाष्ठौहे । आसोता-सखाय इति वाचःसामशौक्ते । सुतासो मेति गौरीवितैडंत्वाष्ट्रीसामत्रिणिधनत्वाष्ट्रीसामानि । पवित्रं त इत्यरिष्टमन्त्यम् । सर्वे तृचाः । अन्यत् सर्वं तृतीयाहवत् । सर्वं चतुर्विंशम् ॥

चतुर्थस्याह्नः—प्र त-अजीजनत्-प्रयद्गा-षडृचम् । आशुष्षडृचम् । बभ्रुष्षडृचे आद्यस्तृचः । हिन्वन्तीति बहिष्पवमानम् । माध्यंदिने पवस्व दक्षेति गायत्राथर्वणनिधनकामानि । तवाहं सोमेति आष्टादंष्ट्रोत्तरार्कपुष्पाभीशवाद्यस्वःपृष्ठाङ्गिरसानि । पुनानः इति सत्रासाहीयमन्त्यम् । सर्वे तृचाः । आर्भवे परि प्रिया दिवः कविरिति गायत्रौर्णायवबृहद्भारद्वाजानि । त्वं ह्यङ्ग दैव्य-सोमः पुनान ऊर्मिणेति बृहत्कातीषादीये । पुरोजितीति नानदान्धीगवे । सोमः पवत इति वात्सप्रमन्त्यम् । सर्वे तृचाः । अन्यत् सर्वं चतुर्थाहवत् । सर्वं चतुर्विंशम् । षोडशिसाम च ॥

पञ्चमस्याह्नः—गोविद् - विश्वविद् - अधन्विषुः - सप्तर्चम् । प्र कविः-सप्तर्चम् । यवं यवं चतुर्ऋचम् । यास्त इति बहिष्पवमानम् । प्रकविः सप्तर्चे अन्त्यं तृचमुद्धरेत् । माध्यंदिने अर्षा सोमेति गायत्रयण्वशाकलवार्शानि । सोम उ ष्वेति मानवानूपाग्नेस्त्रिणिधनानि । यत्सोम चित्रमिति शैशवमन्त्यम् । सर्वे तृचाः । आर्भवे असाव्यंशुरिति गायत्रसन्तनिनी । अभि द्युम्नं प्राणा शिशुरिति च्यावनक्रोशे । पवस्व वाजसातय इति गौरीविताश्वत्रासदस्यवाष्टेडपदस्तोभास्तृचेषु । इन्दुर्वाजीति दाशस्पत्यमन्त्यम् । सर्वे तृचाः । अन्यत् सर्वं पञ्चमाहवत् । सर्वं चतुर्विंशम् ॥

---

2. M³ °सामनी for °साम° and Om. त्रिणिधनत्वाष्ट्रीसामानि

8. M³ Om. अर्कपुष्प

21. B¹ Om. तृचेषु

षष्ठस्याह्नः—ज्योतिर्-असृक्ष-त्रीरति-दशर्चम् । सनाच-सोमैकर्चम् । तरत्सम-चतुर्ऋचम् । एते सोमेति बहिष्पवमानम् । माध्यंदिने इन्द्रायेन्दविति गायत्रैषोवृधीयरैवत्यः । मृज्यमान इति स्वारमौक्ष्णोरन्ध्रवाजजिद्वरुणसामगोष्ठाः । एतमु त्यमितीहवद्वामदेव्यमन्त्यम् । सर्वे तृचाः । आर्भवे परिस्वान इति गायत्रतृतीयवैदन्वते । स सु-तं वः सखेति दीर्घकार्णश्रवसे । सोमाः पवन्त इति गौरीवितमधश्चुन्निधनैडंक्रौञ्चानि । अया पवा पवस्वेति श्नौष्टमन्त्यम् । सर्वे तृचाः । अन्यत् सर्वं षष्ठाहवत् । सर्वं चतुर्विंशम् ॥

सप्तममहः प्रकृतिवत् ॥

अष्टमस्याह्नः—शिशुम्-एते सोमाभि-नवर्चम् । सोमः पुनानो-नवर्चम् । अया पवस्व धारयेति बहिष्पवमानम् । माध्यंदिने अध्वर्यो अद्रिभिः सुतमिति गायत्रवैरूपाशुभार्गवमार्गीयवानि । अभि सोमेति द्विहिंकारवामदेव्यगायत्रपार्श्वपौरुहन्मनानि । धर्ता दिव इति उद्वद्भार्गवमन्त्यम् । सर्वे तृचाः । आर्भवे पवस्व देव आयुषगिति गायत्रं तिसृषु । स्वाशिरामर्ककाक्षीवतभासानि सामतृचः । अभि द्युम्नं प्राणा शिशुरिति ऐषिरत्रैते । अभी नो वाजसातममिति गौरीवितैडंकौत्से । स्वासु धर्म । हिन्वन्तीति विशोविशीयमन्त्यम् । सर्वे तृचाः । अन्यत् सर्वमष्टमाहवत् । सर्वं चतुर्विंशम् ॥

नवमस्याह्नः—अक्रान्-एष देवो-दशर्चम् । एष धियेत्यष्टर्चम् । पवमानस्य ते कव इति बहिष्पवमानम् । माध्यंदिने पवमानस्य जिघ्नत इति गायत्रादारसृगृषभपवमानाः । परीतो षीति पृष्ठसंकृतिदैर्घश्रवसदेवस्थानानि तृचेषु । असावि सोमेति दीर्घतमसोऽर्कोऽन्त्यः । सामराजं वा । सामराजान्त्यपक्षे पृष्ठस्य स्थाने

21. M[3] Om. पृष्ठ°

22. B[1] Om. °देवस्थान°

पृष्ठदीर्घतमसोऽर्कमाण्डवानि सामतृचः । आभवे त्वं सोमेति गायत्रं तिसृषु । आश्वसूक्तप्रतीचीनेडंकाशीतहाविष्मतानि सामतृचः । त्वं ह्यङ्ग दैव्य-पवस्व देववीतय इति सौपर्णवैश्वमनसे । परि त्यमिति गौरीवितसाध्रे । स्वासु धर्म । उपोषु जातमिति श्रुध्यमन्त्यम् । सर्वे तृचाः । अन्यत् सर्वं नवमाहवत् । सर्वं चतुर्विंशम् ॥

दशममहः प्रकृतिवत् ॥ अग्निष्टोममपि चतुर्विंशम् ॥१५॥

[ चतुश्चत्वारिंशस्तोमद्वादशाहोऽष्टमः ]

चतुश्चत्वारिंशस्तोमद्वादशाहमाह—

**यथाष्टमम् ॥१६॥**

इति । पूर्ववद्व्याख्येयम् ॥१६॥

अधिकारिणमाह—

**तेनौजस्कामो वीर्यकामो वा ॥१७॥**

इति । यजेतेत्यनुवर्तते । अस्य क्लृप्तिः—आदित्यानामयनीयच्छन्दोमदशरात्रवत् । स्तोमानुगुण्येनावापोद्वापौ कार्यौ । तत्र प्रथमस्याह्नः—अस्य प्रत्ना-नवर्चम् । एते सोमाभी-नवर्चम् । सोमः पुनानो-नवर्चम् । सोमा असृग्रन्नवर्चम् । पवस्ववृ-पञ्चर्चम् । पवमानस्य ते कव इति बहिष्पवमानम् । माध्यंदिने प्र सोमासो विपश्चित इति गायत्राश्वसोमसामाशुभार्गवमार्गीयवाभीकैडंसौपर्णरोहितकूलीयानि । प्र सोम देववीतय इति पञ्चमेकस्याम् । तस्यामेव द्वैगतम् । पौरुहन्मनहारायणद्विहिंकारवामदेव्यगौङ्गवयौधाजयानि । स्वास्वौशनमन्त्यम् । आभवे स्वादिष्ठयेति गायत्रसंहितकाक्षीवतभासशैशवजराबोधीयानि । पवस्वेन्द्रमच्छेति सफाचारे एकर्चयोः ।

---

2. B[1]My हाविष्कृतानि for हाविष्मतानि

4. B[1] विधर्म for धर्म

22. B[1] °संहिते for °संहित°

प्र सुन्वान इति गौरीवितवैश्वामित्रपदनिधनशुद्धाशुद्धीयस्वारकौत्सौरुचयौदलगौतमानि । कावमन्त्यम् । अन्यत् सर्वं प्रथमाहवत् । सर्वं चतुश्चत्वारिंशम् ॥

द्वितीयस्याह्नः— पवस्व वाचः-पवस्वेन्दो-वृषा सोम - वृषा ह्यसि एष देवो- दशर्चम् । एष उ षड्ृचम् । एष वाजी-षड्ृचम् । एष कविः-षड्ृचम् । उत्ते शुष्मासो अस्थू-चतुर्ऋचम् । पवमानस्य ते वयम् इति बहिष्पवमानम् । दशर्चस्यान्त्यं तृचमुद्धरेत् । माध्यंदिने वृषा पवस्वेति गायत्रयौक्ताश्वसुरूपहरिश्रीनिधनाजिगस्वारसौपर्णयौक्ताश्वऋषभपवमानाः । पुनानः सोमेति समन्तदैर्घश्रवसे प्रथमायाम् । पृष्ठयशःकौल्मलबर्हिषैडमायास्यत्रिणिधनमायास्यानि । वृषा शोण इति वासिष्ठमन्त्यम् । आर्भवे यस्ते मद इति गायत्रहाविष्मतशाम्मददावसुनिधनाध्यर्धेडंसोमसामाश्वसूक्तानि । एष स्य धारया-पवस्व देववोतय इति शङ्कुसुज्ञाने एकर्चयोः । पवस्वेन्द्रमच्छेति शङ्कुसुज्ञान इति वा । अयं पूषति गौरोवितैडंकौत्सभर्गासितयद्वाहिष्ठीयक्रौञ्चाद्यक्रौञ्चोत्तराणि । वृषा मतोनामिति याममन्त्यम् । अन्यत् सर्वं द्वितीयाहवत् । सर्वं चतुश्चत्वारिंशम् ॥

तृतीयस्याह्नः—दवि-एते राजा - तन्त्वानृम्णानि - पञ्चर्चम् । एष धियेत्यष्टर्चम् । असृग्रन्नवर्चम् । पवमाना असृक्षत-अपघ्नन्-प्र ते धाराश्चतुर्ऋचम् । इषेति बहिष्पवमानम् । माध्यंदिने उच्चा त इति गायत्रक्षुल्लकवैष्टम्भसौभित्रैटतसाकमश्वविलम्बसौपर्णाभीकानि । अभिसोमेति पौरुमद्गं प्रथमायाम् । सदोविशीयरौरवोभयतस्तोभगौतमान्तरिक्षाच्छिद्रमैधातिथानि । आष्कारणिधनमध्यास्यायाम् । तिस्रो वाच इति अङ्गिरसां संक्रोशोऽन्त्यः । आर्भवे तिस्रो वाच उदीरत इति गायत्रपाष्ठौहैडंसैन्धुक्षितागनेरकौशनसंहितानि । आ सोता

7. $M^{3}$ कवे for वयम्

सखाय इति वाचःसामशौक्ते एकर्चयोः। सुतासो मेति गौरीवितसाध्रश्यावाश्वैडंत्वाष्ट्रीसामस्वारंत्वाष्ट्रीसामत्रिणिधनत्वाष्ट्रीसामाभ्यासंत्वाष्ट्रीसामानि। पवित्रं त इत्यरिष्टमन्त्यम्। अन्यत् सर्वं तृतीयाहवत्। सर्वं चत्वारिंशम्॥

चतुर्थस्याह्नः—प्र त-अजीजनत्-प्रयद्वा-षड्चम्। आशुष्षड्चम्। बभ्रुःषड्चम्। प्रस्वा-नवर्चम्। एष धियेत्यष्टर्चम्। हिन्वन्तीति बहिष्पवमानम्। माध्यंदिने पवस्व दक्षेति गायत्राथर्वणनिधनकामादारसृचः। तवाहं सोमेति आष्टादंष्ट्रोत्तरार्कपुष्पाद्ये प्रथमायाम्। पौरुहन्मनद्वैगतगौङ्गवबार्हदुक्थमाण्डवसमन्तयौधाजयाभीशवस्वःपृष्ठाङ्गिरसानि। पुनान इति सत्रासाहीयमन्त्यम्। आर्भवे परि प्रिया दिवः कविरिति गायत्रौशानयत्रबृहद्भारद्वाजमार्गीयवानि। त्वं ह्यङ्ग दैव्य-सोमः पुनान ऊर्मिणेति बृहत्कातीषादीये एकर्चयोः। पुरोजतीति नानदैडंशुद्धाशुद्धीयान्धीगववैतहव्यसोमसामक्रौञ्चाद्यमधुश्चुन्निधनाकूपारबृहदाग्नेयानि। सोमः पवत इति वात्सप्रमन्त्यम्। अन्यत् सर्वं चतुर्थाहवत्। सर्वं चतुश्चत्वारिंशम्। षोडशिसाम च॥

पञ्चमस्याह्नः—गोविद् - विश्वजिद्-अधन्विषुः - सप्तर्चम्। प्र कविः-सप्तर्चम्। यवं यवं-चतुर्ऋचम्। सोमा असृग्रन्नवर्चम्। उत्तेशुपञ्चर्चम्। अयावीती-यास्ते धारेति बहिष्पवमानम्। माध्यंदिने अर्षा सोमेति गायत्रसंतनियएवशाकलवार्शवार्षाहरापत्यानि। सोम उ ष्वेति वैष्णवोत्तरवैष्णवाद्ये प्रथमायाम्। मानवोत्तरानूपवाभ्रयौक्तस्रुचहारायणाग्नेस्त्रिणिधनानि। यत्सोम चित्रमिति शैशवमन्त्यम्। आर्भवे असाव्यंशुरिति गायत्राध्यर्धेडंसोमसामगौषूक्तैडंसैन्धुक्षितानि।

1. B[1] Om. स्वारंत्वाष्ट्रीसामत्रिणिधनत्वाष्ट्रीसाम ; M[3] Om. त्रिणिधनत्वाष्ट्रीसाम°

5. M[3] Om. आशुष्षड्चम्

6. S प्रसुन्वा° for प्रस्वा°

13. B[1] Om. ऐडं

20. M[3] अन्त्ये for आद्ये

अभि द्युम्नं-प्राणा शिशुरिति च्यावनक्रोशे एकर्चयोः । पवस्व वाजसातय इति गौरीवितऋषभशाक्वरात्रेयरयिष्ठपार्थाश्वत्रासदस्यवान्धीगवश्यावाश्वाष्टेडपदस्तोभाः । इन्दुर्वाजीति दाशस्पत्यम् । अन्यत् सर्वं पञ्चमाहवत् । सर्वं चतुश्चत्वारिंशम् ॥

षष्ठस्याह्नः—ज्योतिर्-असृक्षत-वीरति-दशर्चम् । सना-दशर्चम् । तरत्सम-चतुर्ऋचम् । एष कविः-षडृचम् । ससुतः-षडृचम् । एते सोमेति बहिष्पवमानम् । ससुतः-षडृचे अन्त्याया उद्धारः । माध्यंदिने इन्द्रायेन्दविति गायत्रेषोवृधीयक्रौञ्चदार्ढ्यच्युतवाजदावर्यरैवताश्वसूक्तानि । मृज्यमान इति ऐडमौक्ष्णोरन्ध्रस्वारमौक्ष्णोरन्ध्रे प्रथमायाम् । समन्तवाजजिद्वरुणसामार्कपुष्पोत्तरगोष्ठत्रिणिधनमायास्यानि । एतमु त्यमिति इहवद्वामदेव्यमन्त्यम् । आभवे परिस्वान इति गायत्रतृतीयवैदन्वताद्यवैदन्वतहाविष्मतचतुर्थवैदन्वतेहवद्दैध्मवाहप्रतीचीनैडंकाशीतपर्यांसि । स सु-तं वः सखेति दीर्घकार्णश्रवसे एकर्चयोः । सोमाः पवन्त इति गौरीवितमधुश्चुन्निधनान्धीगववाङ्निधनक्रौञ्चैडंक्रौञ्चानि । अया पवा पवस्वेति श्नौष्टमन्त्यम् । अन्यत् सर्वं षष्ठाहवत् । सर्वं चतुश्चत्वारिंशम् ॥

सप्तमस्याह्नः—प्रका-प्रस्वा-नवर्चम् । असृग्रं-नवर्चम् । प्रयद्गा-षडृचम् । आशुः-षडृचम् । एष धियेत्यष्टर्चम् । आ ते दक्षमिति बहिष्पवमानम् । माध्यंदिने वृषा पवस्वेति गायत्रसंतन्यैडंसौपर्णरोहितकूलीयगौषूक्तशाकलाजिगानि । पुनानः सोमेति गौङ्गव-

5. M[3] Om. सना-दशर्चम्

8. S वाजि° for वाज°

10. B[1] वाजि° for वाज°

14. M[3] Om. °आन्धीगववाङ्निधन°